Nrisingha
Skandapuraniya Shiva bhaktavilas
स्कन्दपुराणीय शिवभक्तविलास
Sanskrit
Paper – Printed
N.A.
16 L Folio
12.5" X 6.4"
Complete

अथ स्कन्दोपपुराणीय शिवभक्तविलासः प्रारभ्यते

श्रीगणेशायनमः वन्देशम्भुंविरंचिप्रमुखसुरशिरोरत्नकोटीरकोटि प्रोद्यन्माणिक्यनीराजितचरणनखंवेदवेदाङ्गमूलम् सोमंसोमार्द्ध
चूडंविमलसुरसरिद्वीचिरोचिःकपर्दं विद्यामूर्त्तिवरेण्यंवरदमभिमतप्राप्तयेविश्वनाथम् १ श्रीमातुरुज्वलसरोजरुचौभजामि पादौप
टीरनवपल्लव तल्लजाभौ यत्पीठपूजनविधिर्भवतित्रयाणां सर्गस्थितिप्रलयकारिसुरोत्तमानाम् २ अन्तरायकरिकेसरीभवन्यो
गजाननइतिप्रथामगात् तंविचित्रचरितंविनायकं नायकंसकलसंपदांभजे ३ नृत्यतिकलापिनिनिजे लम्बोदरपुष्करोत्थघननिन
दैः रविनयनैस्तंपश्यन् शक्तिधरःषण्मुखोजयति ४ सुब्रह्मण्यंपितरं गिरिजाम्बांमातरंगुरुंगंगाम् भैरवमादित्यमथो विष्णुंव्या
सादिकान्मुनीन्नत्वा ५ स्कन्दोपपुराणकथा मुनिवरहरशर्म्मनिर्मितापुण्या भक्तविलासाभिख्या भगवद्भजनोचितापिचान्व
र्था ६ दिव्यामृतफलदात्री दलितदुरितादेवदेवकमनीया साधुजनचित्तरञ्जन संजीवनमूलिकासरसभावा ७ श्रीमदद्वैतम
तोत्राब्धि कौस्तुभेनविविच्यते मानवल्लीन्द्रसिंहेन महेश्वरमुदेमया ८ कलापकम् मिथ्यावादरजोमलीमसतयादुष्टामशिष्टो
चिते ष्वालापेष्वपिचाशनेषुनिरतामेतांरसज्ञांमम श्रीमच्छंकरभक्तपावनकथाभागीरथीमज्जनैः शुद्धांकर्त्तुमहंयतेबुधवराः
क्षाम्यन्तुमेसाहसम् ९ मातर्भारतिमहिते मयिकलयकटाक्षवीचिसंचारम् व्याख्यायेनभवित्री भक्तविलासप्रकाशिकाख्यामे
१०॥ ॥ॐ इहखलुनिखिलश्रुतिस्मृतीतिहासपुराणादिपर्यालोचनपरिणत स्वान्तैरशेषवर्णाश्रम धर्म्म मर्म्मपारगैरत्रामुत्रच
भोगमोक्षाभिलाषुकैः पुरुषैरभिल षणीयेषु धर्म्मार्थकाममोक्षेषुमोक्षएव परमपुरुषार्थः नसपुनरावर्त्तते तमेवविदित्वाति
मृत्युमेति यंप्राप्यननिवर्त्तन्ते तद्धामपरमंममेत्यादि श्रुतिस्मृतिभिः तस्य नित्यत्वोपगमात् इतरेषांच तद्यथेहकर्मचितोलो
कःक्षीयतएव मेवामुत्र पुण्यचितोलोकःक्षीयतइतिश्रुत्या यज्जन्यं तदनित्यमिति न्यायवत्याभङ्गुरत्वावगमाच्च सच मोक्षप
दार्थः तान्त्रिकमतभेदेन दुःखध्वंसाज्ञाननाश परमानन्द स्फूर्त्तिरूप नानाविकल्पजालजटिलोपि निरतिशयाद्वैतवाद सि

इपरमात्मैक्यरूपएव भाष्यकारादिभिरभिमतोयुक्तः प्रतिपादयितुं तत्रच साधनाकांक्षायाम् विधिवदधीतसाङ्गस्वाध्यायंश
मादिषट्कसपन्नमधिकारिणंप्रति प्रवर्त्तमानाः आत्मावा अरेद्रष्टव्यः श्रोतव्योमन्तव्यो निदिध्यासितव्यः श्रोतव्यः श्रुतिवा
क्येभ्यो मन्तव्यश्चोपपत्तिभिरित्यादिविधयो विशिष्टाधिकारिणमपेक्षमाणानसर्वजनसौलभ्यसम्पादकाइतिसर्वजनोप
योगि साधनगवेषणे मन्दाधिकारिणामपि महर्षिप्रणीतस्मृतीतिहासपुराणादिविचारएव शरणीकरणीयः ननुश्रोत
व्यः श्रुतिवाक्येभ्यः यदीॐ्शृणोत्यलकॅृ्शृणोति नहिप्रवेद सुकृतस्यपन्थाम् तमेतंवेदानुवचनेन ब्राह्मणाविविदिषन्ति
इत्यादिश्रुतिभ्यः वेदवचसामेवश्रवणमननाद्युपयोगितया श्रवणाद्यधिकारस्यच विधिवदधीत साङ्गस्वाध्याय पुरुषवि
षयतयाचइतिहास पुराणादीनां कथंशरणीकरणमितिचेन्न तादृशाधिकारस्य वैदिकमात्रपरतया विधिवदध्ययनस्य
च दुष्करत्वेन तत्रसर्वेषां असामर्थ्यमालोच्य परमकारुणिकै र्बादरायणादिभि र्महर्षिभिः प्रणीतानामितिहासपुराणानां
व्यर्थतापातात् नचेष्टापत्तिः अस्यमहतोभूतस्य निश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरसइतिहासःपु
राणमित्युपक्रम्य अस्यैवैतानि सर्वाणि निश्वसितानि इतिउपसंहारस्य बृहदारण्यकोपनिषदिस्फुटमुपलभ्यमानतया
इतिहासपुराणानामपि वेदवदीश्वरनिश्वसितत्वा विशेषेणभारतंपञ्चमोवेदः पुराणंपञ्चमोवेदः वेदःप्राचेतसादासी
त्साक्षाद्रामायणात्मनेत्यादि वचनैश्च तत्वज्ञानोपयोगिश्रवणाद्यनुकूलताभावस्य स्वप्नेपि वक्तुमशक्यत्वात् नच इतिहास
पुराणादीनां वेदार्थोपबृंहकतायाइतिहासपुराणाभ्यां वेदंसमुपबृंहयेदित्यादिभिःप्रतिपादितत्वात्तदर्थोपबृंहकत्वेनगौ
णत्वात्प्रधानभूतां श्रुतिंपरित्यज्य गौणेकथमितिहास पुराणादौ प्रवृत्तिरितिवाच्यम् मुख्याधिकारिणामेव मुख्ये प्रवृत्तेर्वे
क्तव्यतया सर्वानुजिघृक्षापरिकल्पित पुराणादिवचसां सर्ववर्णाधिकारसौलभ्ये नसम्भवति सुलभोपायेतस्य अनतिक्र

मणीयत्वात् अथसुकरत्वात्पुराणादिकमेवसर्वैरुपेयं दुर्लभेस्वाध्यायाध्ययनादौमाभूत्प्रवृत्तिरिति चेदुच्यते ब्राह्मणेननिष्कारणं
षडंगोवेदोध्येतव्यः योनधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयइतिस्मरणेन स्वाध्यायाध्य
यनस्य नित्यतयातदभावेप्रत्यवायश्रवणेनच पुराणप्रवृत्तिमात्रेणतस्यनिराकर्तुमशक्यत्वात् एवंच सतिविशिष्टाधिकारिणां वे
दादिषु सर्वत्राधिकारो मंदाधिकारिणामितिहासपुराणादिष्वेवेतिव्यवस्थाऽऽदरणीया यदिचशैववैष्णवादि पुराणेषु परस्पर
विरोधदर्शनादनुपादेयत्वमुच्यतेतदा अतिरात्रेषोडशिग्रहणाग्रहणप्रतिपादकश्रुतिविरोधवदिदमपि सुपरिहार्यम् वस्तुतस्तु
पुराणानामपि नपरस्परविरुद्धार्थ प्रतिपादकतासुप्रतिपादा यथाहंवसुधा सर्वंसस्यमेतद्दिवौकसः अहंभवोभवंतश्चसर्वेना
रायणात्मकाः विभूतयस्तुयास्तस्य तासामेवपरस्परम् आधिक्यंन्यूनताबाध्य बाधकत्वेनवर्तते भवानहंचविश्वात्मन्नेकमे
वहिकारणम् जगतोस्यजगत्यर्थे भेदेनावांव्यवस्थितौ त्वयायदभयंदत्तं तद्दत्तमखिलंमया मत्तोविभिन्नमात्मानं द्रष्टुंनार्हसिशं
कर योऽहंसत्वंजगच्चेदं सदेवासुरमानुषम् अविद्यामोहितात्मानःपुरुषाभिन्नदर्शिनइति विष्णुपुराणवचनानाम् विष्णोरन्यं
तुपश्यंतियेमांब्राह्मणमेवच कुतर्कमतयोमूढाःपच्यंतेनरकेष्वधः इत्यादिभविष्यपुराणवचनानाम् सितनीलादिभेदेनयथैकंदृ
श्यतेनभः भ्रांतिदृष्टिभिरात्मापितथैकःसन्पृथक्पृथक् इत्यादियमवचनानाम् विष्णुरुद्रांतरंचैव श्रीगौर्योरंतरंतथा गङ्गागौ
र्यन्तरंचैवयोब्रूतेमूढधीस्तुसः इत्यादिस्कान्दवचनानामप्येकार्थप्रतिपादकत्वात् इत्थंचवेदवचसामिवतदर्थोपबृंहकपुराण
वचसामप्यात्मैकप्रतिपत्तिप्रयोजकतायांनिर्विवादायां आयुर्वेदधनुर्वेदादीनामिव गणेशपुराणाद्युपपुराणानामपितत्त्वज्ञानो
पयोगित्वेन प्रामाण्येनसिद्धमेवोपादेयत्वंतस्माद्यदीशृणोतीत्यादिवाक्यानां वेदवचनानिविहाय पुराणादीनि नग्राह्याणीत्य
त्रतात्पर्यम् नतु सर्वथा पुराणादीनि त्याज्यानीत्यत्र तेषामधिकारिविशेषपरतयानिरूपितत्वात्पुराण प्रतिपादितानाम

पित्रतोपवासतीर्थयात्रादीनां श्रुतिचोदितयागादीनामिव बहुवित्तव्ययायाससाध्यतया तत्फलस्य अनित्यतया बहिरङ्ग-
साधनतयाच परमेश्वरकथाश्रवणनामकीर्त्तनादिसुलभान्तरङ्गसाधनभक्तिमार्गैकबद्धादराणां उपकारक मनेकभ-
क्तसच्चरित्रपवित्रितं भक्तविलासाख्यं उपपुराणंपरमकारुणिको हरशर्म्मनामामुनिः सूतशौनकादिसम्वादमुखेनप्र-
कटीचकार अत्रच तत्वज्ञानसाधनांतरापेक्षया भक्तेरन्तरङ्गसाधनता मवलंब्य सुचरितनानाभक्तकथा विचित्राः प-
वित्राश्च निरूपिताः भक्तेरंतरंङ्गसाधनत्वञ्च श्रीमद्भागवते दशमस्कन्धे वेदस्तुतौ दुरवगमात्म तत्वनिगमायेति श्लोक-
व्याख्यावसरे भक्तिरल्पसाधनमितिवचनमनुचितं मत्वानोभक्तिंगुरुंकरोतीत्युपक्रम्य श्रुतिश्चमुक्तेरप्याधिक्यंभक्ते-
र्दर्शयतियथाहयंसर्वेदेवानमन्तिमुमुक्षवोब्रह्मवादिनश्चेति व्याख्यातंचसर्वज्ञैर्भाष्यकृद्भिः नृसिंहतापिन्यांमुक्ताअपिली-
लाविग्रहंकृत्वा भजन्त इति त्वत्कथामृतपाथोधौ विहरन्तोमहामुदः कुर्वन्तिकृतिनःकेचिच्चतुर्वर्गंतृणोपमम् आराममस्य
पश्यन्तिनतंकश्चन पश्यति नतंविदाथयइमाजजानान्यद्युष्माकमन्तरंभवाति नीहारेणप्रावृताजल्पाचासुतृपउक्थशासश्चरन्ती
त्याद्याःश्रुतयोनुक्रोशस्योजगदात्मनीश्वरेरतिमुपदिश्यन्तीत्यन्तेनश्रीधरस्वामिभिर्द्दढीकृतमेव साचरतिर्भक्तिरेव अथातोभ-
क्तिजिज्ञासा सापरानुरक्तिरीश्वरे इतिशाण्डिल्यसूत्रेपिअनुरक्तेर्भक्तित्वेनकथनात् तथाभक्तिःप्रसिद्धाभवमोक्षणायेतिब्रह्मा-
ण्डपुराणे भक्त्यामामभिजानातियावान्यश्चास्मितत्वतः ततोमांतत्वतोज्ञात्वाविशतेतदनन्तरमितिभगवद्गीतासुचबहुतरमुक्त-
त्वादेतादृशपरमपुरुषार्थान्तरङ्गसाधनभक्तिसाधनमिदमुपपुराणंबहुशस्साधुजनोपकारकं तदेतद्यथामति व्याख्यायते अ-
थतत्रभवाननुगृहीतनामाहरशर्म्मामुनिर्निखिलपुराणोपपुराणसारभूतंभक्तिप्रधानमन्वर्थंभक्तविलासाख्यमुपपुराणंप्रारभमा-
णःप्रारीप्सिताविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनत्वाद्दाशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्याचार्यप्रणी

ताश्रीराद्यन्यतमस्यमङ्गलस्यप्रबन्धमुखलक्षणत्वात्प्रकृतोपपुराणप्रतिपाद्यपरमशिवाभेदंगजाननेप्रकटीकुर्वंस्तयोरभिन्नंमङ्गलमु
पनिबध्नाति॥ ॥ ॐ ॥ ॥ ॥वामांकेति तत्रादौवामांकेतिगुरुत्रयात्मकस्यमगणस्यसुन्दरवाचकस्य वामशब्दस्य च
प्रयोगाद्वर्णगणशुद्धिःसूच्यते देवतावाचकाःशब्दायेचभद्रादिवाचकाः तेसर्वैनैवनिंद्याःस्युर्लिपितोगणतोपिवेत्यभियुक्तोक्तेःमगण
प्रयोगादेतत्प्रबंधाध्येतॄणांश्रोतॄणांचश्रीसंप्राप्तिःसूच्यतेमोभूमिस्त्रिगुरुः श्रियंवितनुतइतिछंदोग्रंथेषु तत्फलदर्शनात् वामःसुंदरोदक्षि
णेतरश्चवयोंकउत्संगः वामौवल्गुप्रतीपौद्वौ वामंशरीरेसव्यंस्यात् उत्संगचिन्हयोरंकइतिचामरः तमारूढायावामोरूः वामौसुन्दरौऊ
रूयस्यास्सागाणेशीशक्तिःसंहितशफलक्षणवामादेश्चेत्यूङ् तस्यायौवक्षोजौ पयोधरौतयोरानीतंपुष्करंशुंडाग्रंयेनपुष्करंकरिह

## वामांकारूढवामोरूवक्षोजानीतपुष्करं विघ्नवारणहर्यक्षंविघ्नराजमुपास्महे १॥ ॥

स्ताग्रइत्यमरः अनेन विशेषणेन ध्येयोवल्लभयासपद्मकरयाश्लिष्टोज्वलद्भूषयेति उक्तमहागणपतेर्ध्यानमुपनिबद्धं विघ्नाःप्र
त्यूहाएववारणागजामयूरव्यंसकादिः तेषांहर्यक्षंसिंहमितिरूपकालंकारः हर्यक्षःकेसरीहरिरित्यमरः एवंभूतंविघ्नराजं वि
घ्नानांराजाविघ्नराजःराजाहस्सखिभ्यष्टच्इतिटच् तमुपास्महे उपासनंचतद्विलक्षणप्रत्ययानंतरिततदेकतानता रूपंचित्तैकाग्र्यंतेनध्या
यामइत्यर्थः शिवपक्षेपिवामश्चासौ अंकःअंगंदेहार्द्धमित्यर्थः अंकोरूपकभेदांगचिन्हरेखाजिभूषणइतिमेदिनी तमारूढा
यावामोरूःपार्वतीपूर्ववत्समासः तस्यावक्षोजेकुचे आनीतंपुष्करं पद्मंराजीवपुष्करांभोरुहाणिचेत्यमरः पद्मत्वेनाध्यवसि
तःकरोवायेनएतादृशं विशेषेणहन्तितृतीयलोचनात्मना विश्वजातंहिनस्तीतिविघ्नोग्निः अग्निर्वैमृत्युरितिश्रुतेः अग्निमीळेपु
रोहितमिति अग्निशब्दस्य सकलवेदादौश्रूयमाणत्वादत्रद्वंद्वेपूर्वनिपातःवारिजलानिआपःस्त्रीभूम्निवार्वारीत्यमरःतेभ्यःअ

नितिप्रणितीतिवारणः चन्द्र अब्जोजैवात्रकः सोम इत्यभिधानात् चन्द्रमा वा अपां पुष्पमितिश्रुतेश्च हरिः सूर्यः हरिश्चं द्रार्कवाता श्वेतिमेदिनी तेअक्षीणियस्य तं तेजस्त्रितयलोचनमित्यर्थः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् विघ्नस्य अग्नेः तेजसामान्यस्योपल क्षणं तस्यरंजनाद्राजा तस्यापि प्रकाशक इत्यर्थः तस्यभासा सर्वमिदं विभातीति श्रुतेः तं परमशिवमुपास्महे अस्यार्थः पूर्ववत् अत्र स्तोतव्यत्वेन प्रकृतयोः शिवगणेशयोर्वर्णनं प्रकृतश्लेषः १ अस्य स्कान्दोपपुराणत्वात्स्कंदस्य मङ्गलाचरणमावश्यकं मत्वा नस्तस्य मङ्गलमातनोति गौरीगिरीशयोरिति गौरी च गिरीशश्च तौ पार्वतीपरमेश्वरौ तयोरंकादुत्संगादंके उत्संगे कृते गतागते

गौरीगिरीशयोरंकादंके कृतगतागतं उ(?)यद्दृशनषड्वक्त्रमुमासुतमहं भजे २ शिरसा
शिवभक्तानां पादांबुजरजःकणान् वन्दामहे वयं नित्यं वासनाध्वांतभास्करान् ३ ॥

ते येन तं प्रलोभ्य वस्तु दर्शनसंजातप्रणयतया परस्परप्रेमाधिक्यं दर्शयितुमिति भावः उद्यंतः दशना दंता येषु रदना दशना दंता इत्यमरः एतादृशानि षट्संख्याकानि वक्त्राणि मुखानि यस्य तं उमासुतं भजे सेवे अनेन मङ्गलद्वयेन अस्य ग्रंथस्य उपासना प्राधान्यं दर्शितम् २ भक्तेः प्रकृतत्वात्तस्याश्च साधुजनयोगजन्यत्वात्सतां मंगलमाह शिरसेति शिवभक्तानां अनन्यभावेन शिवैकतानानां पादाम्बुजरजःकणान् पादाः अम्बुजानीवेत्युपमितिसमासः तेषां रजःकणान् परागलेशान् शिरसा वयं नित्यं वंदामहे नमस्कुर्मः कथंभूतान् वासनाध्वांतभास्करान् अविद्यासंस्कारा एव ध्वान्तं तस्य भास्करान् निवर्त्तकानित्यर्थः एतेन सत्सङ्गस्य आत्यंतिकाविद्यानिवृत्तिरूप मोक्षरूपं फलं दर्शितम् ३ ॥

भेदस्यकल्पितत्वयापरमाद्वैतपराभिषेकंपरमशिवस्य सब्रह्मसशिवस्सहरिस्सेन्द्रःसोक्षरःपरमःस्वराडितिश्रुत्या प्रतिपादितं दर्शयितुंतत्तद्देवतांतरविषयकंमंगलमातनोति वंदामह इतिश्रीकांतंविष्णुंद्रुहिणंब्रह्माणंरविंसूर्यंस्कंदंकुमारंहरिमुखा निन्द्रादीन्देवानुपमन्युमुखान्उपमन्युप्रभृतीन्दूर्वासःकुंभसंभवादीन्मुनीन्वंदामहे ४ प्रकृतोपयोगिकथामुपक्षिपति मुनय इति नैमिशारण्ये नेमिःशीर्यते अस्मिन्निति नैमिशं तदेवनैमिशं प्रज्ञाद्यण् तथाच वायुपुराणेश्रूयते एतन्मनोमयंचक्रंमयासृष्टं विसृज्यते यत्रास्यशीर्यतेनेमिःसदेशस्तपसःशुभः इत्युक्त्वासूर्यसंकाशंचक्रंसृष्ट्वामनोमयं प्रणिपत्यमहादेवंविससर्जपितामह

वंदामहेवयंनित्यंश्रीकान्तंद्रुहिणंरविं स्कन्दंहरिमुखानन्यानुपमन्युमुखान्मुनीन् ४
मुनयोनैमिषारण्ये दीर्घसत्रेकृतश्रमाः श्रुतिस्मृतिपुराणज्ञमपृच्छन्सूतमागतम् ५

हः तेपिहृष्टतराविप्राःप्रणम्यजगतांप्रभुं प्रययुस्तस्यचक्रस्यनेमिर्यत्रविशीर्यते तद्वनंतेनविख्यातंनैमिशंमुनिपूजितमिति नैमिषइतिपाठे वराहपुराणोक्तंद्रष्टव्यं गौरमुखमृषिंप्रतिभगवद्वाक्यं एवंकृत्वाततोदेवोमुनिंगौरमुखंतदा उवाचनिमिषेणेहनिहतंदानवंबलं अरण्येस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितमिति दीर्घसत्रे द्वादशवार्षिके यज्ञइत्यर्थः सत्रमाच्छादनेयज्ञइत्यमरः कृतश्रमा कृतःश्रमोयैः तादृशाः मुनयः मननशीलाः शौनकादयः श्रुतिस्मृतिपुराणज्ञं श्रुतयो ऋग्वेदादयः स्मृतयः मन्वादयः पुराणानि मत्स्यादीनि जानातीति तं अनेन विशेषणेन विवक्षितार्थबोधनसामर्थ्यं सूतस्य प्रकाशितं आगतं लोकानुजिघृक्षया स्वेनैवप्राप्तंसूतं पौराणिकं अपृच्छन् प्रश्नंचक्रुः ५॥ ७ ॥ ७ ॥ ७ ॥ ४

प्रश्नमेवाह अष्टादशेति मद्वयंभद्वयंचैव ब्रत्रयंवचतुष्टयं आपनालिंपुराणानि कूस्कंगारुडमेवच इतिपरिगणितान्यष्टाद
शजानातीतितत्संबुद्धिः व्यस्यति तेजोराशिरूपेण स्थितं वेदंविभजतइति व्यासोबादरायणः तच्छिष्यमहतीमतिर्यस्य वि
शिष्टज्ञानाश्रयेत्यर्थः अतएवमहत्तम अतिशयेनमहत् वयंसर्वेसंदिहानास्संशयाविष्टास्त्वांपृच्छामः ६ उक्तसंशयंत्रिः
भिराह वेदानामित्यादिनावेदानांऋगादीनां आगमानां आगतं शिववक्त्रात्तु गतंतुगिरिजामुखेमतंसर्वमुनीनां यत्तस्मादाग

श्रीमुनयऊचुः अष्टादशपुराणज्ञ व्यासशिष्यमहामते संदिहानावयंसर्वे पृच्छामस्त्वांमह
त्तम ६ वेदानामागमानांचमंत्राणामपिकर्मणां प्रतिपादकवाक्यानां वाक्यानांमहतामपि
७ कुत्रपर्यवसन्नोर्थो जगतांकारणंचकिम् विचारितेपिवेदांते तदर्थेवगतेपिच ८ कर्म
बंधानुवृत्तिश्च नमुंचतिकथंपुनः एतत्सर्वमशेषेण विस्तराद्वक्तुमर्हसि ९ ॥ ९ ॥

ममुच्यतेइत्युक्तलक्षणानां शैवादीनां मंत्राणांवैदिकतांत्रिकाणां कर्मणांयागादीनांप्रतिपादकवाक्यानांधर्मप्रतिपादकवा
क्यानामित्यर्थः महतांवाक्यानांतत्वमस्यादीनां कुत्रवस्तुनि पर्य्यवसन्नः तात्पर्यतया परिगतः अर्थः किंजगतांकारणं वेदांतेत्र
ध्यात्मशास्त्रे व्याससूत्रादौ विचारितेपिमीमांसितेपितदर्थे अवगतेपि ज्ञातेपि कर्मबंधानुवृत्तिः कर्मणाजातोयोबंधः तस्य अनुवृ
त्तिः अनुवर्त्तनंजननमितिशेषः कथंनमुंचति एतत्पूर्वोक्तं अशेषेण कार्त्स्न्येन विस्तरात् शब्दबाहुल्यात् सतुशब्दस्यविस्त
रइत्यमरः वक्तुमर्हसि एतदुत्तरज्ञानक्षमोसीत्यर्थः ७ ॥ ८ ॥ ९ ॥ ॥ ॥ ॥ ॥

इतीति अतिशयेनसर्वार्थान्वेत्तिजानातिसर्वदर्शीत्यर्थः इतिपूर्वोक्तप्रकारेण मुनिवर्यैः शौनकादिभिः पृष्टः महाभागः महान्भागोभाग्यंयस्यसः सूतः वक्तुंप्रचक्रम इतिउत्तरश्लोकेनान्वयः किंकृत्वेत्यतआह नमस्कृत्येति चतुर्थीप्रयोगआर्षः गुरुमूर्तये गुरुस्वरूपायेत्यर्थः गुशब्दस्त्वंधकारस्यादुशब्दस्तन्निरोधकः अंधकारनिरोधित्वाद्गुरुरित्यभिधीयत इतिगुरुशब्दार्थः चैतन्यस्वरूपावरकाऽनाद्यविद्याध्वांतनिर्मूलनक्षमत्वंस्वप्रकाशचैतन्यरूपस्यशिवस्यैवेतिभावः तस्मैनमस्कृत्यविघ्नेशादींश्चपरयाभक्त्याप्रणम्यएवं वक्ष्यमाणप्रकारेण वक्तुंप्रचक्रमे आरेभे ११ शौनकादिकृतप्रश्नस्य सर्वोत्तमतांमत्वा तत्प्रशंसापूर्वकं मुनीन्संबोध्याह॥ ॥साध्विति

इति पृष्टो मुनिवर्यैः सूतः सर्वार्थवित्तमः नमस्कृत्य महाभागः शिवाय गुरुमूर्तये १० विघ्नेशं भारतीं देवीं सम्प्रदायप्रवर्तकान् प्रणम्य परया भक्त्या वक्तुमेवं प्रचक्रमे ११ सूत उ· साधु पृष्टं मुनिश्रेष्ठाः श्रोतव्यं यद्विशेषतः श्रुतं यथा गुरुमुखात् यथामति वदामि वः १२ वेदागमपुराणेषु मंत्रेषु सकलेषु च एक एव महादेवो विकारेषु यथार्णवः १३ ॥ ७ ॥

हेमुनिश्रेष्ठाः यद्विशेषतः श्रोतव्यंतत् यथागुरुमुखात्श्रुतंतथायथामतिवःवदामि १२ वेदेति वेदादिषुसर्वेषु एकएव महादेवः प्रतिपाद्यतया स्थित इतिशेषः सर्वेवेदायत्पदमामनंतीत्यादिश्रुतेः विकारेषुजलविकारेषु नदीनदसरःकूपतडागादिषु एकएवार्णवः प्रकृतितया स्थितः तथेत्यर्थः यथानद्यःस्यंदमानाःसमुद्रेऽस्तंगच्छंति नामरूपेविहाय तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्यं सयोहवै तत्परमं ब्रह्मवेद ब्रह्मैवभवति इतिमुंडकोपनिषदि १३॥ ७ ॥ ७ ॥ ४ ॥

ननुशिवविष्णुगणेशार्कदेवीपुराणादिषुतत्तद्देवतापरत्वप्रतिपादकैर्वाक्यैरनेकेषांमुख्यत्वे कथंशिवएव सर्वाम्नायसमन्वयः अत
आह नामांतरेति नामांतरपरेषुनामसंज्ञालक्षणया संज्ञीवाच्योऽर्थः सच शिवादिशब्दवाच्यः अन्यतएतद्भिन्नं विष्ण्वाद्यर्थरूपं त
त्परेषु वाचकेषु हर्यादिषु संकोचंविनालक्षणादिकंविना तत्रैववाचकस्यस्खलद्वृतित्वसंभवात्साक्षादेवेत्यर्थः आम्नायेषुवेदे
षुअधिष्ठानतया-जगदधिष्ठानतयापरब्रह्मरूपतयेत्यर्थः शशिशेखरः चंद्रचूडःप्रशस्यतेस्तूयते अत्रच एकोदेवः सर्वभूतेषुगू
ढःसर्वव्यापीसर्वभूतांतरात्माकर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्च एकोदेवोबहुधासन्निविष्टः एकःसन्बहु
धाविचचारत्वमेकोसिबहुष्वनुप्रविष्टःइत्याद्याःश्रुतयःपरमशिवस्यसर्वात्मकत्वमद्वितीयत्वं सूचयंत्यःसर्वपदवाच्यत्वप्रति

नामान्तरपरेष्वेवं शब्देषुशशिशेखरः विनासंकोचमाम्नायेष्वधिष्ठानंप्रशस्यते १४ ॥

पादिकादृश्यंते ननुएकोदेवःसर्वभूतेषुगूढइत्यादिभिःश्रुतिभिरद्वितीयमेकंवस्तुनिरूप्यते तच्चदेवतांतरमेव कुतोनस्यादिति
चेन्न गायत्र्याभर्गपदघटितत्वाद्रुद्रस्मरहरोभर्गइत्यभिधानेन तद्बाध्येभर्गइत्यविद्यादिदोषभर्जनात्मकमितिभर्गशब्दार्थेनि
श्चितत्सर्वव्यापिसर्वव्यापकसर्वोत्कृष्टनित्यमुक्तमात्मस्वरूपंसच्चिदानंदात्मकं यदोंकारवाच्यं ब्रह्मतदहमस्मीति गायत्रीमंत्र
स्यार्थइतिभाष्यकारवचनात् नन्वेतावतापिओंकारवाच्यंब्रह्मेतिसिद्धं तच्चदेवतान्तरमेव कुतोनेतिचेदुच्यते सर्वेवेदायत्प
दमामनंतीतिश्रुत्याप्रसंगात्सनएवसकलवेदप्रतिपाद्यत्वं वेदमाताचगायत्री तस्याश्चभर्गशब्दघटितत्वेन तदर्थःसर्वोत्कृष्टस
दाशिव एवेतिनिर्विवादं किंचगायत्रीसारभूतस्यप्रणवस्य अकारोकारमकारनादबिंद्वात्मकस्यपंचभेदानां परमशिव संबंधि
सद्योजातादिपंचवक्त्रोद्भूतत्वस्यागमेषुस्फुटमुपलंभात् तथाहिशुद्धाख्येचातुलोत्तरे अथप्रणवभेदंतुप्रवक्ष्यामिसमासतःस

र्वपापहरंचैवमुक्तिदंप्रणवंपरं १ प्रणवंसर्वदेवाख्यंसर्वदेवमयंविदुः सर्वेषांचैवमंत्राणांप्रणवःप्राणउच्यते २ प्रणवःपंच
भेदःस्यात्तद्भेदंशृणुषण्मुख साकल्यंशांभवंसौम्यंसावन्यंसंयुजंतथा ३ एतेवैपंचभेदास्तुपंचवक्त्रेषुचोद्धृताः अकारंचउकारंच
मकारंचत्रिधाभवेत् ४ त्रेतायांतर्गतंनादंचतुर्थंमुक्तिकारणं अकारंदक्षिणांगंस्याद्वामांगंस्यादुकारकं ५ मकारंमध्यदेहंतुत
स्मात्त्रिःप्रणवात्मकं हकारंतस्यमध्येतुसंक्षिप्तंसर्वकारणं ६ अकारंब्रह्मदैवत्यमुकारंविष्णुदैवतं मकारंरुद्रदैवत्यमोंकारंतुः
सदाशिवः ७ नादंशिवमयंविद्यासंचदेवात्मकंविदुः अकारोकारसंयोगादोकारःस्वरमुच्यते ८ ओमित्येकाक्षरंब्रह्मवदंतिशि
वयोगिनः पंचमंप्रथमोपेतंतृतीयांतर्गतंपरं ९ साकल्यमितिविज्ञेयंपूर्ववक्त्रेतुजायते कलादिपंचमंचैवअनिलांतंसमुद्धरेत् १०
द्वादशस्वरसंयुक्तंशांभवंदक्षिणाननं वर्गादिपंचमंचैवषष्ठांतंजीवसंयुतं ११ तृतीयस्वरसंयुक्तंसौम्यंवैपश्चिमाननं अकारंपंच
मान्तंचवकारंतत्त्वबीजकं १२ एकादशकलोपेतंसावन्यंसौम्यवक्त्रके आदिप्रकृतिवर्णंचपंचमांतंषडंतकं १३ गुह्यंचतुर्दशोपेतं॰
सायुज्यंचोर्द्ध्ववक्त्रके इत्यादिना अन्यदप्येषांछंदोऋष्यादिग्रंथगौरवभयान्नलिख्यते ननुपूर्वोदाहृतश्रुत्यादिभिःसर्वस्यशिवात्मक
त्वसिद्धेःशिवविष्णुविरिंच्यादिनामभिर्भिन्नतयानिर्देशःकृतःभेदंविनातन्नसंभवतीतिचेन्न एकस्मिन्धर्मिणिप्रकाशात्मकपरमशिवे
अनंतविविधधर्माश्रयेएकैकधर्मपुरस्कारेणएकैकंनामप्रवर्ततइतिसम्यक्प्रपंच्यतेयोविष्णुर्व्यापकःख्यातःश्रेयोरूपःशिवस्मृ॰
तः स्रष्टासर्गकलारूढोभास्करोभासकःपरः १ चंद्रःप्रह्लादकोज्ञेयःप्रकारत्वात्समीरणः बुधःप्ररोचकःशांतःपरमात्मामहेश्वरः २ नारा
यणोजगन्नाथःसर्वात्मासर्वगोचरः नित्यःशुद्धोनिराधारःशंकातंकविवर्जितः ३ विक्रियाभिरनाघ्रातःपरिणामैर्द्विजन्मभिः अस्तीति
शक्यतेवक्तुंयस्समस्ताध्वदूरगः ४ परमानंदरूपोसौजगत्कर्तामहेश्वरः इति अत्रपरमशिवस्याचिंत्यानंतशक्तिमत्त्वेनविरुद्धानेक
कार्यकर्तृत्वादिरूपविरुद्धानेकधर्मवत्त्वमंगीकर्तव्यं अन्यथातासांशक्तीनांनिष्प्रयोजनत्वेननिर्विषयतास्यात् तथांगीकारेतुअचिं

त्वानंतशक्तिमत्वमेवनस्यात् प्रयोजनाभावात् अतोनिर्धर्मकत्वेननिश्शक्तिकएव शिवइत्यायातं तथैवेष्टापत्तौतुश्रुतिस्मृतिपुराणा
दिविरोधः अनुभवविरोधश्च श्वेताश्वतरोपनिषदिश्रूयते नतस्यकार्यंकरणंचविद्यते नतत्समश्चाभ्यधिकश्चश्रूयते परास्यशक्तिर्वि
विधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति नतस्यविद्यतेकार्यंकरणंचनविद्यते नतत्समोधिकश्चापिकश्चिज्जगतिदृश्यते १ प
रास्यविविधाशक्तिश्श्रुतौस्वाभाविकीस्मृता ज्ञानंबलंक्रियाचैवयेभ्योविश्वमिदंजगत् २ नतस्यास्तिपतिःकश्चिन्नैवलिंगंनचे
शिता कारणंकरणानांचनतेषामधिपाधिपः ३ इतिप्रथमोक्तवाक्यवचनानिच तस्यपरमशिवस्यसंबंधियत्किंचित्कार्यंजन्यंभि
न्नंनास्तिसर्वस्यापिकार्यजातस्यशिवरूपत्वात् षष्ठ्याहिभेदोबोध्यते तथातत्स्वरूपातिरिक्तंज्ञानक्रियात्मकंकरणंचनास्ति
अपाणिपादोजवनोगृहीतेत्यादिश्रुतेः स्वरूपव्यतिरिक्तकर्मेंद्रियंच विनाशक्तिमत्वंचप्रतिपाद्यते चिदानंदमात्रसारत्वात् का
र्यकारणकर्तृरूपंशिवातिरिक्तंकिमपिनास्तीति नतत्समश्चाभ्यधिकश्चदृश्यतइतिउक्तं शिवस्सर्वसामरस्यरूपइतितदपेक्ष
याअधिकोनास्ति सर्वस्यापितदधीनप्रकाशत्वात् सर्वस्यवशीसर्वस्येशानइतिश्रुतेः सर्वज्ञस्सर्वकर्त्ताचतथासर्वप्रकाशकः स
र्वकर्त्तापिसर्वेशइतिवेदविदांमतं इतिस्कांदवचनंच तद्व्यतिरिक्ततया तत्समोपिनास्तितद्व्यतिरिक्तपदार्थस्यैवाभावात् एवंच धर्म
राहित्यमेवस्यादित्याशंकापरिहाराय परास्यशक्तिरित्यादि तस्यपरमशिवस्यशक्तिः पराचिदानंदेच्छाज्ञानक्रिया सामरस्यरूपासर्वसा
मर्थ्यात्मिकाविमर्शरूपिणीशक्तिः तथोक्तम् परिकर्त्तुंनिजंतत्वं स्वात्मीकर्त्तुंतथोभयं एकीकर्त्तुंनकिंकर्त्तुंविमर्शोजगतिक्षमः १ इत्ये
कापिशक्तिरनेकप्रकारेत्याह विविधैवेति विविधामेवाह ज्ञानबलक्रियाचेति अत्रबलशब्देनइच्छैवोच्यते ज्ञानक्रियासंदर्शित
त्वात् ज्ञानक्रियासामरस्यात्मकत्वेनबलभूतत्वाच्च तदुक्तं अर्थेक्रियाभवति दक्षिणमन्यदर्धेज्ञानंसमत्वमनयोरपिमध्यमिच्छाइति
तथाच इच्छाज्ञानक्रियारूपेत्यर्थः स्वाभाविकीपरमशिवस्वरूपभूतानत्वागंतुकी विमर्शशक्तेः सर्वशक्तिसमष्टिरूपत्वात् तथोक्तं

अनंततावदाकारस्वीकारैकैकलक्षणमिति एतस्याआनंत्यं कथमितिचेत् उच्यते पृथिव्यादिशिवतत्त्वपर्यंतं योयंशक्तिसमूहः विचार्यमाणेच तस्मिंस्तदानंत्ये पर्यवस्यति तथाहि इच्छाज्ञानक्रियेति ज्ञानस्मृत्यपोहनमिति सृष्टिस्थितिसंहारानाख्याभासेति अन्यथाच ततस्तत्तोंतरेषु पूज्यमानानां योगिनो योगिनश्चेति ॥ वेद्यविक्षोभोल्लासतन्मयीनांशक्तीनां तेनतेनप्रकारेण तत्रतत्रानुभूयमानानांमध्ये एकैकशक्तिपर्यालोचनेप्यानंत्यं किमुत तत्कार्यानुसंधाने इच्छातावज्जिज्ञासाचिकीर्षादिभेदाद्बहुप्रकाराज्ञानंचस्मृत्यनुभवसंशयोत्प्रेक्षादिभेदादनंतप्रकारं क्रियापि करचरणाद्यनुबंधिनी गमनभोजनाद्यनंतप्रकारा एवंशिवतत्त्वस्यपंचशक्तयःसर्वकर्तृत्वसर्वज्ञत्वनित्यत्वपूर्णत्वव्यापकत्वादयः एवंशक्तितत्त्वस्य पंचदश एवं सदाशिवत्वादिषुविचारे आनंत्यंपर्यवस्यति एवंच सर्वाःशक्तिश्चेतनादर्शनाद्याःस्वस्वे वेद्ये योगविष्वक् क्षिप्त्वामध्ये हाटकस्तंभभूतस्तिष्ठन्विश्वाकार एकोविभाति इति नाथोक्तदिशासर्वशक्तिसामरस्यात्मकस्य परमशिवस्य अचिंत्यानंतशक्तिमत्त्वंसिद्धं तथाच परमशिवस्य अनंतधर्माःसंतीत्यंगीकर्त्तव्यं सर्वदा निर्धर्मकत्वेसत्यज्ञानादिस्वदानांसामानाधिकरण्यंनस्यात् धर्मभेदेनैव तत्त्वोपपत्तेः तस्मात्परमशिवस्य अचिंत्यानन्तशक्तिमत्त्वेन विरुद्धनिखिलधर्माश्रयत्वंसिद्धम् १४ ॥ ॥ ॥ ॥ ॥

उपक्रमोपसंहाराभ्यां सर्वाम्नायसमन्वयभाजनतया शिवस्यैवपरत्वंदर्शयति योवेदादाविति वेदादौ वेदस्यारंभे यः स्वरः प्रणवा
ख्यः प्रोक्तः प्रकर्षेणमन्वादिभिरुक्तः वेदांतेच प्रतिष्ठितः प्रतिष्ठांस्थितिंप्रापितः ब्रह्मणः प्रणवंकुर्यादादावन्तेच सर्वदा स्रवत्यनोंकृ
कृतं पूर्वं परस्ताच्चविशीर्यते इतिमनुवचनादितिभावः प्रकृतौअव्यक्ते लीनस्य लयंप्राप्तस्य तस्यप्रणवस्य यः परःसर्वोत्कृष्टतया
वशिष्यमाणःसमहेश्वरः शिवइत्यर्थः इंद्रियेभ्यःपराह्यर्थाइत्यारभ्य पुरुषान्नपरं किंचित्साकाष्ठासापरागतिरितिश्रुतेः किंचशिव
तत्वादेव निखिलजगदुत्पत्तिरितिलयोपि सर्वप्रपंचस्य तत्रैव वक्तुमुचितः तथाहि तत्त्वंच त्रिविधंज्ञेयंतद्भेदंशृणुषण्मुख शिवंस
दाशिवंचैवमहेशंत्रिविधंस्मृतं शिवतत्वंमहासेननिष्कलंचेतिकीर्त्तितं सकलंनिष्फलंचैवसदाशिवमिहोच्यते महेशंसकलंत्र

योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः तस्यप्रकृतिलीनस्ययःपरस्समहेश्वरः १५॥

विद्यात्रिविधंतद्भवस्यथ शिवमेकंविजानीयात्सादाख्यंपंचधाभवेत् महेशंतुमहासेनपंचविंशतिभेदकं एतेषांतत्वसंयुक्तमेक
त्रिंशदितिस्मृतं शिवस्यलक्षणंवक्ष्ये समासात्शृणुषण्मुख शिवंपरात्परंसूक्ष्मंनित्यंसर्वगमव्ययं अनिंदितमनौपम्यमप्रमाणमना
मयं शुद्धत्वाच्छिवमुद्दिष्टंपरादूर्ध्वंपरात्परं व्योमातीतंचसूक्ष्मंहिनित्यंकारणकारणं व्याप्तंसर्वगतंप्रोक्तंअक्षीणादव्ययंभवेत् अनिं
द्यममलंज्ञेयमसादृश्यादनौपमं प्रमाणाद्व्यतिरिक्तत्वादप्रमाणमितिस्मृतं निर्गुणत्वाद्विशेषेणह्यनामयमितिस्मृतं इत्येतैर्लक्षणै
र्युक्तंशिवरूपमितीरितं सृष्ट्यर्थंसर्वतत्वानांलोकस्योत्पत्तिकारणं योगिनामुपकारायस्वेच्छयाचिंत्यतेशिवः तस्यचिंतापराश
क्तिःसहस्रांशेनजायते तच्छक्तेस्तुसहस्रांशादादिशक्तिसमुद्भवः आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः तच्छक्तेस्तुसह

स्रांशादृज्ज्ञानशक्तिसमुद्भवः ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भवः एताविशक्तयःपंचनिष्कलाश्चेतिकीर्त्तिताः शिवसृष्टिरियं
प्रोक्ताशक्तीनांसृष्टिरुच्यते इत्यारभ्यअकारादिक्षकारांतमेकंपंचाशदक्षरं एतेवर्णाःप्रशस्यंतेकामितार्थप्रदायकाः स्त्रीरूपाश्चैव
पुंरूपास्तथाचोभयरूपकाः सर्वेवैदेवतारूपाःप्रत्येकंवर्णरूपधृक् वर्णेबीजंतथार्णेचलिंगमक्षरमातृके एतानिषट्चनामानिवर्णे
पर्यायवाचकाः तेषांसमुद्भवंनामरूपभेदंतथांशकं तत्वमूर्त्यादिभेदंचअधिदैवंफलंयथा स्थूलसूक्ष्माकृतीचैवजीवोपाधिविभेद
कं एतद्भेदसमासेनसंक्षेपाच्छृणुषण्मुख शिवतत्वेपरेसूक्ष्मेबिंदुरूपंतुजायते बिंदोर्नादःसमुत्पन्नोनादाच्छक्तिरजायत शक्तेस्तु
जायतेशब्दःशब्दाज्जायेतवाग्भवं वाग्भवाच्चकलाजाताःकलाभ्योविकलास्मृताः तस्माद्वैवाचकोमंत्रोमंत्रस्तैरेवभिद्यते एतत्सृष्टि
क्रमःप्रोक्तस्तेषांलक्षणमुच्यते बिंदुरूपापराभक्तिर्नादश्चैवादिरुच्यते शक्तिरिच्छेतिविज्ञेयाशब्दोज्ञानमिहोच्यते वाग्भवंस्यात्क्रि
याशक्तिःकलावैषोडशस्वराः तेषांरूपंयथाप्रोक्तंप्रकृतिर्विकृतिस्तथा प्रकृतिस्सप्तवर्णानिविकृतिस्तुनवार्णका अकारश्चइकारश्चउ
कारश्चऋकारकः लृकारश्चैवएकारोओकारश्चतथैवच एतेसप्तस्वराःप्रोक्ताःप्रकृतिस्तुसमीरिताः शेषाविकृतयःप्रोक्तास्तेषामुद्भव
उच्यते अकारजन्यआकारोइकारादीसमुद्भवः उकारेचैवऊकारोऋकारेऋृसमुद्भवः लृकारेचैवलॄकारोएकारेऐसमुद्भवः ओका
रेऔतथाज्ञेयःक्रमेणैवसमुद्भवः एषावैविकृतिःप्रोक्ताआकारादिनवार्णकाः अकारादिविसर्गांताश्चैतेवैषोडशस्वराः कलामात्रास्व
राजीवाःप्रकृतिर्विकृतिस्तथा प्राणश्चात्माचदेहीचकलापर्यायवाचकाः कलाभेदमिदंप्रोक्तंविकलाभेदकंशृणु ककारादिक्षका
रांतावर्णाश्चविकलाःस्मृताः देहोपाधिश्शरीरंचक्षेत्रादाशानतुस्तथा व्यंजनंविकलाशक्तिर्बिंदुपर्यायवाचकाः कलानांविकला
नांतुत्रीणिरूपाणिलक्ष्यते शिवाग्निभूतरुद्राश्चत्रयोदशतिथिस्तथा एतेवैदशवर्णानिपुल्लिंगश्चेतिकीर्त्तिताः ऋॠलृॡचच
त्वारोनपुंसकमितिस्मृतं ककारश्चगकारश्चचकारश्चजकारकः टकारश्चडकारश्चतकारश्चदकारकः पकारश्चबकारश्चपकार

र्वार्थसिद्धिदं धकारं धनदं ज्ञेयं पीताभं चार्थसिद्धिदं नकारं चैव सावित्री स्फाटिकं पापनाशनम् पर्जन्यं स्यात्पकारं तु शुक्लाभं पुष्टिसि
द्धिदं फकारं पाशुपतं स्याद्ध्यानं पापनिकृंतनं वकारं तु त्रिमूर्तिः स्यात्सीतं सर्वार्थसिद्धिदं भकारं भार्गवं विद्याद्रक्ताभं सर्वसिद्धिदं म
कारं मदनं विद्याच्छ्यामं सर्वजयप्रदं यकारं पीयुदैवत्यं कृष्णमुच्चाटनं भवेत् रकारं वन्हिदैवत्यं रक्ताभं संहृतिर्भवेत् लकारं पृ
थिवीतत्वं स्यात्सीतं स्तंभनं भवेत् वारुणं स्याद्वकारं तु शुक्लाभं रोगनाशनं लक्ष्मीबीजं शकारं स्याद्धेमाभं श्रीकरं भवेत् षकारं सू
र्यबीजं स्याद्रक्ताभं सर्वसिद्धिदं सकारं शक्तिरूपं स्याद्रक्तं सिद्धिकरं भवेत् हकारं शिवबीजं स्याच्छुद्धस्फटिकसन्निभं अणिमा
द्यष्टसिद्धिं च भुक्तिमुक्तिफलप्रदं ळकारमात्मतत्वं स्याद्रक्ताभं सर्वसिद्धिदं विद्यातत्वं क्षकारं स्यात्क्षीराभं च सुखप्रदं इत्येते
अधिदैवाश्च फलवर्णक्रमेण तु अकारादिक्षकारांतं समासात्परिकीर्त्तितं कलाजीवमिति ख्यातं विकला देहमुच्यते कलाश्च वि
कलाश्चैव देहिदेहमिति स्मृतं देहिरूपं द्विधा प्रोक्तं स्थूलं सूक्ष्मं तथैव च देहमेकं विनिर्दिष्टं केवलं सूक्ष्ममुच्यते अकारादिविस
र्गांतं केवलं तु स्वराकृतिः तत्स्थूलमिति विज्ञेयं सूक्ष्मं मध्यस्थितिर्भवेत् ककारादीनि वर्णानि विकलं च प्रकीर्त्तितं तद्रूपं चार्द्धमा
त्रं तु सूक्ष्मरूपमिहोच्यते एवं कला च विकला स्थूलसूक्ष्माकृतिर्भवेत् कलानां ह्रस्ववर्णानि जीवार्ण इति संस्मृताः कलाहीनं तु
यद्वर्णं देहं तस्य विनिर्दिशेत् संयोज्य देहिनं देहे जीवे जीवं नयोजयेत् सर्वेषां देहभेदोस्ति आत्मभेदो न विद्यते आत्मा च जीव उ
क्तो जीवाज्जीव इति स्मृतः तस्माज्जीवात्परं नास्ति पश्चान्न च विनिर्दिशेत् इत्युक्तरीत्या ह्रस्वाकारस्य सृष्टिसंज्ञितस्य सर्वव
र्णप्रकृतिभूतत्वेन सर्वप्रपंचस्याक्रमेण प्रकृतौ लये यः परः कारणतया अवशिष्यमाणः परः परात्मा सः महेश्वरः परमशिव इत्यर्थः

॥ ॥१५॥ ॥

श्चक्षकारकः एते द्वादशवर्णाश्च पुल्लिंगाश्चेति कीर्त्तिताः खकारश्च घकारश्च छकारश्च झकारकः ठकारश्च ढकारश्च थकारश्च ध
कारकः फकारश्च भकारश्च शकारश्च नकारकः एतानि भानुबीजानि जायाश्चेति प्रकीर्त्तिताः शेषान्पुंसकाविंद्यात्त्रयोभेदाद्दति
स्मृताः अकारादित्रयोव्योम ईकारादित्रयोनिलः ऋकारादित्रिवर्णानि चाग्निरित्युच्यते तथा लृकारादित्रयोह्यापश्चोकारादित्रयो
मही प्रकृतिस्तत्वभेदस्याद्विकृतिर्मूर्त्तिरुच्यते प्रभावं विकलाः प्रोक्तमित्येवं त्रिविधं स्मृतं प्रकृतिर्ह्रस्वमित्युक्तं विकृतिर्दीर्घमुच्य
ते एकमात्रो भवेद्ध्रस्वो द्विमात्रं दीर्घमुच्यते व्यंजनं त्वर्द्धमात्रं स्यादित्येतल्लक्षणं स्मृतं अकारं सर्वदेवत्यं रक्तं सर्ववशीकरं आः
कारस्यासराशक्तिश्वेतमाकर्षणं भवेत् इकारो विष्णुदैवत्यं श्यामं रक्षाकरो भवेत् मायाशक्तिरितीकारः पीतं स्त्रीणां वशीकरं उका
रो वास्तुदैवत्यं कृष्णं राजवशीकरं ऊकारो भूमिदैवत्यं श्यामं लोकवशीकरं ऋकारो ब्रह्मणा ज्ञेयं पीतं ग्रहविनाशनं शिखंडिरूपं
ॠकारं भंजनज्वरनाशनं अश्विनीभ्यां लृलॄ चैव श्वेतरक्ते ज्वरापहे एकारं वीरभद्रं स्यात्सीतं सर्वार्थसिद्धिदं ऐकारं वाग्भवं विद्या
स्फाटिकं ज्ञानसिद्धिदं ओकारश्च स्वरं विंद्याज्ज्योतिः सर्वफलप्रदं औकारमादिशक्तिस्याच्छुक्लं सर्वार्थसिद्धिदं अंकारं तु महेशं
स्याद्रक्तवर्णं सुखप्रदं अःकारं कालरुद्रं स्याद्रक्तं पाशनिकृंतनं प्राजापत्यं ककारं स्यात्सीतं पुष्टिकरं भवेत् खकारं जान्हवीबीजं क्षी
राभं पापनाशनं गकारं गणरूपं स्याद्रक्ताभं विघ्ननाशनं घकारं भैरवं ज्ञेयं मुक्ताभं शत्रुनाशनं ङकारं कालबीजं स्यात्कालं सर्वजयं भ
वेत् चकारं चंडरुद्रं स्याद्दंजनं त्रिपुरापहं छकारं भद्रकाली स्याद्राजावर्तं जयप्रदं जकारं जंभहा ज्ञेयं रक्ताभं च जयावहं झकारं चा
र्द्धनारी स्यात्श्यामारक्तं जयावहं ञकारं कोटिविज्ञेयं पीतं रोगविनाशनं भृंगीशं स्याट्टकारं तु रक्तं सर्वसुखावहं ठकारं चंद्रबीजं
स्यात्सीतं मृत्युविनाशनम् डकारं चैव नेत्रं स्यात्पीतं कालजयप्रदं ढकारं यमबीजं स्यान्नीलं मृत्युविनाशनं णकारं नंदिबीजं स्याद्र
क्ताभं चार्थसिद्धिदं तकारं वास्तुदैवत्यं श्वेतं सर्वजयं भवेत् थकारं धर्मणो ज्ञेयं मंदाभं स्याज्जयप्रदं दुर्गाबीजं दकारं स्याच्छ्यामं सः

मत्वेनप्रशंसनीयः इतिवेदान्तानांनिर्णयःसिद्धान्तः इदंचशिवेरुष्टेगुरुस्त्राताशुरौरुष्टेनकश्चन तस्माद्विज्ञानसम्पन्नोगुरोराज्ञां लंघयेत् इत्यागमेषुस्फुटं तस्मिन्गुरौमानुषबुद्धिर्यामनुष्यत्वधीःसाअस्यजंतोः संसृतेःसंसारस्यप्रवाहःप्रवाहकारणमित्यर्थः॥ १९ तस्येति तस्यसंसारिणःजातिवर्णाश्रमादिषु जातिर्ब्राह्मणत्वादिः वर्णोब्राह्मणादिः आश्रमोब्रह्मचर्यादिःआदिपदाद्देहगेहादिःयेषुअहंताअहंभावःब्राह्मणोहमित्यादिःअनुवर्त्ततेअनुसृत्यवर्त्ततेकिञ्चप्रकृतेर्मायायावशाद्धयस्त्वादनित्येषुदेहादिषु नित्यधीः नित्यबुद्धिरपि जायते॥ २० तत्रहेतुमाहभावनेति आत्मनिसंभावनासम्यक्त्वेनभावनानिश्चयात्मिकाधीरितियावत् साभावना

तस्यानुवर्त्ततेहंताजातिवर्णाश्रमादिषु नित्यधीरप्यनित्येषुजायतेप्रकृतेर्वशात् २०
भावनाविपरीताचेत्सस्यंसंभावनात्मनि वेदांतवाक्यशतकैरपियाननिवार्यते २१ त
न्निवृत्यर्थमेवात्रयतंतेब्राह्मणाश्चिरं कारणंबहुधातत्रकथयन्त्यविवेकिनः २२॥

सत्यं सामान्येनपुंसकं साविपरीताअनित्यत्वरूपाचेद्भवतितदावेदान्तवाक्यशतकैरपि अनेकैरपितत्त्वमस्यादिमहावाक्यैरपि याविपरीतभावनाननिवार्यते निवारयितुंनशक्यते २१ एवंतर्हि साविपरीतभावनादुर्निवारेत्याशंक्य तन्निवृत्तिसाधनानि बहिरंगानि बहूनि साधनानि विहाय अन्तरङ्गसाधनंभक्तिरेकैवादरणीयेति वक्तुमुपक्रमते तदिति तस्याविपरीतभावनायानिवृत्यर्थमेवात्रजगतिब्राह्मणाः ब्रह्मवादिनः चिरंचिरकालात्यतंते यत्नंकुर्वन्ति तत्रनिवृत्तौ अविवेकिनःसदसद्विवेकशून्याः बहुधाकारणंकथयन्ति २२

ननु यथोक्तशिवतत्त्वस्यातिसूक्ष्मतमत्वेन दुर्विज्ञेयत्वात् कथं तत्रास्मद्धितेच्छूनां प्रवृत्तिरित्यत आह येब्रह्मेति हे विप्राः शौनकादयः ब्र
ह्मसृष्टयः ब्रह्मणः सकाशात्सृष्टिः मानसी येषां ता दृशाः सनकादयः ये संति ते तद्ब्रह्मशिवतत्त्वं विदुः जानंति यतः ते मुनयः ज्ञानवि
ज्ञानयोगेन ज्ञानं मोक्षोपयोगिनी धीः विज्ञानं शिल्पशास्त्राद्युपयोगिनी तयोर्योगेन संबंधेन छिन्नसंशयाः निरस्तसंदेहाः एतेन गुरु
मार्गगम्यत्वं शिवतत्त्वस्य प्रदर्शितम् १६ गुरुदेवतयोरैक्यबुद्धिर्मोक्षदायिनी नोपायांतरमिति द्वाभ्यां दर्शयति जगन्नित्यमनित्यं वे
ति सत्कार्यवादिसांख्यमते जगन्नित्यमिति वेदान्तमतेऽनित्यमिति दृष्ट्वा मध्यस्थस्य नित्यमनित्यं वेति संशयो जायते एवमग्रेपि शि

येब्रह्मसृष्टयोविप्राविदुस्तत्सनकादयः ज्ञानविज्ञानयोगेन यतस्ते छिन्नसंशयाः १६ ॥ जगन्नित्यमनित्यं वा शिवा
जीवः परो न वा मुक्तिरस्ति न वा ज्ञानात् आत्मा देहोऽथवा परः १७ इत्याद्याः संशयाः सर्वे तावन्नश्यंति न क्वचित् ॥
॥ यावद्दैवता बुद्धिर्गुरौ विज्ञानदायिनी १८ शिवादपि गुरुः श्लाघ्य इति वेदांतनिर्णयः तस्मिन्मानुषबुद्धिर्या प्रवाहः
सास्य संसृतेः १९ ॥ ७ ॥

वादीश्वरात् सर्वः ज्ञातजीवः किंचिज्ज्ञेयः परोऽन्य इति द्वैतवादिनः अनन्य इत्यद्वैतवादिनः एवं ज्ञानात् मुक्तिरित्यौपनिषदाः नेत्यन्ये
इत्यमात्मा देह इति चार्वाकाः पर इति वेदान्तिनः इत्याद्या इति वेदान्तशास्त्रारंभस्य वैयर्थ्यमाशंक्य न्यायसूत्राभावे किं विवेकादिवि
शेषणवानधिकारी उतान्यः किं वेदांताः पूर्वतंत्रेण गतार्थोऽत्र गतार्था वा किं ब्रह्म प्रत्यगभिन्नं न वा किं मुक्तिः स्वर्गादिवल्लोकान्तरमा
त्मस्वरूपो वेति संशयानिवृत्तेरिति भाष्यरत्नप्रभायां स्पष्टम् प्रतिपादिताः संशया अपि ग्राह्याः १७ १८ शिवस्वरूपस्यापि गुरुमु
खावगम्यत्वेन शिवादप्युत्तमत्वं गुरोर्दर्शयन् अज्ञानमूलिकां संसारप्रवृत्तिं दर्शयति शिवादिति शिवादपि गुरुः श्लाघ्यः उत्त

तदेवकारणंप्रपञ्चयति कर्मेति त्रिभिःमुक्तौकर्मयागादिकारणंप्राहुः जैमिनीयाइतिशेषः कर्मणएवततउपपत्तेरिति चित्तैकाग्र्य
संपादकतया नित्यनैमित्तिकैरेव कुर्वाणोदुरितक्षयंइत्यादिना पापनाशकत्वेनचकर्मैवमोक्षनिदानमितितेषांमतं अपरेकृच्छ्र
चान्द्रायणादितपः कारणंप्राहुः पौरुशिष्यादयः अन्येपूर्त्तवापि कूपादिखननंकारणमभिदधते अन्येदानंवदन्ति तस्माद्दानंपरमं
वदन्तीत्युपनिषदूपरेपौराणिकाःव्रतंएकादश्युपवासादिकारणंवदन्ति २३ अपरेतैर्थिकाः तीर्थेषुगंगाप्रभृतिषुस्नानंकारणमि
तिवदन्ति अपरेवानप्रस्थादयःस्थलवासंस्थंडिलशयनादिकं अपरेयोगिनःयमाद्यष्टांगयोगंचित्तवृत्तिनिरोधंपरेवेदान्तिनः

कर्माहुःकारणंमुक्तौतपःप्राहुस्तथापरे पूर्त्तमन्येभिदधतेदानमन्येव्रतंपरे २३ तीर्थेषुस्ना
नमपरेस्थलवासमथापरे ॥ अष्टांगयोगमपरे वेदान्तश्रवणंपरे २४ श्रुतार्थमननंः
केचिन्मूर्त्युपास्तिमथापरे अन्येसत्संगतिंप्राहुरितिनैकमुखंजगत् २५ ॥ ७ ॥

वेदान्तश्रवणंश्रोतव्यःश्रुतिवाक्येभ्यःइत्यादिना तत्वमस्यादिमहावाक्यश्रवणंवदन्तीतिसर्वत्रयोज्यं २४ केचित्नैयायिकाः श्रुतार्थ
स्यमननंयुक्तिभिरनुचिन्तनंकारणंवदन्ति न्यायचर्चेयमीशस्यमननव्यपदेशभाक् उपासनैवक्रियतेश्रवणानंतरागतेत्यभियु
क्तोक्तेः अपरेस्मार्त्ताःमूर्त्तीनांरविविष्णुगणेशशिवशक्तीनाम् उपास्तिंपूजाजपादिभिरुपासनंपंचायतनप्रकरणेशंभौ मध्यगते इ
त्युपक्रम्यपूज्याःशंकरभागतोतिसुखदाइतिस्मृतेः एतत्सोमस्य सूर्यस्यसर्वलिंगंस्थापयति पाणिमंत्रंपवित्रमितिश्रुतेश्च अस्याश्रु
तेर्निरुक्तिःशंकरसंहितायांस्फुटा अन्येसाधवःसत्संगतिंसंगःसत्सुविधीयतामित्याचार्यवचनप्रामाण्यात् सकलश्रेयस्साधनंः

सत्संगतिरेवेतिजगत् नैकमुखंभिन्नरुचित्वाल्लोकस्येतिभावः २५ भक्तेरन्तरङ्गसाधनत्वप्रतिपादनाय प्राक्प्रतिपादितसाध
नानांअन्वयव्यतिरेकव्यभिचाराक्रांतत्वंचदर्शयति कृत्वेति कश्चित्साधकः सर्वमिदंकर्माद्युपायंकृत्वापिपुनर्गर्भेनिमज्जतिजन्म
लभतइत्यर्थः कर्म्मफलभोगानंतरं क्षीणेपुण्येमर्त्यलोकंविशन्तीतिस्मरणात् इतिभावः अनेनअन्वयव्यभिचारोदर्शितः कश्चिन्मु
निर्मननशीलःत्यक्तसर्वक्रियः त्यक्ताःउज्झिताःसर्वाःक्रियाःनित्यनैमित्तिकानिकर्म्माणियेनतादृशः अथैतदप्यशक्तोसिकर्तुंम
द्योगमाश्रितः सर्वकर्मफलत्यागंततःकुरुयतात्मवानितिभगवद्वचनादितिभावः अयत्नात् यत्नंविनामुच्यतेमुक्तोभवति

॥ ७॥ कृत्वासर्वमिदंकश्चित्पुनर्गर्भेनिमज्जति त्यक्तसर्वक्रियः कश्चि
दयत्नान्मुच्यतेमुनिः २६ तदुक्तेभ्योह्युपायोन्यःसर्वबन्धविमोच
कः॥ अन्वयव्यतिरेकाभ्यांसानाम्नाभक्तिरुच्यते २७॥ ७ ॥

एतेनकर्माद्यभावेपिमोक्षदर्शनात् व्यतिरेकव्यभिचारइत्यर्थः २६ एवमनेकेषुउपायेषुविफलेषुमुमुक्षोर्मुक्तिः कथंसिध्यतीत्
याशंक्यमुमुक्षोरुपायमाह तदिति तत्तस्मात् उक्तेभ्यः प्रतिपादितेभ्यःकर्मादिभ्यः सर्वस्यबन्धस्यसंसारस्य विमोचकः निवर्त
कःय उपायइतिशेषः साविधेयप्राधान्यात् स्त्रीलिंगता अन्वयव्यतिरेकाभ्यांनाम्ना भक्तिरुच्यते भक्तिनामकएवोपायः मु
क्तिसाधकोनान्य इतिभावः भक्त्यामामभिजानातियावान्यश्चास्मितत्वतः इति भगवदुक्तेः २७ ॥

भक्तेस्तारतम्यमाह सार्द्धद्वयेन क्वचिदिति क्वचिद्देशकालादिविशेषे कृता क्वाप्यकृता या भक्तिः सा मार्जारी भक्तिरुच्यते यथा मार्जारी मूषकग्रहणवेलायामेव मनो निश्चलं कुरुते नान्यदा सा भक्तिरधमेति भावः उत्तमामाह आक्रामन्तीमिति नगात् पर्वतात् वृक्षाद्वा शैलवृक्षौ नगावगाविसमरः अन्यं नगं आक्रामन्ती गच्छन्तीं आत्मनः स्वस्य मातरं जननीं मर्कटात्मजः वानरशिशुः यथेति शेषः सश्लिष्यन् आलिंग्यन् संकटेपि न त्यजति तथैव आपत्तिसहस्रेपि यः पुमान् शिवं शरणं रक्षकं शरणं गृहरक्षित्रोरित्यमरः व्रजेत् गच्छेत् २८ २९ सा उत्तमा भक्तिर्ज्ञेया उत्तमत्वे हेतुमाह सर्वबन्धविमोचनीति अर्द्धेन भक्तिं विभजते मन्देति ३० मन्दां भक्तिं लक्ष

॥क्वचित्कृताकृता क्वापि मार्जारी भक्तिरुच्यते आक्रामंतीं नगादन्यं नगं मातरमात्मनः २८ न संकटेपि त्यजति संश्लिष्यन्मर्कटात्मजः तथैवापत्सहस्रेपि यः शिवं शरणं व्रजेत् २९ सा भक्तिरुत्तमा ज्ञेया सर्वबंधविमोचनी मन्दा च मध्यमा भक्तिरुत्तमेति त्रिधा मता ३० कथायाः श्रवणे शंभोर्नाम संकीर्त्तने स्मृतौ क्वचिद्भवेच्चित्तरतिः सा मन्दा परिकीर्त्तिता ३१ गुरुपादेन्वहं पूजा लिङ्गे च नियमार्चनं वंदनं शिववेरस्य याकारयति वासना ३२ ॥

यति कथाया इति शंभोः शिवस्य कथायाः श्रवणे तथा नामसंकीर्त्तने नाम्नः शिवशंकरादेः सम्यक् चित्तैकाग्र्येण कीर्त्तने उच्चारणे तथा स्मृतौ स्मरणे क्वचित्समयविशेषे न सर्वदेति भावः चित्तरतिः चेतःशक्तिः या भवेत् सा मन्देत्यर्थः ३१ सार्द्धेन मध्यमां लक्षयति गुरुपाद इति गुरुचरणे अन्वहं दिने दिने पूजा लिंगे शिवलिंगे च नियमार्चनं नित्यपूजनं शिववेरं शिवलिंगं तस्य वंदनं अभिवादनं च या वासना कारयति एषा मध्यमा तस्याः फलमाह सालोक्यादीति आदिना सामीप्यादिपरिग्रहः ३२॥ ७ ॥

साद्धेनउत्तमांलक्षयतियदेति यदामहेश्वरे परमशिवेसर्वंविषयजातं त्यक्त्वाअत्यर्थंभृशंकैंकर्यं किंकरत्वरूपं सततमविनाभावल क्षणं तादात्म्यरूपंसख्यं शरण्येशे शरणेसाधुःशरण्यःसचासावीशश्चेतिसमासः तस्मिन् आत्मार्पणं आत्मनोमनसः अर्पणंल= योयस्मिन्इतिसख्यविशेषणंकरोति सा भक्तिरुत्तमेत्यर्थः ३३ ॥ ३४ ननुउत्तमभक्तेर्दुर्लभत्वात्मोक्षोपिदुर्लभइत्याशंक्य मन्दाधिकारिणामपिभक्तिरेवसुलभोपायःइत्याहजन्तोरितिजन्तोःशरीरिणः नवविधाश्रवणंकीर्त्तनं विष्णोःस्मरणंपादसेवनं अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनम् इतिभागवतादिप्रतिपादिताश्रवणाद्यात्मनिवेदनांता उत्तरोत्तरमुत्तमा उत्कृष्टातत्रयांकां

मध्यमाभक्तिरेषास्यात्सालोक्यादिप्रदायिनी यदाकैंकर्यमत्यर्थंसर्वंत्यक्त्वामहेश्वरे ३३ सख्यंकरोतिसततम् विनाभावलक्षणं आत्मार्पणंशरण्येशेसोत्तमाभक्तिरुच्यते ३४ जंतोर्नवविधाभक्तिरुत्तरोत्तरमुत्तमा यां कांचिदपिसंप्राप्यपशुःपाशाद्विमुच्यते ३५ भोगायमन्दाकथितासालोक्याद्यैचमध्यमा अपुनर्भवदाभ क्तिरुत्तमादुर्लभानृणाम् ३६ आब्रह्मस्तंबपर्यंतंयत्रानन्दःप्रतीयते शिवभक्तिंविनानान्यत्तत्रकारणमि ॥ ष्यते ३७ ॥

न्चिदपिभक्तिंसंप्राप्यपशुर्जीवःपाशात्जन्मादितःविमुच्यतेविशेषेणमुक्तोभवति ३५ त्रिविधायाअपिभक्तेःपृथक्फलतारतम्यमाह भोगायेति ३६ भक्तिगम्यस्यपरमपुरुषार्थस्यमोक्षस्यसाधनांतराण्हिसंदर्शयति आब्रह्मेति ब्रह्मासर्वसमष्टिरूपःप्रजापतिःतमारभ्यस्त म्बः तृणादिगुच्छः तत्पर्यंतंब्रह्माविप्रःप्रजापतिःस्तंबोगुच्छस्तृणादिनइतिचामरः यत्रमोक्षेआनंदःप्रतीयते आनंदोब्रह्मेतिव्यजानात् यत्रत्वस्यसर्वमात्मैवाभूत्आनंदंब्रह्मणोविद्वान्इत्यादिश्रुतिभ्यःआनंदएवप्रतीयतेनान्यइत्यर्थः तत्रपरमपुरुषार्थेशिवभक्तिंविना अ

इतीति इत्युक्तप्रकारेणयः तत्त्वेनवेत्तिसःपुरुषःछिन्नपाशइत्युच्यते अन्यभक्त्यासानश्यतीत्यर्थः ३८ एवमुत्तरोत्तरयापूर्वपूर्वोप
मर्दमाह मंदेति उपसंहरति तस्मादितिप्रधानसाधनतयामुमुक्षुभिः मोक्षेच्छुभिः शंकरे उत्तमाभक्तिःसेव्या संपादनीयेत्यर्थः ३९
उत्तमभक्तिभाजःसाधकान्दर्शयतिमार्कंडेयेति मार्कंडेयःशिवोपासनया अल्पायुष्यमपास्य चिरंजीवितांप्राप्तोमुनिः उपमन्युः
पंचवार्षिकेदुग्धपानायतपश्यन् लब्धक्षीरसागरः श्रीकांतोविष्णुःसहस्रकमलार्चनादिना समासादितसुदर्शनः नंदीशिला
दतनयोगणराट् घटोद्भवोऽगस्त्यः चतुःसमुद्रपीताःएतैश्चरमे अन्तिमेजन्मनिस्थितैःउत्तमाभक्तिःसेव्यते उत्तमभक्तिलाभानं

इतियोवेत्तितत्त्वेनच्छिन्नपाशःसउच्यते स्यादन्यविषयाभक्तिर्यावन्मन्दानजायते ३८ मंदामध्यमया
नश्येन्मध्यमोत्तमयातया तस्मान्मुमुक्षुभिःसेव्याशंकरेभक्तिरुत्तमा ३९ मार्कण्डेयोपमन्युश्रीकांतनंदि
घटोद्भवैः उत्तमासेव्यतेभक्तिश्चरमेजन्मनिस्थितैः ४० जातिक्रियागुणकृताभिदातावत्सवर्त्तते नयस्य
चोत्तमाभक्तिःशिवेजन्तोःप्रजायते ४१ यथासिद्धरसाविष्टमयःप्रकृतिमात्मनः ॥ नमुञ्चतित
॥ ॥थाजन्तुर्जात्यादिंनजहात्यसौ ४२॥ ॥

तदंजन्मान्तरासंभवादितिभावः ४० जातीति जातिश्चक्रियाश्चगुणाश्चएतेकृताभिदाभेदः त्रयोशब्दानांप्रवृत्तिरितिन्यायेन तावत्सव=
र्त्तते यावत्जन्तोःजन्मिनः शिवेउत्तमाभक्तिर्नजायते ४१ जात्यादेःस्वाभाविकतयादुस्त्यजत्वंदर्शयति यथेति सिद्धरसेनलोहस्य
सुवर्णतापादकेन आविष्टम् स्पृष्टं अयोलोहः आत्मनःप्रकृतिं लोहस्वभावंयथा नमुंचति अतएवमिताक्षरायां सुवर्णस्तेयप्रायश्चि
त्तनिरूपणावसरे यस्तुताम्रादिकस्यरसवेधाद्यापादितसुवर्णरूपस्यापहारो नतत्रेदंप्रायश्चित्तंमुख्यजातिसमवायाभावादिसभि=

हितम् तथा जन्तुः शिवभक्तिहीन इति भावः जात्यादिं न जहाति न त्यजति ४२ भक्तौ सत्यां किं भविष्यतीति तदाह कांचनेति कांचनाद्रेः सुमेरोः प्रभया कान्त्या मिश्रः काकोपि तिर्यक्जातौ अधमोपीत्यर्थः यथा कनकायते कनकमिव आचरति तथा देही जीवः उत्तमया भक्त्या शिवो भवेत् ४३ उक्तार्थं दृढीकर्त्तुं श्रोतृन् अभिमुखीकरोति भक्त्येति भो द्विजाः शौनकादयः उत्तमया भक्त्या अंतःकरणोपाधिं मनोबुद्धिचित्ताहंकारलक्षणं संशयनिश्चयगर्वस्मरणविषयं चतुर्विधं बंधहेतुं निरस्य दूरीकृत्य यथा शिवः तत्स्वरूपः सन् दे

काञ्चनाद्रिप्रभामिश्रः काकोपि कनकायते यथा देही तथा भक्त्या भवेदुत्तमया शिवः ४३
भक्त्यांतःकरणोपाधिं निरस्योत्तमया शिवः यथा नित्यत्वमाप्नोति तथा शृणुत भो द्विजाः ४४
प्रतिबिंबाप्सु नष्टासु बिंबमात्रं यथा भवेत् प्रतिबिंबेषु नष्टेषु तथा देही परः शिवः ४५ संश-
योयदि युष्माकं शौनकाद्या महर्षयः अस्मिन्नर्थे निवृत्त्यर्थमेतस्येदमुदीर्यते ४६ ॥ ७ ॥

हीनित्यत्वमाप्नोति तथा शृणुत अवहिता भवतेत्यर्थः ४४ तदेव प्रतिपादयति प्रतिबिंबेति प्रतिबिंबाश्रयभूतास्वप्सु जलेषु नष्टासु नाशं गतासु यथा बिम्बमात्रं भवेत् तथा प्रतिबिंबेषु अन्तःकरणोपाधिषु नष्टेषु देही परः शिवः परमशिवः नित्यमुक्तस्वरूपो भवेत् ४५ संप्रति श्रोतॄणां संशयं संभाव्य तन्निवृत्तये प्रस्तुतपुराणश्रवणे प्रवर्त्तयन् उपसंहरति द्वाभ्यां संशयेति भो महर्षयः अस्मिन्मदुक्तेर्थे युष्माकं यदि संशयः अस्य निवृत्त्यर्थं इदं वक्ष्यमाणं हरशर्म्ममुनिना प्रोक्तमुत्तमभक्तिमाहात्म्यं नाम पुराणं उदीर्यते कथ्यते मयेति शेषः तच्छ्रुत्वा भवन्तः सर्वे छिन्नसंशयाः गतसंदेहाः भवत परमानंदलक्षणं मोक्षं प्राप्नुतेत्यर्थः ४६

४७ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांमोक्षोपायनिरूपणंनामप्रथमोऽध्यायः १॥
प्रथमाध्यायान्ते श्रवणायसावधानीकृताःसोत्कंठामुनयःसूतंपृच्छन्ति हरशर्म्मेति यत्पुराणंश्रुत्वा जात्यादिकंआदिपदेनगुणक्रि
ये वाह्ये मिथ्याअपरमार्थोभवेत् १ सूतस्तान्उत्तरयति कलाविति आगमेषुशैवपांचरात्रादिषुयोगेषुहठलंबिकाराजयोगादि
षुगुरुशिष्ययोःक्रमेपरस्परमद्रोहरूपेगतेनष्टेसतिदूत्यन्वयः २ ३ यस्येति यस्यपुराणस्यश्रवणमात्रेणमननादौसतिकिंवक्तव्य

हरशर्म्ममुनिप्रोक्तंभक्तमाहात्म्यमुत्तमम् श्रुत्वापुराणंभवतसर्वेसंछिन्नसंशयाः ४७ इतिश्रीस्कन्दोपपु
राणेप्रथमोऽध्यायः १॥ ॥श्रीऋषयऊचुः हरशर्म्मेमुनिप्रोक्तंभक्तमाहात्म्यनामकम् पुराणंब्रूहियच्छ्रुत्वा
मिथ्याजात्यादिकंभवेत् १ श्रीसूतउवाच कलौवेदेषुलुप्तेषुआगमेषुगतेषुच योगेषुदूरापास्तेषुगुरुशिष्यक्र
मेगते २ दयालुःसर्वभूतेषुहरशर्म्मामुनीश्वरः व्यासप्रसादात्कृतवान्भक्तमाहात्म्यमुत्तमम् ३ यस्यश्रवणमात्रे
णभक्तिःस्यादुत्तमाहरे तथाहिमृत्युंतरतिपुनरावर्त्ततेनच ४ स्वानुबिंबंशिवोजीवंकृत्वाजात्यादितस्यच प्रवर्त्त
यतिभक्त्याचनिवर्त्तयतितस्यतत् ५ भक्तानामुत्तमाःशंभोयेभक्त्यासक्तकिल्बिषाः तानहंवःप्रवक्ष्यामिशृणुतब्र

मितिभावः हरेशिवेउत्तमाभक्तिःप्राग्वर्णितास्यात् तदेवप्रतिपादयति तथाहीत्यादिनामृत्युंसंसारंतरति शोकमात्मवित् नसपुन
रावर्त्ततइतिश्रुतेः ४ स्वेति शिवःसर्वसाक्षीपरमेश्वरः जीवंअविद्याप्रतिफलितमात्मचैतन्यंस्वस्य अनुबिंबंप्रतिबिंबंकृत्वा त
त्सृष्ट्वातदेवानुप्राविशत् इतिश्रुतेः तस्यजीवस्यजात्यादि प्रवर्त्तयतिच पुनः तस्यजीवस्यतज्जात्यादिकंभक्त्यानिवर्त्तयति एते
न अविद्यानिवर्त्तिकाभक्तिरेवनिश्रेयससाधनमितिभावः ५ अथआख्यायिकांवक्तुंश्रोतॄन्सावधानयति भक्तानामिति शंभो

परमशिवेभक्त्यात्यक्तंकिल्बिषंपापंयैस्तादृशाःयेभक्तानांमध्येउत्तमाःश्रेष्ठाःतानहंवोयुष्मभ्यंप्रकर्षेणवक्ष्यामि हेब्रह्मवित्तमाः
अतिशयेनब्रह्मविदःमुनयःयूयंशृणुतेतिसंबंधः ६ आख्यायिकामुपक्रमते अस्तीति दक्षिणदिग्भागएवदुग्धसागरइतिरूपक
समासः निर्मलत्वविविधरत्नप्रभत्वविशालत्वादिनासादृश्यंबोध्यम् तत्रकौस्तुभमणिरिवपयस्विन्यानद्याःतीरे देवलोकस्यस्व
र्गस्य अनुबिंबेनतुल्यं अनुबिंबवत्प्रतिबिंबसदृशःदेशोस्तीत्यन्वयः ७ तत्रेति तत्रदेशेशिवस्यतुरीयस्य शिवमद्वैतंतुरीयंमन्यंत
इतिश्रुतेःममतायाःममत्वस्यआस्पदंस्थानंप्रतिष्ठाकृत्यमास्पदमित्यमरः ब्रह्मादीनांतपःसिद्धिंविदधाति तच्छीलाकांचीनामन

अस्तिदक्षिणदिग्भागेदुग्धसागरकौस्तुभः देशस्तीरेपयस्विन्यादेवलोकानुबिंबवत् ७
तत्रकांचीतिनगरीशिवस्यममतास्पदं ब्रह्मविष्णुमुनीन्द्राणांतपःसिद्धिविधायिनी ८
यत्रसापरमाभक्तिःकामाक्षीतिजगत्प्रसूः विद्योततेमहाविद्यापराकाशबिलाश्रया ९
यत्रचैकाग्ररूपेणकुर्वतस्तपउत्तमं मूलेदेवःसभगवान्सन्निधत्तेसदाशिवः १० ॥

गरीअस्तीत्यनुषंगः ८ तामेवनगरींविशिनष्टि यत्रेति द्वाभ्यांयत्रनगर्यां साप्रसिद्धा परमाभक्तिःउत्तमभक्तिरूपाजगत्प्रसूः लोक
जननीपराकाशबिलाश्रयाहृत्पुंडरीककर्णिकासूक्ष्मविवरवर्त्तिनी कामाक्षीति कश्चअश्चमश्चकामाः ब्रह्मविष्णुरुद्राः तेअक्षिणीः
यस्याः ॥ यत्कटाक्षमात्रेणत्रिमूर्त्तयःप्रादुर्भवंतीत्यर्थः महाविद्याचित्स्फूर्त्तिः विद्योतते विशेषेणद्योततेप्रकाशते ९ यत्रच स
भगवान् उत्पत्तिंचविपत्तिंचभूतानामागतिंगतिं वेत्तिविद्यामविद्यांचसवाच्योभगवानितिउक्तलक्षणःसदाशिवःएकाग्ररू
पेणउत्तमंतपःकुर्वतःसाधकस्येत्यर्थः मूलेतरुमूले सन्निधत्तेसमीपस्थोभवति ईप्सितं दातुमितिशेषः १० ॥ ७ ॥ ७ ॥

तपइति क्षिप्रंशीघ्रं तपःसिद्धिप्रदेतपःफलदातरि तत्रदेशेसर्वेमुनीश्वराःमननशीलाग्रेसराःऋषयःतपसाब्रह्मचर्यादिना कामाक्षी
नाथं ईश्वरंपरमशिवंआराधयामासुः तोषयामासुः ११ अवान्तरकथामुपक्षिपति अथेति अथानंतरंएकदामलयाचलमंदिरः तदे
काश्रयःलोपामुद्रायाःपतिःअगस्त्यःमहायोगीयमाद्यष्टांगयोगसिद्धः श्रीमान् ऋचः सामानि यजूंषिसाहिश्रीरमृतास्तानामितिश्रु
तःलक्षणयाब्राह्म्यालक्ष्म्यायुक्तःशिवक्षेत्रंकांचीदेशंआविशत् विवेश १२ मुनयइति अनूचानाःसाङ्गाध्ययनशीलाःअनूचानः

तपःसिद्धिप्रदेक्षिप्रंतत्रसर्वेमुनीश्वराःतपसाधारयामासुःकामाक्षीनाथमीश्वरं ११ अथैकदामहायोगीम
लयाचलमंदिरः लोपामुद्रापतिःश्रीमान्शिवक्षेत्रमथाविशत् १२ मुनयस्तंप्रणम्याग्रेसमभ्यर्च्ययथाविधि
इदमूचुरनूचानाःस्वासीनंकुंभसंभवं १३ श्रीमुनयऊचुः भगवन्कुंभसंभूत सर्वज्ञकरुणानिधे इच्छामोथ
समेत्येहवयंतदिहकथ्यतां १४ तपश्चसुचिरंतप्तंविहिताःक्रतवःशतं अर्चितश्चमहादेवःतथाप्यंतर्न
शुद्ध्यति १५ विषयाशारजोध्वस्तंमनश्चंचलमेवनः कथंभवित्रीमुक्तिश्चतदेतन्मुनिपुंगव १६ ॥

प्रवचनेसाङ्गेऽधीतीगुरोस्तुयदित्यमरः मुनयः अग्रेतंअगस्त्यंप्रणम्ययथाविधिसमभ्यर्च्यच स्वासीनंसुखोपविष्टंकुंभसंभवंअ
गस्त्यं अगस्त्यःकुंभसंभवइत्यमरः इदंवक्ष्यमाणंवचनंऊचुः १३ प्रश्नप्रकारमेवाह भगवन्निति हेसर्वज्ञकरुणानिधेभगवन्
इतिविशेषणत्रयेणगूढार्थज्ञानंभक्तानुकंपा शिवावतारत्वंचव्यज्यते हेकुंभसंभूतअगस्त्यवयंसमेत्यमिलित्वा यदस्तुइच्छा
मःतत्इहाद्यकथ्यतांत्वयेतिशेषः १४ तपइति तथापितपोयज्ञार्चनादिसत्वेपिअन्तःअन्तःकरणंनशुद्ध्यति विषयपरित्यागेन
परमार्थवस्तुनिस्थिरंनभवतीत्यर्थः १५ विषयेति विषयाःशब्दादयःतत्संबंधिनीआशातत्स्मासैवरजोधूलिःआवरकत्वसाम्यात्

तेन ध्वस्तं नष्टविवेकं नोऽस्माकं मनः चंचलमेव एवकारेण स्थैर्यसामान्याभावो दर्शितः एवं च मुक्तिः कथं भवित्री हे मुनिपुंगव एत
त् वस्तु वदेत्यन्वयः १६ इतीति स्पष्टं १७ मुनिस्तानुत्तरयति विनेति सर्वांतस्थे अंतर्यामिरूपेण सर्वप्राणिहृदयाश्रये महेश्वरे शि
वे ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति स्मरणात् उत्तमया भक्त्या विना पृथक् विनेत्यादिना तृतीया मानवो मनुजः कल्पशतेनापि
किमुत अल्पकालेनेत्यर्थः मुक्तिं न विन्दति न लभते १८ भक्त्यतिरिक्तसाधनस्य मिथ्यात्वं दर्शयति यदेति जनाः इमं परम महत् परि
माणमाकाशं गगनं यदा चर्मवत् त्वगिन्द्रियमिव वेष्टयेयुः व्याप्नुयुः यथा सर्वशरीरव्यापि त्वगिन्द्रियं तथा सर्वमाकाशं यदि व्याप्नु

इत्याकर्ण्य वचस्तेषामगस्त्यः प्राह तानिदं ध्यायन् हृदि महेशानमंबिकापतिमव्ययम् १७ श्रीअ
गस्त्य उवाच विनाचोत्तमया भक्त्या सर्वांतस्थे महेश्वरे नहि कल्पशतेनापि मुक्तिं विंदति मानवः १८
यदा चर्मवदाकाशं वेष्टयेयुरिमं जनाः तदा भक्त्या विना शंभोः शोकस्यांतो भविष्यति १९ भ
क्तिश्च तादृशी ज्ञेया सर्वत्यागपुरःसरं तदेकदास्यसंप्राप्तिः चरमे सा भवे भवेत् २० ॥

युरित्यर्थः तदा शंभोः भक्त्या विना शोकस्य संसारस्य अन्तो नाशो भविष्यति नान्यथेत्यर्थः एतेन यावदाकाशवेष्टनं यथा मिथ्या तथा भ
क्तिं विना मुक्तिरपीति भक्तिभिन्नोपायस्य मिथ्यात्ववर्णनात् मिथ्याध्यवसितिरलंकारः १९ उत्तमभक्तिस्वरूपमाह भक्तिश्चेति
सर्वत्यागपुरःसरं समस्तविषयत्यागपूर्वकं तदेकदास्यसंप्राप्तिः तस्य शिवस्य यत् एकं दास्यं किंकरत्वं तस्य सम्यक्प्राप्तिः
तादृशी भक्तिः उत्तमा ज्ञेया सा च भक्तिः चरमे भवे अन्तिमजन्मनि भवेत् २० ॥ ॐ ॥ ॐ ॥ ॐ ॥

संप्रतिमुनिः स्वाभिमानपरिहाराय गुरुपरंपराप्राप्तं शिवतत्वं वक्तुं प्रतिजानीते सर्वज्ञेनेति कुमारेण स्कन्देन सर्वबन्धैः सकलसांसारिकविषयैः २१ इतिहासं प्रवर्त्तयति पुरेति श्रीमच्च तत् भोगपुरं भोगः सुखं तदनुकूलं पुरं नगरमित्यर्थः शिखरविशेषणमेतत् दिव्यद्योतनशीले अंगं च रूपं च ते अव्यय सौन्दर्ये यस्याः तया देव्या गौर्या सः विजहार विहारं कृतवान् २२ विहारमेवाह चतुरंगेति चतुरंगस्य राजादिप्रसिद्धक्रीडाविशेषस्य विनोदेन पार्वतीं मोदयामास तोषयामास तत्र क्रीडने देवी लीलया विलासेन ईशं जिगाय जितवती तत्र हेतुमाह यद्वशमिति जगत् भुवनं यस्याः मूलप्रकृतिरूपायाः वशं अधीनं त्रिगुणात्मकत्वाज्जगत इति भावः २३

सर्वज्ञेन कुमारेण प्रोक्तमद्य वदामि वः यस्य श्रवणमात्रेण सर्वबन्धैः प्रमुच्यते २१ पुरा कैलासशिखरे श्रीमद्भोगपुरे वसन् विजहार महादेवो देव्या दिव्यांगरूपया २२ चतुरंगविनोदेन मोदयामास पार्वतीं जिगाय देवी तत्रेशं लीलया यद्वशं जगत् २३ इदमाह पराशक्तिर्भगवन्निर्जितोस्यलं अजितोस्मीति तां शम्भुरेवमासीन्मिथः कलिः २४ प्रवृत्ते कलहे तत्र प्रहस्योवाच शंकरः मायासि त्वं यतो लोका विजिताः प्राकृतास्त्वया २५ अहं च निर्मलो जय्यः सत्यं मिथ्या न वाधते श्रीदेव्युवाच निर्मलो मलिनो वा त्वमास्तां मा का

तत् किं कृतमित्यत आह इदमिति पराशक्तिः चिद्रूपा पार्वती इदं वचनमाह हे भगवन् त्वं अलमत्यंतं निर्जितोसि मयेति शेषः ततः शंभुः अजितोस्मि अपराजितोस्मि एवं मिथः परस्परं कलिः कलहः आसीत् २४ प्रवृत्त इति त्वं मायासि अघटितघटनापटीयसी त्वं यतः कारणात् प्राकृताः प्रकृतिजन्या लोकाः त्वया विजिताः २५ अहं च निर्मलः निर्विकारः अतएव अजय्यः जेतुमशक्यः अतः मिथ्यावस्तु सत्यं त्रिकालाबाध्यं चैतन्यं न बाधते तिमिरं तेज इवेति भावः तदाकर्ण्य देव्या किमुत्तरं दत्तं तत्राह त्वं निर्मलो मलि

नोवातद्दास्तां आकाशवत् आकाशस्येवप्रथाप्रसिद्धिःनीरूपस्यगगनस्यनिर्मलत्वंमलिनत्वंवायथा दुरूपपादं तथानिर्गुणस्यप
रमशिवस्यइतिभावः २६ जितइति त्वंजितोसि अथइदानीं अजितोस्मि इतिवदसीतिशेषः अतःसत्यंकर्ममिथ्येवबाधते शिवो
स्यप्रत्युत्तरमाह देवीति तव मायायाव्यवहारःलोकयात्रारूपश्च मयि स्वप्रकाशचैतन्यरूपेवस्तुतःअनन्वितःअसंबद्धःअध्यासः
स्य अतात्विकत्वादितिभावः २७ सर्वेति सर्वस्यवस्तुजातस्यप्रकाशकेस्फूर्तिजनके तस्यभासासर्वमिदंविभातीतिश्रुतेः तादृ
शेमयिअयंलोकव्यवहारःसत्यवत्नप्रतिभासते देवीपुनरुत्तरयति हेशंकरव्यवहारेणतवप्रकाशः विज्ञेयोज्ञातव्यः व्यवहा

॥जितोस्यथाजितोस्मीतिसत्यंमिथ्येवबाधते श्रीशिवउवाच देवित्वद्व्यवहारश्चवस्तुतोनन्वितोम
यि २७ सर्वप्रकाशकेनायंसत्यवत्प्रतिभासते श्रीदेविउवाच व्यवहारेणविज्ञेयःप्रकाशस्तवशंक
र २८ समयाचान्वितस्यैववन्हेःकाष्ठयुजोयथा श्रीशिवउवाच॥ अप्रकाशंजगत्सर्वंस्वयंज्यो
॥ तिरहंशिवे २९ ॥

रंविना तद्ज्ञानस्य असंभवइतिभावः २८ सइति सचप्रकाशः मयाशक्त्याअन्वितस्यैव संबद्धस्यैव शिवः शक्त्यायुक्तो य
दिभवतिशक्तः प्रभवितुं इत्यादिदर्शनात् तत्रदृष्टांतमाह वन्हेरिति काष्ठसम्बंधं विना वन्हिस्वरूपं यथा नप्रकाशते त
थेतिभावः शिवोस्योत्तरमाह अप्रकाशमिति हे शिवे सर्वंजगत् दृश्यजातं अप्राकाशं जडत्वादित्यर्थः अहंतु स्वयंज्योतिः
स्वप्रकाशरूपः प्रदीपवत् अत्रायं पुरुषःस्वयंज्योतिरितिश्रुतेः २९

आकाशेति आकाशवत् अरूपोस्मि निर्गुणत्वादिति भावः इच्छया संकल्पेन रूपवाँश्च असि सोकामयत बहुस्यां प्रजायेयेति श्रु
तेः देवीपुनस्तत्तरयति इच्छेति हेमहेश्वर इच्छा साध्यं संकल्पजन्यं इदं परिदृश्यमानं रूपं मुंडमालादियुक्तं यद्बिभर्षि तत्तवैव र
मणीयमिति परिहासउक्तिः ३० मालेतिस्पष्टम् ३१ लोचनमिति आतता आसमंतात् विस्तृता प्रलंबा प्रकर्षेण लम्बमाना अस्थ्नां
कीकसानां कीकसंकुल्यमस्थि चेत्यमरः तेषां स्रक् माला ३२ आलेपनमिति करभाजनं करपात्रम् पात्रामत्रे च भाजने

॥॥ आकाशवदरूपोस्मि रूपवानस्मि चेच्छया श्रीदेव्युवाच इच्छासाध्यमिदं रूपं यद्बिभर्षि महेश्वर ३० त
वैव रमणीयं च तरुणेन्दुकलाधर मालामुंडमयी मौलौ जटाभारोत्र पन्नगाः ३१ लोचनं ज्वलनं वन्हिः कुंड
लं कुंडलीश्वरः भोज्यं च गरलं घोरं प्रलम्बास्थि स्रगातता ३२ आलेपनं चिताभस्म कपालः करभाजनं भूष
णान्यहिरूपाणि वसनं च गजाजिनं ३३ महाश्मशाने संचारो वृद्धोक्षश्चापि वाहनम् भूतसंघाः परिजना बांध
वास्तेप्यकिंचनाः ३४ लब्धं त्वया परं रूपं वदमलं तपस्विना पश्य मद्दृष्टिसंस्पृष्टान् सर्वसौभाग्यशालिनः ३५
साध्यान्महद्भिः क्रतुभिः लोकान् ब्रह्मादिसेवितान् नयनानंदजनकं यदि रूपं भवेत्तव ३६ तथाभिरू
प्याद्विजयी भविष्यसि न संशयः उक्तमेतन्मया सर्वं क्षम्यतां विजयी भवान् ३७ ॥ ७ ॥ ७ ॥

इत्यमरः ॥ गजस्य अजिनं चर्म्म अजिनं चर्म्मेत्यमरः ३३ ॥ महाश्मशाने इति वृद्धोक्षः वृद्धवृषभः अचतुरेत्यादिना
निपातः अकिंचनाः दरिद्राः ३४ लब्धमिति तपस्विना दीनेन मुनिदीनौ तपस्विनौ इति विश्वः संप्रति देवी स्वमहत्त्वं दर्शयति प
श्येति मम दृष्ट्या कटाक्षेण संस्पृष्टान् सम्यक् निर्मितान् इन्द्रलोकानित्यस्य विशेषणं ३५ साध्यानिति स्पष्टं पूर्वार्द्धे देवी पुनः शि
वमाक्षिपति नयनेति ३६ तथेति तथा तर्हि आभिरूप्यात् मनोज्ञरूपत्वात् उपसंहरति उक्तमिति ३७ ॥ ७ ॥ ७ ॥

इतीति साची कृतः तिर्यक् कृतः आस्येन्दुः मुखचंद्रो यया परस्पराक्षिक्षेपण पराङ्मुखीभूतेत्यर्थः तथा आलापितः संभाषितः शुकार्भकः शुकशावकः यया इदमपि पराङ्मुख्याः चिन्हं ३८ अथेति स्वाभिन्नां स्वःतादात्म्यमापन्नां चन्द्रचन्द्रिकयोरिव शिवशक्त्योरभेदात् ३९ देवीसांमुख्यसम्पादनाय शिवः प्राह यदिति यद्यस्मात्कारणात् अहं न वधूः पुमान्वा भवामि स्त्रीत्वपुंस्त्वयोः कल्पितत्वात् नच स्त्री न षण्डः पुमान् नैव च त्वं इति दर्शनात् अतः लज्जाभिमानौ स्त्रीपुंसधर्मौ नस्त इति भावः ४० स्वमाहात्म्यं दर्शयितुं पुनः शिवो वदति न

इत्युक्त्वा मौनमगमज्जगतां जननी शिवा॥ तस्थौ साचीकृतास्येन्दुरालापितशुकार्भका ३८ अथ मन्दस्मितं कृत्वा भूतानां पतिरीश्वरः पराङ्मुखीमिदं प्राह स्वाभिन्नां शक्तिमम्बिकां ३९ शिव उवाच यदहं न वधूर्देवि न पुमान्वा भवामि च न मे लज्जाभिमानश्च व्योमवत्सर्वतः स्थितः ४० नयनानन्दनं रूपं यदि ते प्रीतिसाधनम्॥ पश्याद्भुतमिदं रूपं आकर्णपूर्णलोचने ४१ इत्युक्त्वा सर्वलोकानामीशानः शैलकन्यकां यथा च तेजः काठिन्यं दधौ रूपमनुत्तमम् ४२ सहस्रकोटिकंदर्पसारसौंदर्यकोमलं कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम् ४३ मंदस्मितमुखांभोजं प्रसन्नायतलोचनं दिव्याभरणमालाढ्यं दिव्यगंधानुलेपनम् ४४ उदारहारकेयूरकटकांगदकुंडलं महार्हवसनोपेतं मणिकांचीगुणान्वितं ४५ रत्ननूपुरसंयुक्तमुल्लसत्तिलकालिकं चक्षुःप्रक्षाल्य देवानाम

यनेति यद्येवं इदं मया दर्शयिष्यमाणं अद्भुतं रूपं पश्येत्यन्वयः आकर्णमित्यादि संबोधनेन तव नेत्रयोः साफल्यं भविष्यतीति भावः ४१ इतीति तेजः सौरचान्द्रादि यथा काठिन्यं दधौ तथा पिंडीभूतदिव्यतेजोमयं रूपं दधावित्यन्वयः ४२ तदेव रूपं पंचभिर्वर्णयति सहस्रेत्यादिना ४३ ४४ ४५ ४६ गौरीति रूपं निर्माय अद्रिराजं अलमकरोत् अलंचकारेत्यर्थः ४७

४७ इतिश्रीमानवल्लुपनामकचन्द्रसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांशिवपार्वतीसंवादोनामद्वितीयोऽध्यायः २॥ ॥ॐ॥ ॥सम्प्रतिदिव्यरूपदर्शनविस्मितादेवीपरमशिवंनवभिश्लोकैस्तुष्टावेत्याह सूतः तदेति १ देवीस्तौति नमइत्यादि २ मनसइति यतोवाचोनिवर्त्तन्तेअप्राप्यमनसासहेतिश्रुतेः विश्वाधिकायनतत्समश्चाभ्यधिकश्चविद्यतइतिश्रुतेः

गौरीविलोचनचकोरकिशोरलेह्यंसौंदर्यसारसमुदायसमुज्वलांगं निर्माय रूपमथनिर्मलसेव्यपादः ४६ शीतांशुमौलिरकरोदलमद्रिराजम् ४७ इतिश्रीस्क न्दोपपुराणेद्वितीयोऽध्यायः २॥ ॥श्रीसूतउवाच तदा हैमवतीदृष्ट्वारूपमत्यद्भुतंविभोः विस्मिताप्रणतादेवंतुष्टावपरमेश्वरम् १ श्रीदेव्युवाच नमःशिवायदेवाय शंभवेसर्वसाक्षिणे इच्छाधीनस्वरूपायविरूपाक्षायतेनमः २ मनसोवचसोवापिनमस्तेदूरवर्त्तिने॥ विश्वाधिकायरुद्रायवीतरागक्रुधेनमः ३ सृष्टयेब्रह्मरूपाय रक्षायैविष्णवेनमः संहारायप्रपंचस्यनमस्तेरुद्रमन्यवे ४ यस्सत्ताजगतःसत्तायद्भासाभासतेजगत् इदमारोपभिन्नायशिवायज्योतिषेनमः ५ कालकर्मविदूरायनमःकैवल्यरूपिणे कारुण्यनिधयेतुभ्यंकालकंठायतेनमः ६ योन्तःप्रविश्यसर्वाणिभूतानिभुवनेश्वरः संजीवयतिसर्वासानमस्तस्मैशिवायते ७ भक्तिगम्यायभव्यायभवपाशच्छिदेसतां भानुमंडलवासायभर्गायभवतेनमः ८ चतुर्भुजायमहतेदेवायदहनात्मने दशात्रयविहीनायदक्षाध्वरभिदेनमः ९ ॥ ॐ ॥

३ सृष्टयेइति शिवमद्वैतंतुरीयंमन्यन्ते इतिश्रुतेः ४ यस्सत्येतितस्यभासासर्वमिदंविभातीतिश्रुतेः ५ कालेतिस्पष्टम् ६ योन्तइति अन्तःप्रविष्टःशास्ताजनानामितिश्रुतेः ७ भक्तिगम्यायेतिभर्गायअविद्यादोषभर्जनायअनेनगायत्रीप्रतिपाद्यत्वंशिवस्यैवेतिध्येयम् ८ चतुर्भुजायेति दशात्रयं बाल्यकौमारवा र्धकं तेनविहीनायनित्यतारुण्यायेत्यर्थः ९

स्तुतिमुपसंहरति इतीति आहेतिशेषः १० स्तुत्याप्रसन्नेनशिवेन वरंवृणीष्वेति कथितादेवी शिवंप्रार्थयते असद्भुतमिति भक्तेरेव
मुक्तिसाधनत्वात् तत्प्रार्थनंयुक्तमेवेतिभावः ११ प्रागुक्ताक्षेपवचनैर्भीता देवी शिवंक्षमापयति क्षमस्वेति १२ एवंदेव्याप्रार्थितः शिवः
किमकरोदित्यतआह इतीति यवनिकां तिरस्करिणीं प्रति सीराप वनिकास्याात्तिरस्करिणीचसाद्इत्यमरः १३ अनंतरवृत्तमाह
अथेति भित्यंतरे भित्तिमध्येस्वांस्वीयांप्रतिमांप्रतिबिंबं प्रतिमानंप्रतिबिंबंप्रतिमेत्यमरः १४ स्वयंदृष्ट्वादेव्यै दर्शयामास इत्याह

इतिस्तुतोमहादेवःप्रसन्नःपार्वतीपतिः वरंवृणीष्वकल्याणिमनोयत्रप्रवर्त्तते १० श्रीदेव्युवाच असद्भुतमिदं
दृष्टंतवरूपंजगत्पते अनेनपूर्णःकामोमेभक्तिरस्तुस्थिरात्वयि ११ क्षमस्वकरुणासिंधोवाङ्मनःकायसंभवं अपरा
धंममस्वामिन्क्षमित्वाकरुणांकुरु १२ इतिदेव्यांब्रुवाणायांनंदिनंप्राहशंकरः कुरुदूरेयवनिकांमत्तोव्यवधायि
नीम् १३ अथतेनापनीतायांयवन्यांरत्ननिर्मिते भित्यंतरेस्वांप्रतिमांददर्शभगवान्हरः १४ दर्शयामासपार्वत्यैपश्यपश्ये
तिचांतिकेगौरीतंप्रार्थयामासप्रतिबिंबंतवेश्वर १५ अत्रागच्छतुतेशक्त्यावरएषममोत्तमः श्रीअगस्त्यउ॰ तत्क्षणेभगवान्
शंभुरपरिच्छेद्यवैभवः १६ भोसुंदरममाभ्याशेचरत्वमितिचाह्वयत् कर्तुंचापितथाकर्तुमन्यथाकर्तुमीशितुः १७ प्रतिबिंबोनुम
साभूत्सुंदराख्योगणाग्रणीः मनसापिविधेःकर्तुमशक्यंरूपमुज्ज्वलम् १८॥ ॥ ॐ ॥ ॐ ॥ ॐ ॥

दर्शयामासेति तत्प्रतिबिंबदर्शनेन विस्मितादेवी शिवंप्रार्थयते गौरीति १५ तामेवाह अत्रेत्यर्द्धेन अगस्त्योमुनीनाह तत्क्षणे
इति १६ शिवःप्रभावंदर्शयितुंतदाज्ञाप्रकारमाह भोइति अभ्याशे समीपे सदेशाभ्याशसविधेत्यमरः तथाअकर्तुमितिच्छेदः १७
प्रतिबिंबेति मनसापि किमुतहस्तव्यापारेणेत्यर्थः १८ ॥ ॐ ॥ ॐ ॥ ॐ ॥ ॐ ॥

पश्यंस्यामितिस्पष्टम् १९ तवेति इदंमदीयंजन्मसाफल्यं सफलतां अश्नुतां प्राप्नोतु अशूव्याप्तौ २० शशासेति इदंभस्मपात्रं २१ सुंदरा
येति भस्माधारधरइत्यादि त्रीणिनामानि दधाविसुत्तरेणान्वयः २२ दधाविति भस्माधारभृता भस्मपात्रधरेण तेनेतिशेषः २३ आलिं

पश्यंस्यांसुंदरोदेव्यांप्रणम्योवाचशंकरं अनुजानीहिमांदेव दासोस्मिकरवाणिकिम् १९ तवाज्ञापालनाज्ज
न्मसाफल्यमिदमश्नुतां इतितद्वाक्यमाकर्ण्यसस्मितश्चंद्रशेखरः २० शशासेदंगृहाणेतिसचासीद्भस्मपात्र
भृत् स्वयंगृहीत्वातद्भस्मदधारपरमेश्वरः २१ सुंदरायददौसर्वास्वशक्तिंसुंदरेश्वर भस्माधारधरःशंभोःप्रति
बिंबःससुंदरः २२ दधावेतानिनामानिशिवेनैवकृतानिसः भस्माधारभृतादत्तमादायभसितंहरः २३ आलिं
पन्सर्वगात्राणिदधौप्रीतिमनुत्तमां संध्याताण्डवलीलासुप्रवृत्तासुदिनेदिने २४ विप्रकीर्णजटःश्रांत्यातदं
से भुजमर्पयत् नंद्यादिगणनाथानांक्वचिदाह्वानकर्म्मणि २५ तन्नामाम्रेडयामासहासयन् गिरिजांहरःशि
वोऽहमितियंधन्यःक्षणंसंचिंत्यमुच्यते २६ सएवतंविलोक्येशःसुंदरोऽस्मीत्यचिंतयत् धारयन्फणिमंजी
रंपादेतस्यकटीतटे २७ गजाजिनंमृगंपाणौसर्वांगेभस्मनिर्मलं कंठेस्थिमालांविन्यस्यश्रवणेफणिकुंडलं २८
मौलौजटाभरंतत्रकलाधरकलामपि हरोवृद्धोक्षमारोप्यचालयन्प्रमथैःसह २९ स्वतंत्रंसुंदरोप्रीत्याकैलासशि
खरांगणे सेवार्थमागतान्देवान्तत्पादेसन्यपातयत् ३० चुचुंबचकपोलेतंकपालीवृषभस्थितं सुंदरस्त्वंशिवोसी

पन्नितिस्पष्टम् २४ विप्रकीर्णेति तदंशे तस्यसुंदरस्य अंसेभुजशिरसिभुजंस्वीयं २५ तदिति आम्रेडयामास असकृदुच्चारयामास आम्रे
डितंद्विस्त्रिरुक्तमित्यमरः २६ सम्प्रति परमानुग्रहेण प्रतिबिंबस्वरूपेसुंदरेस्वकीयमैश्वर्यंसमर्पयामासेतिवर्णयति धारयन्नित्यादिप

द्वारीति एतान् देवान् बिरुदावलीः स्तुतिप्रबंधविशेषान् वर्ण्यमानां कविरुद्वर्णेनप्रचुरोज्वला वाक्याडंबरसंयुक्ता सामता बिरुदाव
लीतिलक्षणात् ३२ सृष्टिमिति पंचकृत्यानीत्यर्थः ३३ कचिदिति वादयामास सुंदरद्वारा संदेहं निवर्तयामासेत्यर्थः पशूनां जीवानां पाशे

द्वारिवेत्रभृतो नेतान्वेदांतानामगोचरः सुंदरेशानुबिंबेति बिरुदालीरपाठयत् ३२ सृष्टिंस्थितिंचसंहारं
जगतां जगदीश्वरः तिरोधानानुग्रहौ चसुंदरंसमशिक्षयत् ३३ कचिच्चसनकादीनां संदेहं परिपृच्छतां
सुंदरं वादयामासपशुपाशेषुनिर्णयम् ३४ किमत्रबहुनोक्तेनविहायगिरिजामुमां सर्वासांसंपदां शंभोस्त
त्रसुंदरोभवत् ३५ अथदेवाश्चदैतेयाः संभूयकृतनिश्चयाः प्रार्थयंतोमृतंसर्वेममंथुःक्षीरसागरम् ३६ मंथा
नंमंदरंकृत्वायोक्त्रंकृत्वातुवासुकिं सर्वोषधीश्चनिष्पीड्यप्रक्षिप्यपयसांनिधौ ३७ मथ्यमानेमहांभोधौप्रय
त्नाद्देवदानवैः तेषामशक्नुवन्सोढुंभुजनिष्पीडनंहरेः ३८ निशिताश्मक्षितिक्षुण्णोवासुकिर्व्यथितःश्वसन् उ
द्वामविषंघोरंतत्तुपाथोधिसंगतम् ३९ हालाहलमितिख्यातंप्रलयानलसन्निभं संबभूवघनीभूतंयेनपुष्पंज
गत्त्रयम् ४० तदानीं पर्वतान्सिंधून्निर्दहत्सैंधवंगरं यूथंसुरासुराणांतद्दावदावानिवारितम् ४१ हाला
हलोग्रवेगेनव्यशीर्यंतसुरासुराः प्रधानेष्वपिलोकानां नकश्चित्स्वस्थदृश्यत ४२ दुद्रावद्रुहिणोभीत्यापुष्टःका
र्स्न्येयया हरिः ननाशसुनासीरःशशामशमनोयमः ४३ अचेतनःप्रचेताश्चनिष्क्रांतोनिधिनायकः अन्येसुरा

पुबंधनेषु ३४ उपसंहरति किमत्रेति गिरिजां विहाय पार्वतीं विनातस्याःशिवैकपतिव्रतात्वात् इतिभावःमहादेवं हिलातवसतिसतीना
मचरमेकुचाभ्यामालिंग्यः कुरवकतरोरप्यसुलभः इतिश्रीमच्छंकरभगवत्पादाः ३५ अथेत्यादियावदध्यायसमाप्तिहालाहलपानप्र

४५ ४६ ४७ ४८ ४९ इतिमानवस्तुपनामकनृसिंहविरचितायां स्कन्दोपपुराणव्याख्यायांभक्तिविलासप्रकाशिकायांसुंदरेश
माहात्म्यवर्णनंनामतृतीयोऽध्यायः ३॥ ॐ॥ ॥ संप्रतिप्राप्तैश्वर्यःसुन्दरःगर्वितोऽभूदिति तंनिवृत्तिपूर्वकंपूर्णानुग्रहंमुनीन्प्रति अ
गस्त्योवर्णयति यदाज्ञयेतियद्यस्मात् पश्यतामिति षष्ठीचानादरेद्वितिसूत्रेणअनादरेषष्ठी १ तस्येति सर्वोत्सलात् तदवलेपज्ञानं यु

सिद्धचारणगंधर्वाःमुनयोन्येचसेवकाःशरणंजग्मुरीशानंकैलासेवृषभध्वजम् ४५ आकर्ण्यहालाहलवेगमारादुमाप
तिस्सुंदरमादिदेश निर्गत्यतूर्णंसचघोरमेतत्जग्राहजंबूफलवत्कराग्रे ४६ आनीलहालाहलशोभमानमालोक्य
न्सुंदरहस्तमीशः संदर्शयामासगिरेःसुतायैसभृंगमंभोजमिवप्रबुद्धम् ४७ हालाहलंसोपिचसुंदराख्योदत्तौतदादा
यतदीयहस्तात् हरोऽपिवत्सोपितदाज्ञयाचतदीयकंठाभरणंबभूव ४८ त्रैलोक्यस्यानिभूतानिलीलाकृष्टमहाविषं
आलोक्यसुंदरंसाक्षादमन्यंतमहेश्वरम् ४९ इतिश्रीस्कंदोपपुराणेतृतीयोऽध्यायः ३॥ ॥श्रीअगस्त्यउ॰ यदाज्ञयाम
हेशस्यनिजग्राहमहाविषं तदासीत्सुंदरोदृप्तोगणेंद्राणांचपश्यतां १ तस्यावलेपंविज्ञायसर्वोत्साचंद्रशेखरः शिक्षां
समुचितांकर्तुंसंकल्पमकरोत्तदा २ एतस्मिन्समयेदेव्याःप्रसिद्धपरिचारिके विख्याते निंदितेत्येकाकमलिन्यपराख्य
या ३ उभेगत्वांबिकोद्यानपुष्पाण्याहर्तुमतिष्ठतः सुंदरोपितदाशंभुम्ंडाणीसहितमिथः ४ विज्ञायविचचारादेरूपांतेपुष्पि
तद्रुमे नगरेमल्लिकोद्यानेनीलाद्रौविद्युताविव ५ निष्टप्तकांचनच्छायेकिंशुकप्रतिमांशुके स्थलारविंदसश्रीकचरणौ

कमितिभावः २ एतस्मिन्निति अनिंदिताकमलिनीतिद्वेपरिचारिके ३ उभेइतिस्पष्टम् ४ विज्ञायेतिनीलाद्रौविद्युताविवेतिपूर्णोपमा
५ निष्टप्तेत्यादित्रयोदशभिःतयोःपादादिकेशांतंवर्णयति निष्टप्तेति किंशुकस्यपलाशपुष्पस्यपुष्पेलुक् प्रतिमंसदृशं अंशुकंवस्त्रंययोस्ते

पादौ वर्णयति स्थलारविंदेति इदं च स्त्रीणां शुभलक्षणं तथा चोक्तं स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं सममिति ६ मनोभवेति रोमहीने समे स्निग्धे यज्जंघे क्रमवर्तुले सा राजपत्नी भवति विशिरे सुमनोहरे जानुनी वर्णयति कूर्मेति वृत्तं पिशितसंलग्नं जानुयुग्मं प्रशस्यते इति चदर्शनात् शुभलक्षणं वर्णितं भवति ७ जघनं वर्णयति निर्मृष्टेति भगस्य भालं जघनं विस्तीर्णं तुंगं मांसलं इति लक्षणात् नितंबं वर्णयति कंदर्पेति कपित्थफलवद्वृत्तौ मृदुलौ मांसलौ घनौ स्फिचौ वलिविनिर्मुक्तौ रतिसौख्यविवर्द्धनौ इति च ८ किंचिदिति गंभीरा दक्षिणावर्त्ता नाभी स्यात् सुखसंपदे रोमराजीं वर्णयति आलक्ष्येति ऋज्वी तन्वी च रोमाली यस्याः सा शर्मेन मेभूः मध्यं वर्णयति करांतेति

मनोभवनिषङ्गाभजङ्घायुगविराजते कूर्मराजवरांगश्रीजानुपीनोरुमंथरे ७ निर्मृष्टहेमफलकसमानजघनोन्नते कंदर्परथचक्राभनितंबालंबिमेखले ८ किंचित्समुच्छ्वसन्नीवीदृश्यनाभिमनोहरे आलक्ष्यरोमलतिके करांतमितमध्यमे ९ वलित्रयविरोचिष्णुबद्धपत्रोदरोज्ज्वले आपीनोपचितस्निग्धसंप्रवल्गुपयोधरे १० हारप्रालंबगुच्छांतर्गतगोस्तनचूचुके रत्नांगुलीयमालांशुमंजरीपुंजकर्बुरे ११ कुटिलारक्तनखरौ बिभ्राणे करपल्लवौ ॥ स्थूलविद्रुमबंधाढ्यस्फुरत्कटककंकणौ १२ ॥ ७ ॥ ८ ॥ ९ ॥

मध्यक्षामा च सुभगा इति लक्षणात् ९ वलित्रयमुदरं च वर्णयति वलित्रयेति भोगाढ्या सवलित्रया उदरेणातितुच्छेन विशिरेण मृदुत्वचा योषिद्भवति भोगाढ्या नित्यमिष्टान्नसेविनी इति लक्षणात् कुचौ वर्णयति आपीनेति घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधराविति लक्षणात् चूचुके वर्णयति १० हारेति सदृशं चूचुकयुग्मं शस्तं श्यामं सुवर्त्तुलं इति लक्षणात् ११ करौ वर्णयति कुटिलेति अंभोजमुकुलाकारमंगुष्ठांगुलिसंमुखम् हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते इति लक्षणात् १२ ॥ ७ ॥

भुजौ वर्णयति केयूरेति केयूरांगदयोः पर्यायत्वेपिसामान्यविशेषभावात्पीनस्त्वंशोभनौशुभलक्षणौ अदीर्घावकृशौभुजाविति लक्षणात् कर्णौवर्णयति स्फुरदिति लंबौकर्णौशुभावर्त्तौसुखदौचशुभप्रदाविति लक्षणात् भुजशिरस्स्पृष्टत्वेनकर्णयोः शुभ॰ लक्षणमुक्तम् १३ कपोलेति दर्पणवत् अतिस्वच्छत्वेनप्रतिबिंबयोग्यत्वंशुभलक्षणंसूचयति शस्तौकपोलौवामाक्ष्याःपीनौ वृत्तौसमुन्नताविति लक्षणात् अधरंवर्णयति मंदेतिपाटलोवर्त्तुलः स्निग्धोरेखाभूषितमध्यभूः सीमंतिनीनामधरोधराजानिप्रियो भवेत् मसृणोमत्तकाशिन्याश्चोत्तरोष्ठःसुशोभनइतिलक्षणात् १४ नेत्रेवर्णयति श्वसितेति ललनालोचनेशस्ते रक्तांतेकृष्णतार

केयूरांगदसंघृष्टकोदधानेशोभनौभुजौ स्फुरद्भुजशिरस्स्पृष्टकुंडलश्रुतिमंडिते १३ कपोलस्थलसंक्रांतस शैलवनविष्टपे मंदस्मितमयज्योत्स्नापरभागोज्वलाधरे १४ श्वसितामोदसंभ्रांतभृंगसंत्रस्तलोचने मौ क्तिकाभरणोदारनासादंडविराजिते १५ अपांगलीलायमुनातरंगाक्रांतदिक्तटे भ्रूविभ्रमसमाहूतरति कांतशरासने १६ अर्द्धेन्दुललितालीककस्तूरीतिलकोज्वले आनीलवेणिकोटिस्थकपश्चाद्भागपदांबुजे

के गोक्षीरवर्णविशदेसुस्निग्धेकृष्णपक्ष्मणीतिलक्षणात् नासांवर्णयति मौक्तिकेति समवृत्तपुटानासालघुच्छिद्राशुभावहा इ तिलक्षणात् १५ नेत्रान्तौवर्णयति अपाङ्गेतिभ्रुवौवर्णयति भ्रूविभ्रमेति भ्रुवौसुवर्त्तुलेतन्व्याःस्निग्धेकृष्णेअसंहते प्रशस्तेमृदुरो माणौसुभ्रुवःकार्मुकाकृतीतिलक्षणात् १६ भालंवर्णयति अर्द्धेंद्विति भालःशिराविरहितोनिर्लोमार्द्धेन्दुसन्निभः इतिलक्षणात् केशान्वर्णयति आनीलेति केशाअलिकुलच्छायाःसूक्ष्माःस्निग्धाःसुकोमलाः किंचिदाकुंचिताग्राश्चकुटिलाश्चातिशोभनाः इ

मुखंवर्णयति लावण्येति मुक्ताफलेषुछायायास्तरलत्वमिवान्तरा प्रतिभातियदङ्गेषुतल्लावण्यमिहोच्यतेइतिभूपालः चन्द्रबि
म्बसाम्यवर्णनेनवर्त्तुलत्वनेमैत्यादियोगात्शुभलक्षणमुक्तंसमंसमांशं सुस्निग्धंस्वामोदंवर्त्तुलंमुखमितिलक्षणात्सौन्दर्याति
शयंवर्णयति पादेति १८ तद्दर्शनेनसुन्दरस्यचक्षुःप्रीतिमाह सुन्दरइति तत्रोत्प्रेक्षतेवैरादिति १९ सार्द्धत्रयेणमनः सङ्गमाह नि

लावण्यरसनिष्यन्दचन्द्रबिंबसमानने पादांबुजपरागश्रीपराजिततिलोत्तमे १८ सुन्दरस्तेतु दृष्ट्वासी सद्यः स
भ्रांतलोचनः वैराद्दिवनिजारातौप्रतिबिंबपुरद्रुहः १९ निर्विभेदतदाबाणैःसुंदरंकुसुमायुधः अहोनिर्माणचातु
र्यमहोतारुण्यजंभणं २० अहोसौंदर्यसन्नाहोनिस्तुलाकल्पचातुरी आपादकेशमंगेषु ॥ स्निग्धयोर्मुग्धयो
र्मम २१ * निमग्नंमानसंभूयोनोत्थातुंशक्तिमिच्छति किमस्याःप्रतिबिंबंस्यादियमस्याभवेदियम् २२ इमेकु
तःकिमुत्स्वप्नोमायावामान्मथीपुरः श्रीअगस्त्यउ· आपीनौकठिनावेतौनिस्तुलौनिर्मलावुभौ २३ संहतौसंप्रवल्ला
तौअन्योन्यस्पर्द्धिलक्षणौ स्तनौवीक्ष्यानयोर्मन्येनकस्यापिभवेद्धृतिः २४ जन्मकोटितपश्चर्य्याफलमालिंगनंसकृत्
योन्वहंस्वादतेकोपमनयोरधरामृतम् २५ प्रार्थयामिस्वयंदास्यमदसीयमहंत्विति सुंदरःस्वदुराचारमनुरागंनिगू
हितुं २६ नशशाकतदाकृष्टःसमीपमनयोरगात् तेचतंमदनाकारंपश्यंत्यौपक्ष्मलेक्षणे २७ मनोभवरसावेशात्
अवशेसंबभूवतुः कथंनुपंचभिर्बाणैःसममेवमनोभवः २८ त्रीन्निर्बिभेदबलवान्समग्राद्भुतविक्रमः सव्रीडविभ्र
मोदारैःकटाक्षैःसुन्दरस्तयोः २९

र्बिभेदेत्यादिना २० २१ २२ गुणवर्णनमाह सार्द्धद्वयेन आपीनाविस्यादिना २३ २४ २५ चिन्तामाह प्रार्थयामीति लज्जात्यागमा
ह सार्द्धद्वयेनआपीनावित्यादिनासुन्दरइत्यादिसार्द्धेन २६ सुन्दरेतयोःचक्षुःप्रीतिमाह तेचेत्यादित्रिभिः २७ २८ सुंदरस्य मु
खंवर्णयति सव्रीडेति २९

तयोश्चापलमाह तेचेति ३० त्रयाणांग्लानिंवर्णयति अन्योन्येति ३१ व्याधिमाह सद्य इति ३२ तेषांस्वस्वस्थानगमनमाह अथेति सुं
दरस्यविकारदर्शनेनशिववृत्तान्तमाह म्लायमानेति स्मयमानमुख इत्यनेनसापराधेष्वपिभक्तेषु भगवतः कृपासूचिता नंद्यादीनांशृ
ण्वतामित्यनेनसुन्दरस्यलज्जाकारणंदर्शितम् ३४ ३५ शिवःसुंदरमुपदिशति कामेति सार्द्धेन ३६ प्रारब्धकर्मणांभोगादेवक्षय

अंतर्निमग्नेरामज्जंविद्धोमूर्छामवापह तेचापितक्षणादेवतत्कटाक्षासिधारया ३० भिद्यमानमिवस्वान्तंदध
तुःसंभ्रमाशये अन्योन्यदर्शनादेवंतेउभेसचसुंदरः ३१ सहजंधैर्य्यमुत्सृज्यम्लानिमंगेषुभेजिरे सद्योविसृष्ट
तत्कृत्यानांदीर्घनिश्वसतांमुहुः ३२ दूयमानंवपुस्तेषामाचचक्षेस्मरव्यथां अथगौरीसमीपंतेययतुःसुंदर
श्वसः ३३ यथापूर्वंभगवतःपार्श्वंप्रापस्मरार्दितः म्लायमानतनुंवीक्ष्यसर्वज्ञःसुंदरंहरः ३४ स्मयमानमु
खःप्राहनंद्यादीनांचशृण्वतां श्रीमहेश्वरउवाच कामक्रोधविहीनानांमुनीनामूर्द्ध्वरेतसां ३५ अप्राप्यंमत्पदं
प्राप्यकिमिदानींत्वयाकृतं कस्त्वंयत्रकैवल्यंकैलासेतत्रसुंदर ३६ मनसाचिंतितःकामोभोज्यःसहिनसंश
यः तस्माज्जन्मभुविप्राप्यतत्रताभ्यांसमन्वितः ३७ भुंक्ष्वसांसारिकान्भोगान्अनासक्तोयथानरः श्रीअगस्त्य
उ० यथासुंदरमीशानःशशापैवंभवेदिति ३८ तथैवगिरिजातेचतदाहपरिचारिके अथवज्रमिवोत्सृष्टंशापमा
कर्ण्येशांभवम् ३९ सुंदरःप्रणिपत्येशंरुदन्नेवमभाषत देवदेवदयासिंधोभक्तानामभयंकर ४०॥ १ ॥

इति तत्संकल्पितार्थभोगायसुन्दरस्यमानुषंजन्मादिशति मनसेति सार्द्धेन ३७ शिवाभिप्रायंबुद्ध्वापार्वत्याअपिनिजपरि
चारिकेप्रतिशापरूपामाज्ञामाह यथेति सार्द्धेन ३८ शापश्रवणानन्तरं सुंदरस्यदैन्यपूर्वकंक्षमापनमाह अथेत्यादिद्वाभ्यां ३९ ४०

शिवशापस्यान्यथाकर्त्तुमशक्यत्वात् तमंगीकृत्यमानुषेपिजन्मनिशिवस्मरणंप्रार्थयते भूतले इत्यादित्रिभिः ४१ ४२ ४३ ४४ इ
तिश्रीमानवस्तुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायां अनिंदिताकमलिनीसुंदरशापदानं
नामचतुर्थोऽध्यायः ४॥ ॥ॐ॥सुंदरप्रार्थनयाप्रसन्नोभगवान्परमशिवःसुंदरायतदभिलषितंजन्मनिजनामाविस्मरणपूर्वकंव
अपराधमिमंसोढ्वाप्रसीदपरमेश्वर भूतलेयदिजन्मस्यात् कलिनादूषितेमम ४१ त्वद्विस्मरणमेवस्यात् पशोरिवमने
स्मृतिः वाङ्मनःकायजातानामेनसांमहतामपि ४२ त्वन्नामस्मरणंसद्यःप्रायश्चित्तमितिश्रुतिः करोमिनैवंपुनरिन्दुमौ
लेदीनेत्वदीयेकरुणांकुरुष्व स एवमुक्त्वाशतशःप्रणम्यरुदन्पदांभोरुहमाललंबे ४४. इतिश्रीस्कन्दोपपुराणेचतुर्थोऽ
ध्यायः ४॥ ॥श्रीअगस्त्यउ॰ अथप्रसन्नोभगवान्प्रणतार्त्तिहरोहरः उत्थाप्यसुंदरंप्राहकरुणाशिशिरांगिरम् १ शृणुसुंदर
मद्वाक्यंमारोदीर्मोचतेभयम् नगिरामन्यथाभावोममनित्यगिरामिव २ अविवेककृतंकर्मपरिणामेमहद्भवेत् यथा
न्नंविषसंस्पृष्टमज्ञानाद्दुरंगतम् ३ ब्रह्माद्योपिमुह्यंतिकामकल्मषदूषिताः संकल्पाद्बध्यतेजन्तुरसंकल्पाद्विमुच्य
ते ४ तस्मात्त्यजंतिसंकल्पमदेकशरणाजनाः ॥ संकल्पदासाःसर्वेपिसंकल्पेशोनकश्चन ५ हित्वामांचमदीयांश्च
मदनुग्रहभागिनः॥ महतीविश्वमायामेकामिनीकांचनात्मिका ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

कुमुपक्रमते अथेति १भीतंसमाश्वासयति शृण्विति नित्यगिरांवेदानामिव २ अज्ञानकृतकर्मणांपरिणामेदुःखहेतुत्वमाह अवि
वेकेति अन्नंयथाअन्नमिव ३ संकल्पस्यैवबंधहेतुत्वंवर्णयति ब्रह्माद्योपीति ॥ संकल्पत्यागएवमुक्तिकारणमित्याह तस्मा
दिति ५ शिवस्यापिसर्वांतर्गतत्वमत्वात्तस्यापिबंधप्राप्तौ शिवंशिवभक्तांश्चवर्जयित्वाइतरेषामेवसंकल्पोबंधहेतुः इत्याह

हित्वेति अर्द्धेनमायायाःदुस्तरत्वं भगवद्भक्तानांचमायातरणसामर्थ्यमाह महतीति तमेवविदित्वातिमृत्युमेतीतिश्रुतेः मामेव
येप्रपद्यंतेमायामेतांतरंतितेइतिस्मृतेश्च ६ कामहेतुमाह स्त्रीणामिति संगात्संजायतेकामइतिस्मृतेः ७ मुक्तिकारणमाह
सतामिति संगःसत्सुविधीयतामितिभगवत्पादैः सत्संगस्यमुक्तिनिदानोपदिष्टत्वादितिभावः संगस्यकामहेतुत्वेसुंदर

मामेवयेप्रपद्यंतेमुक्तास्तेमाययातया स्त्रीणांस्त्रीसंगिनांचैवसंगत्याकामवान्भवेत् ७ सतांसंगाद्दसंकल्पोम=
यिभक्त्याचमुच्यते प्रत्यक्षंदृष्टमेवैतत्तवसुंदरसांप्रतम् ८ यतोमत्सन्निधिंत्यक्त्वास्त्रीसमक्षंगतोभवान् अन
र्थोयमभूत्तस्मादधःपातोयतोभवत् ९ एवमेवपुराविष्णुःसंकल्पेनमुहुर्मुहुः अवतीर्यभुवंपश्चात्संकल्पंजित
वानथ १० स्मृतिभ्रंशोनभवितातवजातस्यभूतले भक्तिश्चमयिपूर्णास्तुस्तुहिपुण्यस्थलेषुच ११ तत्रोद्वाहेप्रव
र्तेतेसोहमागत्यसुंदर स्वयंदासंविधायत्वांगमिष्यामिनसंशयः १२ यथा त्वच्चिंतितंतत्रतथाकर्त्तास्मिसुंदर रमा
पुरस्यनिकटेजन्ममद्भक्तितोस्तु ते १३ भूषयिष्यतिवाणीत्वांप्राप्स्यसेपरमंयशः गच्छेत्यादिश्यभगवानंतःपुरमगाह
त १४ सुंदरोपिविषादार्त्तोनमस्कृत्वामहेश्वरं कैलासादपतद्भूमोस्वलींकान्निरयेयथा १५ श्री अगस्त्यउवाच
जन्मादिचरितंतस्यसुंदरस्यमहात्मनः वक्ष्यामिवोमुनिश्रेष्ठाःश्रवणानंदकारकम् १६ ॥

मेवसाक्षाद्दृष्टान्तयति प्रत्यक्षमिति ८ तत्रहेतुमाहयतइति उपसंहरतिअनर्थइति ९ स्वोक्तार्थेविष्णुंदृष्टान्तयति एवमिति १० सुं
दरप्रार्थनामनुमनुतेस्मृतीति ११ विशेषानुग्रहमाह तत्रेत्यादित्रिभिः १२ १३ १४ तदुत्तरकालिकंसुंदरवृत्तमाह सुंदरइति १५ शापा
नुरूपंसुंदरस्यजन्मादिश्रावयितुं मुनीनगस्त्योऽभिमुखीकरोति जन्मादीति १६ ॥ ॥

कथांप्रस्तौति अस्तीति हरेसकाशादीशंस्यागेश्वराख्यं १७ सोमइति उमाचस्कन्दश्चताभ्यांसहितः १८ नेतिब्राह्मणावसथेब्राह्मणगृहे १९ तमेवविशिनष्टिवेदेति २० भार्येति २१ भार्येति भार्यापतीदंपतीकमलालयनायकं शिवंविष्णुर्योनिंकल्पयदितिश्रुतेः नारायणयोरेकरूपताशिवस्यअर्द्धनारीश्वरात्मकत्वहरिहरात्मकताभ्यांप्रतीयतेतदुक्तंनीलकंठदीक्षितैः यदेतद्धमाङ्गं घनजघनकेशस्तनभरं

अस्तिदक्षिणदिग्भागेश्रीपुराख्यंमहाद्भुतं मुचुकुंदोहरेर्लब्ध्वंयत्रेशंप्रत्यतिष्ठत १७ सोमास्कंदःस्वभक्तानांयत्रत्यागेश्वराख्यया ख्यातोददातिसर्वार्थान्जन्मयत्रसुदुर्लभम् १८ नातिदूरेस्थलस्यास्यब्राह्मणावसथेकश्चित् द्विजःशिवव्रतोनामकश्चिदस्तिशिवप्रियः १९ वेदागमपुराणानांपारदृग्वैकृतक्रतुः पितेवशिवभक्तानांभक्तस्त्यागेश्वरप्रियः २० भार्यासीत्सुमतिर्नामतस्यश्रद्धानुसारिणी तयोरनुपमंतत्रगार्हस्थ्यंसद्भिरादृतम् २१ भार्यापत्यनपत्यौतौकमलालयनायकं प्रदक्षिणार्चानतिभिस्तोषयामासतुश्चिरम् २२ अनुजग्राहभगवान्दत्वापत्यंतयोर्हरः अथगर्भवतीतस्यभार्याभाग्यवतीसती २३ राजकृतसंस्कारामणिरत्नेजितोयथा दशमेमासिसालग्ने शुभग्रहनिरीक्षिते २४ असूतसुमतिःपुत्रंबालेन्दुमपरेवदिक् जातकर्माकरोत्तस्यमुदितःसशिवव्रतः २५ ॥ ब्राह्मणेभ्योददौवित्तं प्रभूतंब्राह्मणोत्तमः ॥ द्वादशेदिवसेप्राप्ते संमंत्र्यसहभार्यया २६ कमलालयनाथाख्यं चक्रेगौरीपतेर्मुदे ॥ दृष्ट्वारूपंजनास्तस्य सर्वेसुन्दरमूचिरे २७ ॥ ॥ ॥ ॥

कदाचित्तच्छंभोर्भवतिकमलाकौस्तुभधरमिति २२ अन्विति अथअनुग्रहानंतरं २३ राजेति कृतसंस्काराकृतोविरचितःसंस्कारोपुंसवनाख्यःयस्याःदशमेमासीतिदशमेमासिसूतइतिश्रुतेः २४ असूतेतिअपरापश्चिमादिक्बालेन्दुमिवेस्यनेनशिशोवर्धिष्णुत्वंद्योत्यते २५

२६ कमलेति गौरीपतेः शिवस्य मुदे हर्षाय नामकारयांचक्रे २७

तत इति ततः नामकरणानंतरं कमलिन्यनिंदितयोः जन्म वर्णयति अथेति २८ २९ दधावितिसकृद्देवेत्यनेन शिवानुग्रहलब्धनिर्मलप्रज्ञत्वं दर्शितं ३० ३१ ३२ शिवव्रत इति गायत्रीव्रतं उपनयनं ३३ ३४ सुंदरेति पित्रा वारित इति राज्याधिकारस्य क्षत्रियाधीनत्वादिति

ततोऽयं ववृधे बालः पूर्वपक्ष इवोडुराट् अथ वेदनिधेः पुत्री कमलिन्यप्यनिंदिता २८ जाता विप्रगुरोः पत्न्यां सा निस्यं वृद्धिमाययौ चूडाकर्मण्यथ कृते पूर्ववासनया स्वयम् २९ दधौ महेश्वरे भक्तिं सुंदरः सुरदुर्लभां सकृद्देवोपदेशेन लिपिभेदानबुध्यत ३० वीथीषु श्रवणादेव कलाः सर्वा विवेद सः सुंदरस्त्वेकदा वीथ्यां बालकैस्तुल्यवार्षिकैः ३१ धूलिकेलिपरो राज्ञा दृष्टो नीतश्च वै गृहं अनपत्यस्य राज्ञो भूदमुष्मिन्प्रीतिरुत्तमा ३२ शिवव्रतः प्रियो राज्ञो गायत्रीव्रतमादिशत् वेदानध्यापयामास सांगानपि सहागमैः ३३ अधिगम्य च शास्त्राणि गुरुभ्यो दक्षिणामदात् युवराजा भव त्वेष इति राजप्रचोदितः ३४ सुंदरो वारितः पित्रा न द्विजानां विधिस्त्विति युवराजसमं लेभे पदं विद्वद्भिरावृतम् ३५ अथ वेदनिधिः कन्यां सुंदराय महात्मने प्रदातुं भार्यया सार्द्धं विमृश्य सकुतूहली ३६ शिवव्रतानुमत्या च कल्याणोद्योगमातनोत् वैशाखोत्तरफाल्गुन्यामभूदुद्वाहनिश्चयः ३७ वधूवरापबंधूनां समाजः सुमहानभूत् आययौ जयभद्रोपि चतुरंगबलान्वितः ३८ उत्सर्जनं व्रतानां च विधिपूर्वकमातनोत् स्नानकर्मविधिं चक्रे सुंदरो लोकसुंदरः ३९ भेरीमृदंगमुमुखशंखगोमुखकाहलान् वादयामासुरत्युच्चैः वीणावेणून्जनाः परे ४० राजवाहनमारुह्य सुंदरो ब्राह्मणोत्तमैः कृताशीर्भार्यया सार्द्धं सर्वैर्वेदनिधेर्गृहम् ४१॥ ७ ॥

भावः ३५ अथेति अथ यौवराज्यसमपदप्राप्त्यनंतरं ३६ शिवव्रत इति शिवव्रतस्य सुंदरपितुः अनुमत्या कल्याणोद्योगं विवाहयत्नं ३७

प्रत्युज्जगामसुत्रीभ्यांसहवेदनिधिर्वरं कृतोपचारस्तेनायंयथावत्समलंकृतः ४२ उद्वाहवेदिकामापकन्यालंकृ
तपार्श्वभूः निषसादासनेपश्चान्नवहेमपरिष्कृते ४३ ब्राह्मणैर्दीक्षितैर्वृद्धैः शिवभक्तैश्चभूषिता छत्रकेतुवितानाद्
ढ्यास्वर्णस्तंभपरिष्कृता ४४ सवयोभिर्वयस्यापिसर्वाभरणभूषितैः पतिव्रतासहस्रेणकिरतालाजजालकान् ४५
समग्राकन्यकाभिश्चगायंतीभिर्विभूषिता ज्योत्स्नाप्रदीपमालाभिरभिद्योतितदिङ्मुखा ४६ नानाविधमहावाद्यनाद
दपूर्णनभस्थला शक्रेणेवमहीभाजाजयभद्रेणशोभिता ४७ दिव्यागरुवधूपेनसमंताद्धिवासिता साससभारुरुचे
तत्रसुधर्मेवभुवंगता ४८ सुंदरश्चसभामध्येवरवेषविभूषितः बध्वाचसहितोरेजेरमयाचयथाहरिः ४९ विद्याव
योरूपधनान्वयाद्यैःनसुंदरस्यास्तिसमःपृथिव्यां आभ्यांवधूभ्यांसहितस्यदीर्घमस्त्वायुरस्येत्यवदन्द्विजेन्द्राः ५०
इतिश्रीस्कंदोपपुराणेपंचमोऽध्यायः ५॥ ॥श्रीअगस्त्यउवाच सौवर्णपालिकाकुंभलाजपुष्पसमित्कुशैः दूर्वांकु
रघ्राणैश्चदृषदाशोभितासभा १ अथांकुरार्पणंकृत्वाकृतकौतुकबन्धनः पुरोहितैर्गणाधीशंपूजयित्वामहाजनैः
२ दत्तानुमतिरारेभेसुंदरोद्वाहमंगलं प्रस्तुतोद्वाहसंकल्पेसुंदरेथसभांतरे ३ अदृश्यतमहावृद्धस्तत्रकश्चिज्जरा
धिकः वेणुदंडमवष्टभ्यस्खलदंघ्रिःपदेपदे ४ बिभ्रत्भ्रूपक्ष्मरोमाणिपलितेनसितानिच कुंडलालंकृतःप्रांशुश्च

सुंदरवृत्तांतवर्णनोनामपंचमोऽध्यायः ५॥ ॥श्री॥ पुनःसभांवर्णयति सौवर्णेति १ अथेति सभाप्रवेशानंतरंकृतंकौतुकबन्धनं कंक
णबंधनंयेन २३ पूर्वंदत्तवरस्यशिवस्यसभाप्रवेशंसार्द्धत्रयेण वर्णयति अदृश्यतेत्यादिना ४ ५



६ समालोक्येति तमितिशेषः ७ ८ ददाविति सहस्ततालंकरतालिकासहितं ९ १० सर्वथेति शिवोवाशिवभक्तोवासर्वप्रकारेणपूज्यए
वेतिभावः ११ १२ द्विजरूपधारीशिवःशिवव्रतंप्रत्याह कमलानगरेइति त्वामहंजानामिसर्वज्ञत्वादितिभावः त्वमस्मान्कदाचन नवे

भसितैरनुलिप्तांगोरुद्राक्षस्रग्विभूषितः विगलद्दुकूलवसनोनिःशेषंगलितद्विजः ६ शिरोभिर्दंतुरग्रीवःश्रीकंठपद
लांछनःसमालोक्यसभामध्येसमवेतामहीसुराः ७ केचिदुत्थायदत्वार्घ्यंप्रणेमुस्तस्यपादयोः हस्तालंबनमन्येः
तुभक्त्याप्रददुरादरात् ८ ददौवेदनिधिश्चापिपुरस्तादासनंमहत् सहस्ततालमहसन्संघीभूयचबालकाः
९ सुंदरस्तुतमालोक्यभस्मरुद्राक्षधारिणं शैलादिसदृशःकश्चिद्भक्तोवाशिवएववा १० सर्वथापूज्यएवायमि
त्यमन्यतमानसे अथोपविष्टंतंवृद्धमिदमाहशिवव्रतः ११ महाब्राह्मणकोसित्वंकुतःकिंनामतावकं त्वद्दर्शना
त्कृतार्थास्मोवयमातिथ्यमत्रते १२ श्रीद्विजउवाच कमलानगरेनित्यवासोमेहेशिवव्रत जानामित्वामहंनत्वम
स्मान्वेत्सिकदाचन १३ आस्तांतावत्प्रसंगोयंसमाजःकोत्रकर्मकिं संघीभूताःस्त्रियोबालावाद्यानामत्रकोध्वनिः १४
श्रीशिवव्रतउवाच कमलालयनाथाख्यःसुंदरोयंजनैःकृतः परगःसर्वविद्यानांप्राप्तोमत्तपसासुतः १५ प्रस्तुतोत्रः
विवाहोस्यआशीर्वादात्समृध्यतां शिवव्रतंनिवार्यैवंवदंतंवृद्धसत्तमः १६ शिथिलाक्षरयावाचानिजगादसभास
दः श्रूयतामुच्यतेकिंचित्समवेत्तामहाजनाः १७ नूतावधार्य्यसर्वेपिसत्यमेवास्तुमामृषा दासमेनंक्रयकृतंसु
दरंमेशिवव्रतः १८ प्रलोभयित्वामूढासापुत्रीकृत्यबलादिह वृद्धंमगणयित्वामांविवाहमपिकारयत् १९ ॥

त्सिकिंचितज्ञत्वात् शिवतत्वस्यदुर्ज्ञेयत्वादितिभावः १३ अजानन्निवपृच्छति आस्तामिति १४ शिवव्रतस्योत्तरमाह कमलालयेति १५

प्रस्तुत इति असौविवाहः आशीर्वादात् समृध्यतां वर्ध्यतां
१६ १७ १८ १९

२० २१ २२ २३ शिववचनंश्रुत्वासभासदांविस्मयोऽभूदित्याह एवमिति २४ जानेति व्यवहारेषुउचिताचारपरिज्ञानेषु विशेषेणचक्ष तेइतिविचक्षणाःजयभद्रेणराज्ञा २५ वृद्धइतिसमर्थइवइवशब्दप्रतीकवाची वस्तुतोनसमर्थइतिभावःशास्त्रार्थेषुधर्मशास्त्रार्थेषु २६ अध्वे

स्वपुत्रत्वंस्थिरीकर्त्तुंयततेसत्यमुच्यते श्रियामेनकुबेरोपिसदृशोन्यस्तुकिंपुनः २० सोहमस्यापिदास स्यविधेयंसकलंजगत् एतत्कारयितालोकेयदिच्छामेभविष्यति २१ कोटिशःसंतिमेदासाःदिशामंतेषु भुज्यते श्रियंयथोचितांदत्तामयमप्यस्तुतादृशः २२ दाससुंदररेकिंत्वंमांहित्वास्यगृहंगतः उत्तिष्ठ याहिगच्छावोयदिष्टंतद्ददामिते २३ श्रीअगस्त्यउवाच एवंवदतिवृद्धेस्मिन्संभ्रांतासासभाभव त् वधूवरासबन्धूनामासीन्मनसिविस्मयः २४ जनकोलाहलस्यांतेव्यवहारविचक्षणाः विद्वांसोदिक्षु विख्याताजयभद्रेणचोदिताः २५ श्रीब्राह्मणाऊचुः वृद्धोसिव्यवहारेषुसमर्थइवजल्पसि शास्त्रार्थेषुनहिक्वा पिद्विजोविक्रेतुमर्हति २६ अध्वश्रमेणवाभ्रांत्यावृद्धभावेनवोदितं वचस्तवेदंक्षांतंचतत्क्षमोमेदिप्रभुःपरः २७ जयभद्रोमहाराजःसुंदरेक्षांतिरुत्तमा गुरुर्यःसर्वविद्यासुरुष्टस्त्वांनैवकुप्यति २८ श्रीवृद्धउ॰ नकामोनास्तिकोपोवादासानाममविद्यते इदमेवहिविख्यातमस्मद्दास्यैकलक्षणम् २९ श्रीशिवव्रतउ॰ किंभ्रांतस्यचतद्वाक्यमिदंक्षांतंमयाद्विजाः विवाहस्येनबहिर्लग्नेकर्मारब्धंप्रवर्त्यताम् ३० श्रीवृद्धउ॰ अराजकोयंकिंदेशःसंतःसतिनवापुरे

तिप्रभुःपरःउत्कृष्टःपुनरप्येवंकथनेत्वांदंडयिष्यतीतिभावः २७ जयभद्रेतिक्षान्तिरुत्तमाक्षमैवकर्त्तुमुचितेत्यर्थःयतःराजासर्वविद्या सुगुरुःअतःनकुप्यतीतिसंबन्धः २८ नेति इदमेवकामक्रोधाद्यभावएव २९ द्विजान्प्रतिशिववव्रतस्यवचनमाह किमिति इदंअसंग

एवंसभ्यानुक्त्वावृद्धब्राह्मणरूपीशिवः सुंदरंप्रत्याह वदेति उदीरितंपूर्वमुक्तं ३२ असंगतमिति सत्यवत् सत्येनतुल्यंवयंशंभोर्दासाः नवृद्धब्राह्मणस्य तवेतिभावः ३३ हरेति तस्यहरदासस्यदासायते दासइवआचरति दासंनिजदासंसःशिवस्यद्रोहीत्यर्थः ३४ सहेयमिति त्वदागः तवापराधं आगोपराधोमन्तुश्चेत्यमरः भस्मेतिशिवचिन्हधारणात् त्वांनमामीत्यर्थः ३५ एवंपरुषवादिनः सुंदरंशिवो

वदसुंदरसत्यंत्वंचरधर्ममुदीरितं किंनदासोसिमेब्रूहिसर्वेषामिहसन्निधौ ३२ श्रीसुंदरउवाच असंगतंभवानाहसत्यवद्ब्राह्मणोत्तम शंभोर्दासावयंतुस्मः कमलालयवासिनः ३३ श्रीसुंदरउवाच हरदासोनान्यःदासःतस्यदासायतेजगत् हरस्यदासंयोब्रूतेदासंद्रोहीशिवस्यसः ३४ सहेयंचत्वदागोहंशंकरोनसहिष्यते भस्मरुद्राक्षभासंत्वांनमाम्यद्यानुगृह्यताम् ३५ श्रीवृद्धउवाच किमेवंसुंदरब्रूषेकिंतेन्यूनंमदन्तिके पुत्राभ्यामविशेषंत्वामहंपश्यामिसुंदर ३६ श्रीसुंदरउवाच नाहंत्वामभिजानामिनास्मिन्जन्मनिसंगतिः महान्तोपियदिब्रूयुरन्तंकोनिवारकः ३७ श्रीवृद्धउवाच जनाःशृणुतमेहस्तेपत्रमस्तिससाक्षिकं स्वहस्तलिखितंतस्यक्रियतेनिन्हवःकथम् ३८ ब्राह्मणाऊचुः पत्रंदर्शयभोवृद्धयत्रानेनकृतालिपिः युवयोर्व्यवहारेचयःसाक्षीसोपिवाप्येताम् ३९ श्रीवृद्धउ० सतीनामुत्तमादेवीकमलालयनायिका क्रयक्रीतोयदामेत्वंतदासाक्ष्येव्यवस्थिता ४०

वदति किमेवमिति मदन्तिके मम समीपे पुत्राभ्यांस्कंदगणेशाभ्यां अविशेषंतुल्यमित्यर्थः ३६ नाहमिति महान्तोपिभवादृशाइत्यर्थः ३७ सभासदःसंबोध्यशिवोवदतिजनाइति निन्हवः अपलापः अपलापस्तुनिन्हवइत्यमरः ३८ पत्रमिति यत्रयस्मिन्पत्रे अनेनसुंदरेण लिपिः अक्षरविन्यासः लिखिताक्षरविन्यासेलिपिर्लिविरुभे स्त्रियामित्यमरः ३९ सतीनामिति कमलालयस्यस्थानविशेषस्यसासे

शास्त्रानुसारेणस्त्रीसाक्ष्यस्यअप्रामाण्यमाशंक्यप्रकारांतरेणसमर्थयते स्त्रीसाक्ष्यमिति पुत्रौस्कन्दगणेशौ ४१ इतीतिस्पष्टं ४२ वृद्धमितिगव्यू
तिद्वयसंमितंकोशचतुष्टयपरिमितंगव्यूतिस्त्रीकोशयुगमितिअमरः ४३ ४४ ४५ तस्याविति साश्चर्यंअपूर्वस्थानदर्शनेनसविस्मयंयथातथा अथानतरं
४६ आरूढइति सुरर्षिभिःनारदादिभिः नारदाद्याःसुरर्षयइत्यमरः ४७ स्थितमिति सार्द्धश्लोकएकान्वयीगिरेः कन्यकायैगौर्यै ४८

स्त्रीसाक्ष्यंनप्रमाणंचेत्सुत्रौ तस्याश्चसाक्षिणौ आगच्छतत्र तांद्रष्टुंपश्यतत्रैवपत्रिकाम् ४१ श्रीअगस्त्यउ० इत्या
हूतोभगवतावृद्धवेषेणशंभुना भ्रांतश्चिरमसीत्युक्त्वासहसोत्थायसुंदरः ४२ वृद्धमग्रेविनिर्गच्छंतंपृष्ठतोन्व
गात् सुंदरानुगतोवृद्धोगव्यूतिद्वयसंमितम् ४३ पन्थानसमतिक्रम्यकमलानगरांतरे आलयंप्रविवेशान्तर्मणि
गोपुरमंडितम् ४४ कोत्रसाक्षीवदाद्यत्वंवृद्धदर्शयपत्रिकां इत्यनाहृत्यनिःशंकमालयद्वारिसुंदरः ४५ तस्थौमु
हूर्त्तंसाश्चर्यंवृद्धनिर्गमनाशया अथाविरासीदुमयासहसर्वगणैर्वृतः ४६ आरूढोवृषभंदिव्यंस्कन्दविघ्नेश्वरा
न्वितः दूरदेशमनुप्राप्यस्तूयमानःसुरर्षिभिः ४७ स्थितंसुंदरमालोक्यस्मयमानमुखाम्बुजः सुंदरोममदासोयमिति
सन्दर्शयन्गिरेः ४८ कन्यकायैकटाक्षेणपुनःप्रोवाचसुंदरम् ४९ इतिश्रीस्कन्दोपपुराणेषष्ठोऽध्यायः ६॥ ७ ॥
श्रीशिवउवाच ॥रेरेसुन्दरयत्प्रोक्तंपशूनांसन्निधौत्वया॥ नाहंदासस्तवेत्येतत्साध्यतांकिंविलम्बसे १
जननीजगतामेषागौरीत्वद्दास्यसाक्षिणी॥ इमावपितथाभूतौ गजवक्त्रषडाननौ २ ॥ २ ॥ २ ॥

४९ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कन्दोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांषष्ठोऽध्यायः ६॥ ॥७॥ ॥
सुंदरंसंबोध्याहरेरेइति नीचसंबोधनेतुरेइत्यमरः द्रोहाचरणात्नीचत्वंपशूनांजडानां १ जननीति तथाभूतौसाक्षिणौ २॥ ७ ॥

वृषभेति उमाचस्कन्दश्चगणेशश्चतैःसहितं ३ ४ गणेति विलक्षहृदयःविस्मयान्वितचित्तःविलक्षोविस्मयान्वितइत्यमरः ५ पुनरि
त्यर्द्धेएकान्वयिस्तुतिप्रकारमाह आहूयेति मिथ्यात्मसु असत्यचित्तेषु अभिरतं आसक्तं अतएवमृषागिरं असत्यवचसं इमंजनंमा
मित्यर्थः अज्ञात इति यतोवाचोनिवर्त्तन्त इतिश्रुतेः ६ यस्येति तदैक्षत बहुस्यां प्रजायेयेतिश्रुतेः ७ महदिति सार्द्धमेकान्वयि मह
श्रीसुन्दरउ० वृषभारूढमालोक्यसोमास्कन्दगणेश्वरं दधानं दक्षिणकरे महतीं दासपत्रिकाम् ३ विष्णुब्रह्मेन्द्रचन्द्रार्कयमा
ग्निवरुणाशुगैः सिद्धचारणगन्धर्वैस्तूयमानपदाम्बुजम् ४ गणाग्रणीसमाघातभेरिकाहलिकास्तुतम् विलक्षहृदयोभूत्वा
निमील्यनयनेक्षणम् ५ पुनरुन्मील्यतुष्टाव शंकरं सुंदरोनमन् श्रीसुन्दरउ० आहूयत्वयमादरेणभगवन्त्वंसर्वलोका
न्तो मिथ्यात्माभिरतं मृषागिरमिमं वेधोहरीन्द्रादिभिः अज्ञातोमनसाचनित्यवचसोदासं वितेनेजनं तस्मै भक्तजनप्रियाय
महते देवायतस्मै नमः ६ यस्यावलोकनादस्य मायाभूत्सृष्टिसाधनं नमस्तस्मैमहेशाय देवदेवायतेनमः ७ महद्वैषम्यमुत्पन्नं
माययायस्यशक्तितः अहंकारस्तथाजज्ञे महतो यस्य भावतः ८ नमस्तस्मैमहेशायदेवदेवायतेनमः अनामरूपसंसृष्टः कदाचिद
पियः शिवः ९ नमस्तस्मैमहेशायदेवदेवायतेनमः भूतेन्द्रियमनःसृष्टिस्तु तोयस्येरितादभूत् १० येनपंचीकृतान्यासन् असंबन्ध
वतामपि अनुप्रविश्ययस्तानिविराड्रूपंबिभर्त्तिच नमस्तस्मैमहेशायदेवदेवायतेनमः ११ ॥ ॥

द्वैषम्यं सत्वादिगुणतारतम्यप्रयुक्तं वैचित्र्यं महत्तत्वमित्यर्थः महतः अहंकारो जज्ञे ८ अनामेति नामरूपाभ्यां असंसृष्टमि
त्यर्थः तयोर्मायारूपत्वादितिभावः ९ भूतेति यस्येरितात् येनशिवेन प्रेरितात् ततः अहंकारात् १० येनेति असंबंधवताम
पिपरस्परं असंसृष्टानामपितेषांभूतादीनां मध्ये पृथिव्यादीनीति अध्याहारः पंचीकृतानि स्वकीयांशमेलनेन तानि अनुप्र

विश्य तत्तद्रूपतया तिष्ठतीति श्रुतेः विराड्रूपं
सर्वभूतमयत्वं [illegible] ११

सिसृक्षयेति स्रष्टुमिच्छयागिरावेदगिरा सृज्यंजगत् वेदशब्देभ्यएवादौ इतिस्मृतेः १२ एवंब्रह्मस्वरूपतांप्रतिपाद्यविष्णुरूपतया
स्तौति अलंकृतइति तस्यजगतः १३ रुद्ररूपतयास्तौति अनन्येति प्राज्ञतैजसविश्वादीनां जाग्रत्स्वप्नसुषुप्त्यवस्थाभिमानिनां सा
क्षी द्रष्टासंहारस्य प्रस्तुतत्वात् व्युत्क्रमेणनिर्देशःसाईमेकान्वयि १४ सगुणंस्तुत्वा निर्गुणंस्तौति अहमिति आकाशरूपेण निर्गुण
ब्रह्मरूपेण आकाशशरीरंब्रह्मेतिश्रुतेः आकाशस्तल्लिङ्गा दितिब्रह्मसूत्राच्च अहमा आत्मचैतन्येनसर्वंजगत् १५ ओतेति इदं

विसृक्षयागिरायुक्तःसृज्यंसृजतियोऽखिलं नमस्तस्मैमहेशायदेवदेवायतेनमः १२ अलंकृतःश्रियातस्यरक्षांय
स्तनुतेहरिः नमस्तस्मैमहेशायदेवदेवायतेनमः १३ अनन्यसाध्यंसंहारंयस्तस्यकुरुतेहरः प्राज्ञतैजसविश्वादि
साक्षीभोज्यःस्वयंस्थितः नमस्तस्मैमहेशायदेवदेवायतेनमः १४ अहमाकाशरूपेणयःसर्वंव्याप्यतिष्ठति नमस्तस्मै
महेशायदेवदेवायतेनमः १५ ओतप्रोतमिदंयत्रसूत्रेमणिगणायथा नमस्तस्मैमहेशायदेवदेवायतेनमः १६
अन्तश्चिदात्मनातिष्ठन्इन्द्रियैर्योविभाव्यते नमस्तस्मैमहेशायदेवदेवायतेनमः १७ यत्सत्ताजगतःसत्तास
र्वंस्फुरतियेनच ॥ नमस्तस्मैमहेशायदेवदेवायतेनमः १८ यत्रनानाप्रपंचोऽपांविवर्त्तोइवसागरे ॥ आ
दावंतेचमध्येच एकरूपःस्वयंप्रभुः ॥ नमस्तस्मैमहेशाय देवदेवायतेनमः १९ ॥ ❀ ॥ ❀ ॥

जगत् यत्रचैतन्ये ओतप्रोतं ओतंचतत् प्रोतंचेतिसमासः पृथिव्यादीनांपरस्परमेलनेन इयमुक्तिः सूत्रेमणिगणायथेत्युपमा १६
अंतर्यामिरूपतयास्तौति अंतरिति चिदात्मनाज्ञानस्वरूपेण इन्द्रियैः चक्षुरादिभिः यःविभाव्यते रथगत्यासारथिरिवानुमीयते १७
यत्सत्तेति तस्यभासासर्वमिदंविभातीतिश्रुतेः १८ यत्रेति अपांविवर्त्ताइवतरङ्गादिरूपान्तराणीव नामरूपात्मकोनानाप्रपंचः वस्तुतः

आदित्येतिय एषोन्तरादित्ये हिरण्मयः पुरुषः य एषोंतरक्षिणि पुरुषो दृश्यते इत्यादिश्रुतेः २० वैश्वानररूपतयास्तौति अंगुष्ठेति
अंगुष्ठमात्रः पुरुषोऽङ्गुष्ठंच समाश्रितः ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुग् इति श्रुतेः २१ दक्षिणामूर्त्तिरूपं वर्णयति यदिति
यत्स्वरूपं अविज्ञाय अज्ञात्वा अयं बन्धः संसारः सः यस्य वस्तुनो विज्ञानात् विशिष्टज्ञानात् विमुच्यते २२ य इति अमृतं मथनकाले घोरं गर
लं अपिबत् पपौ तथा मार्कंडेयस्य मुनिबालकस्य मुदे हर्षाय कालं यमं पदा हतं पादताडितं व्यथात् चकार २३ मस्मेति यः शिव
आदित्यमण्डले भाति पुरुषो यो हिरण्मयः अन्तश्चक्षुषि भूतानां यः सर्वेषां परः पुमान् २० अंगुष्ठमात्रं पुरुषं यमंतःक
वयो विदुः यन्नामस्मरणं जन्तोः कालकर्माघनाशनम् २१ यद्विविज्ञाय बन्धोयं यद्विज्ञानाद्विमुच्यते गुरुमूर्त्तिर्महर्षी
णां वटमूले विभाति यः २२ योपिबद्गरलं घोरं जगतामतिभीकरं मार्कंडेयमुदे कालं यो व्यथात्स्वपदाहतम् २३ भ
स्मसात्क्करोन्मन्दस्मितेन त्रिपुराणि यः मृगरूपस्य यो दक्षक्रतोश्चिच्छेद मस्तकम् २४ अवतारेषु यो विष्णुमनुज
ग्राह पूजितः मणिमंत्रौषधीनांच शक्तिर्यस्यानुभावतः २५ आब्रह्मस्तंबपर्यन्तं यस्याज्ञां न विलंघ्यते नमस्तस्मै नमस्त
स्मै गिरिजावासमूर्त्तये २६ चन्द्रशेखरदासोस्मि सहवंशद्वयेन च मा जायतां कुले जन्तुः शंभोर्दासो न यो भवेत् २७ अपराधं
क्षमस्वैवं मम वाक्कायसंभवं प्रसीद करुणासिन्धो प्रणतार्त्तिहराव्यय २८ प्रसीद पार्वतीनाथ दयादृष्ट्या विलोकय श्रीरग
स्त्य उ॰ इत्युदीर्य पदांभोजे प्रणतं बाष्पवर्षिणम् २९ समुत्थाप्य महादेवः सुन्दरं प्रत्युवाच ह श्रीशिव उ॰ भोभो सुन्दर मारोदीः प्रसाद
त्रिपुराणि स्मितेन मंदहासेन भस्मसात् भस्माधीनं अधीनार्थे साति प्रत्ययः मृगरूपस्य हरिणरूपेण पलायमानस्य दक्षक्रतोः मस्तकं चि
च्छेद सन्वयः अवतारेष्विति यः शिवः पूजितः सन् विष्णुनेति शेषः अवतारेषु मत्स्यादिषु विष्णुं अनुजग्राह अनुगृहीतवान् अनुभावतः
प्रभावतः अनुभावः प्रभावे चेसमरः २५ आज्ञासिद्धिमाह आब्रह्मेति २६ स्वाभीष्टं प्रार्थयते चंद्रशेखरेति वंशद्वयेन मातापितृकुलयुगे

३१ ३२ प्रकृतं प्रार्थयते त्वदिति तवदास्यं दासकृत्यमेव भाग्यं ३३ शिवस्योत्तरमाह स्तुतिरिति ३४ शिवस्तुतेः दुष्करत्वमाशंक्य सुन्दरः पुनः प्रार्थयते चत्वार इति ३५ मन इति यतो वाचो निवर्त्तन्ते इति श्रुतेः ३६ ३७ तवेति अमूर्त्तस्य अशरीरस्य ३८ सर्वथेति सीकरेण जलकणेन महाम्बोधेः महासमुद्रस्य महिमा कथं वर्ण्यते इत्यन्वयः ३९ इमामिति मया उपदिश्यमानामित्यर्थः पंचपातकानि स्वर्णस्तेयादीनि

मयि प्रसन्नेन पुनः शोकमभ्येति कश्चन स्तुत्यालंकृतया ये मां स्तुवंत्यहरहर्नराः ३१ न तेषां दुरितं किंचिद्भवितेति मतिर्मम कृतः प्रसादो महता देवेनेत्यथ सुन्दरः ३२ उच्छितांजलिमाधाय भगवंतं व्यजिज्ञपत् श्रीसुन्दर उवाच त्वद्दास्य भाग्यं मे लब्धं दुर्लभं योगिनामपि ३३ कृत्यं दासस्य मे किंचिद्विनिर्देष्टुं त्वमर्हसि श्रीशिव उ॰ स्तुतिर्मम त्वया कार्य्या सदा सुन्दर सर्वतः ३४ इदं मत्प्रीतये कृत्यं नित्यं यद्धि हितं तव श्रीसुन्दर उ॰ चत्वारो न विदुर्वेदास्तथा देवादयोपि यं ३५ मनो निवर्त्तते यस्माद्विज्ञातं महेश्वरं स्तौमि तं त्वां कथं बालः ग्राम्यालापार्थया गिरा ३६ कीदृशी ते स्तुतिस्तस्याः किमादिर्मध्यमुच्यते अवसानं च किं रूपं न जाने किंचिदप्यहम् ३७ तवामूर्त्तस्य पूर्णस्य नामरूपनिरूपणे वाचा पराधो भविता न हितस्यास्ति निष्कृतिः ३८ सर्वथा सापराधं मां करुणाकर पालय शीकरेण महांभोधेर्महिमा वर्ण्यते कथम् ३९ श्रीशिव उ॰ इमां पंचाक्षरीं विद्यां पंचपातकनाशिनीं गृहाण मयि भक्तोसि तस्माद्देनां ददामि ते ४० आं तेति सदसि प्रोक्तं त्वया मां प्रति सुन्दर तदा दायपदं पूर्वं स्तुहि वाग स्त्वनर्गला ४१ भुवं प्रदक्षिणी कुर्वन् यत्र मे स्थानमुत्तमं यत्र लिंगाकृतिर्वाग्भिः स्तुहि

नाशयति तच्छीलां तांच्छील्ये णिनिः ४० स्तुतेरादिमध्यान्तान् न जानामीति यदुक्तं तत्र स्वापराधपूर्वकं स्तोत्रारंभमुपदिशति आं तेति वाक् अनर्गला अस्खलिता आशीः ४१ भुवमिति यत्रस्थाने लिंगाकृतिः लिंगमूर्त्तिरहं तिष्ठामि स्तुतिकृतां प्रियं तं मां स्तुहीत्यन्वयः ४२

तत्रेति पंचाक्षरींविद्यांज्ञानरूपां ४३.४४ प्रोवाहेति तस्यसुन्दरस्यवाचांलहरीं अमृतधुनीयथासुधातरङ्गिणीवप्रोवाहप्रवहतिस्म ४५ भूय इति पुनः तमेवशिवंश्रान्तइत्यादिस्तुतिप्रारंभः ४६.४७ भवानीति हंसकोटिप्रतीकाशंसूर्य्यकोटिसदृशं हंसविज्ञानंपरमात्मज्ञानंमस्तकेयस्यतं भानुर्हंससहस्रांशुरित्यमरः हंसहंसेतियोब्रूयाद्धंसोनामसदाशिवः इतिशिवसंकल्पस्यश्रुतेः ४८ हंसैरिति हंसैः

तत्रतत्रभविष्यामिप्रसन्नःसन्निधायते इतिपंचाक्षरींविद्यांउपदिश्यमहेश्वरः ४३ ब्रह्मादिभिरविज्ञातांशैवीं विद्यांव्यतीतरत् शब्दब्रह्ममयीदेवीतज्जिह्वायांननर्त्तह ४४ प्रोवाहवाचांलहरीतस्यामृतधुनीयथा वाग्विभूतिंससंप्राप्यसुन्दरःपरमेश्वरात् ४५ भूयस्तमेवतुष्टावसुन्दरःश्रीपुरेश्वरं श्रांतःप्रपंचविज्ञानात्विमलेन्दुकलाधरम् ४६ महान्तंदेवमीशानंमहेश्वरमहंभजे भक्ताभयंकरंभर्गंभक्तिमात्रेणसत्कृतम् ४७ भवानीसहितं देवंभावयामिसदाशिवं हंसकोटिप्रतीकाशंहंसविज्ञानमस्तकम् ४८ हंसैश्चपरमंसेव्यंहंसन्त्वमुपास्महे दुःपूरकामशमनंसत्पूजितपदांबुजम् ४९ कर्पूरालेपकह्लार स्रग्भूषणमहंभजे मुचुकुन्दमहीपालमुख्यभक्त्युरीकृतम् ५० मुक्तिप्रदंमुमुक्षूणांमुग्धेन्दुमुकुटंभजे पुराभक्तिपरीक्षायैश्रीमच्चोलमहीपतेः ५१ ॥ ७ ॥

परमहंसैःसेव्यंहंसन्त्वंहंसस्येवन्त्वंयस्यतं दुःपुरः दुःखेनपूरयितुंशक्यः यःकामःतस्यशमनं जहिशत्रुंमहाबाहोकामरूपंदुरासदमितिस्मृतेः सद्भिःपूजितंपदांबुजंयस्यतं ४९ ५० पुरेति पूर्वंचोलराजस्यभक्तिपरीक्षायैस्वयंधेनुरूपःशिवः स्ववत्संराजकुमाररथचक्रेपातयित्वातस्मिन्मृतेतद्विज्ञायराजनि स्वपुत्रंतथैवरथचक्राधःपातयित्वामारयतिस्म भक्त्याप्रसन्नःशिवः तदा वत्संराजपुत्रंच दृग्भ्याजीवयित्वा विधिविटंकाख्यांलेभे इतिशिवपुराणकथांसंक्षिप्य सार्द्धचतुष्टयेनाह ५१

५२ ५३ ५४ ५५ एवमित्यादित्रिभिः सुन्दरस्य अभ्युदयपूर्वकं कृत्यान्तरमाह ५६ ५७ ५८ एतदध्यायस्य फलस्तुतिमाह य इति ५९ इतिमानवल्लुपनामकनृसिंहविरचितायां स्कन्दोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां सप्तमोऽध्यायः ७॥ ॥ ७ ॥ अथविवाह



कृतां तं नर्तकीकृत्य धेनुरूपः स्वयं भवान् अध्वभ्रमणवेगेन तत्पुत्ररथवर्त्मनि ५२ चक्रनेमिहते वत्से घंटां गोश्रृंगताडितां विज्ञाय मंत्रिभिः सार्द्धं सभाभाजि महीपतौ ५३ समंत्रिबोधनात्पुत्रं रथचक्रबलिं निजं कुर्वत्युज्जीवयन् वत्सं सत्कुमारं च योद्दृशा ५४ समुत्थाप्य नपायादास्सौभाग्यं भक्तिसंयुतं तं त्वां विधिविदं रव्या तं शरणं यामि शाश्वतम् ५५ एवं त्यागेश्वरं तत्र वाग्भिः स्तुवति सुन्दरे देवा ववर्षुः पुष्पाणि व्यनदद्देवदुंदुभिः ५६ तत्रत्या ब्राह्मणाः सर्वे श्लाघन्ते स्माथ सुन्दरं तमनुज्ञाप्य देवेशः सहभूतैस्तिरोदधे ५७ सुन्दरो लब्धवाग्भूतिः सार्वभौमैश्च पूजितः दिव्येषु शंभुस्थानेषु स्तोतुं समुपचक्रमे ५८ यः पठेदिदमध्यायं श्रृणुयाद्वापि मानवः मूकस्यापि भवेत्तस्य वाग्विभूतिरनुत्तमा ५९ इतिश्रीस्कन्दोपपुराणे सप्तमोऽध्यायः ७॥ ॥ ७ श्रीअगस्त्य उवाच॥ ॥ प्राप्तुं तमेव भर्तारं सुन्दरं सर्वसुन्दरं कन्या वेदनिधेः शंभुमाराराधत तपस्विनी १ अथायं सुन्दरो द्रष्टुं चिदम्बरमहानटं प्रस्थितः सरितः पुण्याः समुत्तीर्य्य महामतिः २ उपास्य पश्चिमां संध्यां अगात्सिद्धवटस्थलं तत्रैकापर्णशालाभून्मुनीनां नगराद्बहिः ३ संविवेश स तां प्राप्य मार्गश्रांतो मुनीश्वरः अथ तस्य शयानस्य निशि कश्चन मूर्द्धनि ४

मध्यान्निर्गतं तमेव सुंदरं पतित्वेन लब्धुं कन्यायाः तपश्चर्यामाह प्राप्तुमिति १ अथेति चिदम्बरमहानटं चिदम्बरेश्वरम् महाकालो महानट इत्यमरः २ ३ संविवेशेति सुषापेत्यर्थः स्वप्नः संवेश इत्यपीत्यमरः ४

५।६ तमिति आप्रभातं प्रातःकालपर्यंतं इदं वक्ष्यमाणं यद्वा इदं साध्यमित्येकं पदं अस्यां संध्यायां भवं कर्म्म पुरा वामनेनार्चितमिति पुराणकथानुसारेण ७ तुष्टावेति त्रिगव्यू तिमिदं षट्क्रोशप्रमाणं ८ पुंडरीकेति महारजतसोपानैः कांचनारोहणैः महारजत

प्रद्वारन्वामपादेनददर्शाद्भुतपूरुषः सुन्दरः कोयमित्युक्त्वा विनिद्रः पश्यतिस्म तम् ५ त्रिलोचनं नीलकण्ठं वैय्याघ्रं चर्म्म विभ्रतं संभ्रान्तस्तत्क्षणं भक्त्या बाष्पपूरितलोचनः ६ तमाप्रभातमस्तौषीदिदं सांध्यं समाप्य सः स्थानं शांकरमासाद्य वामनेन पुरार्चितम् ७ तुष्टाव गिरिशं तत्र तत्प्रसादादवाप्तवान् त्रिगव्यूतिमितं मार्गं समतीत्याथ सुंदरः ८ पुंडरीकपुरं दिव्यं ददर्शेन्द्रपुरोपमं महारजतसोपानैर्महानीलवितर्द्दिभिः ९ महाद्रिशिखराकारैर्मणिस्तंभविराजितैः प्रासादैरभ्रपथगैः वृषभांकितकेतनैः १० अलंकृताभिर्वीथीभिरर्चित्याभिर्विभूषितं वीणावेणुमृदंगोत्थध्वनिपूरितदिङ्मुखम् ११ ललनारत्नकोटीभिरप्सरोभिरिवोज्वलं सालमंदारसन्तानहिंतालक्रमुकासनैः १२ कदलीनारिकेलैश्च निविडोपवनान्तरम् वापीशतैः स्फुरत्पद्मकल्हारकुमुदोत्पलैः १३ स्वादुनिर्मलपानीयैः समन्तादभिशोभितं रथमातंगतुरगैः पदातिभिरलंकृतम् १४ सहस्रत्रयसंख्यातैः महार्हेशयनोत्तमैः शैवदीक्षाविधिज्ञानामालयैरुपशोभितम् १५ हविराज्यपुरोडाशपुण्यगंधिभिरुत्थितैः अग्निहोत्राग्निधूमैश्च ब्रह्मस्थानेषु पावनम् १६ मुखरं ब्रह्मघोषेण वर्णधर्मैश्च सेवितं चिदंबरपुरं प्राप्य सुन्दरस्तुष्टमानसः १७॥ ७ ॥

कांचनैः आरोहणं स्यात् सोपानमित्यमरः महानीलानां मणीनां वितर्द्दिभिः वेदिकाभिः स्यात् द्वितर्दिस्तु वेदिका सोपानैरित्यादि तृतीयान्तानां विभूषितमित्यग्रिमेणान्वयः ९ १० वीणेत्यादि द्वितीयान्तानां चिदम्बरपुरमिति सप्तदशस्थेन विशेष्येणान्वयः ११ १२ १३ १४ १५

२५

अभ्युत्थाय अभ्युत्थानं कृत्वा सभ्यैरर्चितः तद्लक्षणं ऊर्ध्वं प्राणा ह्युत्क्रामन्ति॥ यूनः स्थविर आगते प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते इति स्मृतेः १८ १९ २० सभ्यान् वर्णयति पतंजलिमिति द्वाभ्यां शैलादिः शिलादपुत्रो नंदी तस्य संमतान् दृष्टान् २१ २२ २३ पंचाक्षरेति मायैव यवनिका तिरस्करिणी तस्याः अंतस्थं सभापतिं ववन्दे २४ २५ षड्भिः सभापतिं स्तौति स तेन नमः इत्यादिना अरूपिणे इ

अभ्युत्थायार्चितः सभ्यैः प्रविवेश शिवालयं शिवगंगांभसि स्नात्वा भस्मरुद्राक्षभूषितः १८ उपहारं प्रदायाथ प्रययौ कांचनीं सभां सूर्यकोटिप्रतीकाशां रत्नस्तंभविराजिताम् १९ देवर्षिगणसंसेव्यां दर्शनान्मुक्तिदायिनीं ददर्श तत्र परितः भक्तेषु प्रथितानपि २० पतंजलिं व्याघ्रपादं मगस्त्यं मुनिपुंगवं नारदं तुंबुरुं काण्वं भार्गवं मुनिपुंगवम् २१ इन्द्रादीनपि दिक्पालान् गणान् शैलादिसम्मतान् पुरक्षांप्रकुर्वाणं विष्णुं च कमलासनम् २२ दूरे गणेशमभ्यर्च्य नत्वा स्तुत्वा तथा गुहं समनुज्ञाप्य नंद्यादीन् सभाभ्यंतरमाविशत् २३ पंचाक्षरमये पीठे पार्वत्या सह भासुरम् मायायवनिकांतस्थं स ववंदे सभापतिम् २४ शतरुद्रीयमंत्रैश्च नमस्कृत्य नटेश्वरं सुंदरः सूक्तिभिर्देवं स्तोतुं समुपचक्रमे २५ श्रीसुन्दर उवाच सतेन महिते नमः सदामुदात्मने नमः सतश्च साक्षिणे नमः सभाधिपाय ते नमः अरूपिणे च रूपिणे निरूपणातिगाय ते कपालिने कपालिने कपर्दिने नमो नमः २६ नमो हराय जान्हवीधराय चन्द्रमौलये त्रिलोचनाय ते नमस्त्रयीमयाय शंभवे अरालकालकूटनीलकंठनालकांतये कपालमालिने नमः करीन्द्रचर्मधारिणे २७ ७ ॥ ७ ॥

ति कपालिने अकपालिने इति छेदः अश्च कश्च अकौ विष्णुब्रह्माणौ तौ पालयति तच्छीलाय कपर्दिने इति कं गंगाजलं पिबतीति कपः स चासौ रुधं रुद्धिं ददातीति रुद् ताहृशः कपर्दी स्यास्तीति कपर्दी भगीरथप्रार्थनया गंगावतरणसमये शिवजटाभारे पतिता गंगा तृणाग्रबिन्दुदृशां

२८२९ पुंडरीकेति पुंडरीकानां सितांभोजानां स्रक् मालायस्य तं पुंडरीकासनेन ब्रह्मणा अर्चितं पुंडरीकाजिनधरं व्याघ्रचर्मधारिणं पुंडरीकाक्षस्य वि ष्णोः नायकं नौमीत्यन्वयः व्याघ्रेपि पुंडरीकोनेत्यमरः ३० पुण्डरीकेति पुण्डरीको द्वितीयदिग्गजः तेनाराध्यं ऐरावतः पुण्डरीक इत्यमरः ३१ एकेन=

नमः शिवाय शंभवे नमस्त्रिशूलधारिणे मनोजगर्वहारिणे महोक्षकेतवे नमः दिगंबराय ते नमश्चिदम्बुराशये नमः स्वयंभु वे सदानमश्चिदम्बराय ते नमः २८ नमः सुवर्णसंसदे नमः सभेश्वराय ते नमोस्तु भूतसंसदे नमो गणाय योगिनां नमो गि रीन्द्रजापते नमो हिरण्यबाहवे नमोस्तु चेतसस्पते नमो नमः शिवाय ते २९ पुंडरीकस्रजं नौमि पुंडरीकासनार्चितं पुंडरी काजिनधरं पुंडरीकाक्षनायकम् ३० पुंडरीकगजाराध्यं पुंडरीकमुनिस्तुतं पुंडरीकपुरीनाथं पुरारिं प्रणमाम्यहम् ३१ महादे वमहानृत्तमहाडंबरसाक्षिणीं महादेवतनुं वामां शिवकामामहं भजे ३२ श्रीअगस्त्यउ० वाग्जन्मसफलीकुर्वन्नेवं स्तोत्रेण सुं दरे प्रविश्य श्रीपुरं भूयः स्तुहि तत्रैवमन्वहं ३३ विनाव्योम्नि शरीरेण वाणी कापि व्यजृंभत तव स्तोत्रेण तुष्टोऽस्मि सूक्तिसुन्दर= सुन्दर ३४ इत्युदीर्य्य नभोवाण्यां विरतायां हिरण्मयी दिवः शिवाज्ञया वृष्टिरभूत्सुन्दरमूर्द्धनि ३५ देवाश्च विस्मयं जग्मुः किंपु नर्भुवि मानवाः पादे प्रणेमुस्तत्रस्थाः सुन्दरं मेनिरे हरम् ३६ अचिन्त्यशक्तेर्देवस्य ज्ञात्वा संकल्पवैभवं अहंकारान्धकारा न्तः प्रविवेश न सुन्दरः ३७ महाप्रसादो देवस्य कथमेवं विधे मयि इति चिन्तापरः शंभोः भूयसीं भक्तिमादधे ३८ सभां नत्वा नटेशस्य व्याघ्रपादस्तुखान्मुनीन् नंद्यादिगणनाथांश्च शिवभक्तान्महीयसः ३९ अभ्यनुज्ञाप्य गौरीं च चित्सभाधिपतिप्रसुं

पार्वतीं स्तौति महादेवेति ३२ अनन्तरवृत्तमाह वाग्जन्मेति श्रीपुरं कमलानगरं ३३ विनेति वाणी आकाशवाणी ३४ इतीति हिरण्मयी सुवर्णप्र चुरा ३५ ३६ अचिन्त्येति अहंकार एव अन्धकारः तस्मात् अन्तः न प्रविवेशेत्यन्वयः ३७ ३८ ३९ ४० ॥ ७ ॥ ९ ॥ ७ ॥

सुन्दरस्य नगरान्तरप्रवेशं वर्णयति संनिवर्त्त्येति ४१ स्कन्देति स्कन्दस्य कुमारस्य अपरतनुः द्वितीयमूर्त्तिः बोधसंबन्धनामा संज्ञायां चेति इवार्थे कन्
प्रत्ययः चैतन्यसंबन्ध इव स्थित इत्यर्थः ४२ बोधेति पदास्वपादेन ४३ ४४ अथ दक्षिणादिग्गमनमाह प्रसादेति ४५ ४६ ४७ ४८ षड्भिः कावेरीं वर्ण

सन्निवर्त्यानुगान्सर्वान्नमस्कृत्वाग्रजन्मनः उत्तीर्योत्तरकावेरीमगाद्ब्रह्मपुरं प्रति ४१ स्कन्दापरतनुर्यत्र बोधसंबन्धकः शिशुः गौरीस्तन्यामृतास्वादात्नर्त्तयामास भारतीम् ४२ बोधसंबन्धपादाब्जरेणुपावनवीथिका सेयं पुरी पदास्पृष्टुं न युक्ते त्येव सुन्दरः ४३ कैलासवासं पुरुषमस्तोषीद्दूरतः स्थितः आविर्भूतोऽग्रतस्तस्य सहगौर्या महेश्वरः ४४ प्रसादमकरोत्तस्मै कैलासपतिरीश्वरः अथानुज्ञाप्य तं देवं दक्षिणाशामगाहत ४५ श्रीचोलविषयाभोगसौभाग्यमवलोकयन् कावेरीतीरमगमत् कपर्दिस्थानभूषितम् ४६ अवगाह्य नदीं पुण्यां कुबेरमुनिसंभवां अवेक्षमाणः परितो ननंद स महानदीम् ४७ कमलोत्पलकल्हारवासनामोदवासितां कर्पूरपुंजसच्छायमहापुलिनमण्डलाम् ४८ हिंतालक्रमुकस्पर्द्धिबद्धरंभावनांतराम् सूर्याश्वखुरनिर्भिन्ननारिकेलफलद्रुमैः ४९ पयःपूरैर्निदाघेऽपि काले कूलंकषोद्रकां अपारस्तनशैलाग्रघातव्याकुलवीचिकाम् ५० मज्जच्चोलवधूनाभिनिष्ठीतरयवेणिकां चोलेंद्रसैन्यमत्तेभदानचन्द्रकभूषिताम् ५१ तीरद्रुमाकुलच्छायनिरुद्धोरुमहातपां हंसकापोतमायूरकलध्वनिमिलद्दिशम् ५२ तटोटजमुनिव्रातवेदान्तध्वनिपाविताम् यायजूकोरुशालासुयूपमालाविराजिताम् ५३ योगनिद्रासमासक्तरंगनाथांसमालिकां महार्णवस्य महिषीं कावेरीं स महानदीम् पश्यन्पशुपतेः स्थानं न्यसेवत महाकविः ५४ मायूरमध्यार्जुनकुंभकोणश्रीकांचिजप्येश्वरनामभाक्षु ५५ स्थानेषु दिव्येषु हरं निषेव्य स त्यागराजेशपुरं जगाम

यति कमलेत्यादिना ४९ ५० ५१ ५२ ५३ ५४ मायूरेति दिव्येषु द्योतनशीलेषु पञ्चसु मायूरादिशिवस्थानेषु हरं निषेव्येत्यन्वयः इति श्रीमान ५५

एवमत्यद्भुतसुन्दरमहिमाकर्णनेनजातकौतूहलानांमुनीनां चरित्रान्तरवर्णनेनप्रवृत्तिंद्रढयन्नाह चरितमिति १ भक्तेःप्राधान्यंकथयति किमिति २ ३ ४ ५ चन्द्रोदयइति कमलापुरस्य संज्ञाप्रवृत्तिनिमित्तं आख्यानद्वारावर्णयति पुरेति ६ ७ देवानामिति नन्दकः खड्गः तेन छि

श्रीअगस्त्यउवाच चरितंसुंदरस्यान्यदद्भुतं शृणुतद्विजाः सर्वलोकेषुविख्यातंसर्वपापप्रणाशनम् १ किंदुर्लभंभगवतिप्रसन्ने वृषभध्वजे तथापिनान्यंवांछन्तिभक्त्याभक्ताविनाहरे २ यत्रयत्रशिवस्थानंतत्रतत्रससुन्दरः भवानीसहितंदेवं स्तुवंगुंफेगिरांमुदा ३ लब्धप्रसादोऽथपुरंविवेशकमलालयं सन्निधौत्यागराजस्यप्रणम्यस्तोतुमैहत ४ तत्रसैःस्वागतं दृष्टःसुन्दरःसूक्तिसुन्दरः संदर्शनान्महेशस्यतस्यसक्तिरवर्धत ५ चन्द्रोदयइवांभोधेः पूर्णोवारांनिरर्गलःपुराकल्पान्तरेविष्णुःशंखचक्रगदाधरः ६ प्रसादितःसुरैस्सर्वैरसुरैर्दितैर्युधि योद्धुमभ्युद्यतोदैत्यानारूढपतगेश्वरः ७ देवानामसुराणांचबभूवायोधनंमहत् नंदकच्छिन्नमूर्द्धानोगदासंचूर्णितांसकाः ८ मूर्छिताशार्ङ्गनादेनविलूनाश्चक्रधारया खगेशपक्षवातेनदूरेधूताश्चपर्णवत् ९ विद्रावितारणेदैत्याःपलायनमशिश्रयन् हरिणाभ्यर्थितायूथपतयोह्याश्रमंभृगोः १० विविशुःशरणाकांक्षानापश्यंतत्रवैमुनिं अन्तर्वत्नींमुनेःपत्नींदैत्याःप्रापुर्गतिंपराम् ११ दत्ताभयाभृगोःपत्न्यादैत्यावेद्यन्तराविशन् अदृष्टादानवपतीन्निवृत्तोहरिरध्वनि १२ देवैःसंचोदितादुन्द्वैःप्रवृत्तिमम रद्विषांउपलभ्यस्वशरणान्रक्षितुंत्रिदिवौकसः १३ भार्गवाश्रममासाद्यपक्षिराजादवारुहत् आगतंविष्णुमालोक्यभृगुपत्नीयशस्विनी

न्नामूर्द्धानोयेषांतथागदया संचूर्णिताःअंसाःभुजशिरांसियेषां ८ ९ विद्राविताइति यूथपतयः दैत्यसेनापतयः १० विविशुरिति अन्तर्वत्नीं गर्भिणीं अन्तर्वत्नीतुगर्भिणीत्यमरः अन्तर्वत्पतिवतोरितिनुक् ११ दत्तेति वेद्यन्तराः वेदिमध्ये १२ १३ १४ ॥ ३ ॥ ४ ॥

कृत्वेति सूनृतयासत्यप्रियया सूनृतं प्रियेसत्ये इत्यमरः १५ त्वदिति प्रमुदिता प्रहर्षिताऽहमिति शेषः स्तौति श्रीपते इत्यादिना १६ प्रसीदेति दृश्य स्यजगतः स्थित्यादिकर्त्ता १७ ब्रह्मेति गिरा वेदवाचा मुनेः भृगोः १८ आगमनकारणं पृच्छति प्रसीदन्तीति १९ २० २१ देवादृति शरण्यं शरणेसा

कृत्वांजलिप्रदानाद्यंस्वागतं पर्य्यपृच्छत अथाब्रवीदिदं साध्वी हरिं सूनृतया गिरा १५ त्वद्दर्शनात्प्रमुदिताचिरात्त्व
ध्यनिधिर्यथा श्रीपते भूपते देव नमस्तेऽस्तु जगत्पते १६ प्रसीद मयि भक्तायां भक्तवत्सल केशव त्वमनादिरन
न्तश्च दृश्यस्थित्युद्भवान्तकृत् १७ ब्रह्मादिभिश्चाविदितः स्तुत्यः प्राचीनया गिरा मया दृष्टोसि भाग्येन तपसे
वमहामुनेः १८ प्रसीदन्ति महात्मानः पत्रपुष्पफलार्चिताः अनुगृहाण मह्यं त्वं किमागमनकारणम् १९ अ
नुगृण्हीष्व मां देव सुधामधुरया गिरा इति संप्रार्थितः पत्न्या भृगोः कमललोचनः २० स्मयमानो बभाषे तां वनः
मालाधरः पुमान् श्रीविष्णुरुवाच शृणु मद्वचनं साध्वि पूजितोस्मि त्वयानघे २१ देवा दैत्यभयार्त्ता मां शरण्यं शरणं ग
ताः तद्रक्षणाय दैत्यानां संहारेऽस्मिन् कृतो यमः २२ हन्यमानेषु दैत्येषु मया केचन दानवाः वनांतरुटजं प्राप्ता इति वन्हेः
श्रुतं मुखात् २३ देवान्यजति ते भर्त्ता प्रसन्नास्त्वयि संतुते चक्रेण दानवान् हन्मि विलीना यत्र ते वद २४ वैष्णवीं गिरमा
कर्ण्य मुनेः प्राह पतिव्रता निरुध्य पर्णशालायां द्वारं भीता त्वधर्म्मतः २५ सन्तः समं त्वां विदुरादिपूरुषं न ते प्रियः कश्चि
द्द्वाप्रियोपि वा जगद्गुरुर्धर्मपथप्रवर्त्तकः कथं परप्रेरणया सिपापधीः २६ दैत्या मां शरणं प्राप्ता यथा त्वाममुरद्विषः श
रणागतसंत्यागान्नान्यत्पापं महत्तरम् २७ अत्रैवोदाहरंत्वीममिति हासं पुरातनं श्येनाय दत्वा स्वशरीरमांसं शैब्यः क

र्षुं तत्र साधुरितियत्प्रत्ययः २२ हन्यमानेष्विति अन्तरुटजं पर्णशालाभ्यन्तरं पर्णशालोटजोऽस्त्रियामित्यमरः २३ २४ २५ प्रस्तुतकार्य्यायविष्णुं

२९ ३० ३१ ३२ पालितादिति भ्रूणहत्यागर्भहत्या भ्रूणोर्भकेस्त्रैणगर्भेदूत्यमरः ३३ ३४ ३५ कमलालयंकमलानगरं प्रयतापवित्रा पवित्रः

रक्षकीर्त्तिमहतींजगामशक्रंकपोतंशरणागतंच अपिप्राणभयंप्राप्तोनत्यजेच्छरणागतम् २९ त्यजतोनिरयेपातःया
वदाचन्द्रतारकं नत्यजामिततोदैत्यान्विष्णोयाहियथागतम् ३० अथवाजहिमामग्रेपश्चात्संहरदानवान् इतिरुद्
गृहद्वारांभृगुपत्नींपतिव्रताम् ३१ देवैःप्रोत्साहितोविष्णुश्चक्रेणनिजघानह निहत्यदानवान्पश्चाद्रक्षतत्रिदिवौ=
कसः ३२ पालिताहरिणादेवाःबभूवुःसुखितादिवि भ्रूणहत्याथमहतीरमापतिमुपाद्रवत् ३३ भ्रूणहत्याविनाशायब
भ्रामभुवनेषुसः विघयातपसापत्नीमुज्जीव्यकुपितोभृगुः ३४ शशापकेशवमपिस्त्रीवियोगस्तवास्त्विति हत्ययानुग
तंविष्णुविसृज्यकमलालया ३५ कमलालयमासाद्यभर्त्तुर्हत्यानिवृत्तये प्रयताभ्यर्चयामासभगवंतंमहेश्वरम् ३६ अ
थविष्णुर्मुनीन्देवान्मेलयित्वानिजांहसः निष्कृतिंपरिपप्रच्छप्राप्तुकामःश्रियंपुनः ३७ प्रसादयित्वामुनयःसहदेवैर्मुनिं
भृगुंः प्रायश्चित्तविधानाययेनमुच्येतकेशवः ३८ अचोदयन्महाप्राज्ञाःशांतक्रोधश्चसोऽभवत् शांतकोपश्चि
यःकांतमिदमाहमहामुनिः ३९ भ्रूणहत्याऽनिवार्यातेविष्णो कल्पशतैरपि॥ यदिमेनक्रुधःशान्तिरिहत्यांम
धुसूदन ४० देवद्विजप्रार्थितस्यक्षमादिष्ट्याऽभवन्मम सन्तोनप्रतिकुर्वन्तिसागस्सुत्वादृशेष्वपि ४१ अनुग्र
हन्त्वपिंत्वार्य्याःशोकभाजिप्रति द्विषिननिष्कृतिरघस्यास्यतथापिश्रूयतामिदम् ४२ रुद्राध्यायमहामंत्रंद्वाद
शावृत्तिकोटिभिः ॥ दुग्धधाराभिषेकेणशिवलिंगस्यनिष्कृतिः ४३ ॥ ७ ॥ ७ ॥ ७ ॥

प्रयतःपूतइत्यमरः ३६ ३७ ३८ ३९ ४० देवेति सागस्सुसापराधेषु ४१ ४२ ४३ ॥ ७ ॥ ७ ॥ ७ ॥

भस्मेति सोमास्कन्दं तन्नामकं शिवलिङ्गं ४४ ४५ ४६ दशेति विलीनानष्टाश्रियं त्रजगच्छेत्सर्वः ४७ ४८ साक्षात्कारं प्रार्थयते प्रमुवाचे



भस्मशय्याशयानश्चभस्मच्छन्नस्तथाकुरु सोमास्कन्दंनिषेव्याथभूयःश्रियमवाप्स्यति ४४ इत्युक्त्वास्वाश्रमंप्रापः
सहशिष्यैर्महामुनिः हरिस्तुशतरुद्रीयंचिरमावर्तयन्मनुम् ४५ कामधुक्क्षीरधाराभिरभिषिंचन्महेश्वरं दिव्ये
मारकतेलिङ्गे दिव्यान्वर्षगणान्बहून् ४६ दशकोट्यब्दविलयेवागभूदशरीरिणी विलीनाभ्रूणहत्यातेत्रजवि
श्वंभरश्रियम् ४७ श्रान्तोसिपूजयाद्यत्वंकिंभूयःप्राप्तुमिच्छसि विस्मराकार्यतांवाणींतांदिशंप्रस्तुदंजलिः ४८
प्रस्तुवाचविभोनष्टायदिहत्यातवार्चयासाक्षात्कर्तुंभवद्रूपमिच्छामिशशिशेखर ४९ इमंदेहिवरंदेवभक्तवत्सल
शंकरयादृशंभवतोरूपंदेहीध्यात्वापिपापकृत् ५० सद्योविमुच्यतेसर्वैर्वाङ्मनःकायजैरघैः एवंहरिंप्रार्थयन्तं
वागिवहायस्यभाषत ५१ ब्रह्मादयःसुरगणाअगस्त्याद्याश्चयोगिनः अपिक्रतुशतैरिष्ट्वादत्वादानानिभूरिशः
५२ पूजयित्वापिमांलिंगेतपस्ययासुषिताशयाः नशक्नुवंतिमांद्रष्टुंविनाचित्तनिरोधनात् ५३ शृणुविष्णोत्विदं
वाक्यंयदिमांद्रष्टुमिच्छसि जितेन्द्रियःश्रियासार्द्धंवर्षकोटिस्वयंव्रती ५४ विरक्तःसर्वभोगेषुव्रतंपाशुपतंचर द
र्शयिष्यामिसम्पूर्णेसमयेमत्कृतेततः ५५ दृश्यसेममतद्रूपंदुर्दर्शंयोगिनांचयत् विरतायामुदीर्यैवंगिर्यग्रेवा
रिवीचिवत् ५६ दधौव्रतंपाशुपतंदीक्षांदेवोजनार्दनः भस्मावगुंठनंकृत्वाचीरवासाजटाधरः ५७ जपन्
पञ्चाक्षरींविद्यांपद्मालार्चनतत्परः कंठदघ्नेजलेतिष्ठन्दिवारात्रमतंद्रितः ५८ ॥ ॥ ॥

ति ४९ ५० ५१ ५२ ५३ ५४ ५५ ॥ दृश्यसे इतिगिरिगगनवाण्यांएवंपूर्वोक्तप्रकारेणोदीर्य्यकथयित्वाअग्रेवारिवीचिवत्जलतरंगवत्

५९ ६० ६१ ६२ ६३ अभ्यर्चिताद्धिति हिमसारलिंगात् कर्पूरलिंगात् सिताभ्रो हिमवालुकेत्यमरः अस्य विस्मोः पुरतः प्रत्यक्षोऽभूदित्यर्थः ६४
इतिश्रीमानवल्युपनामकनृसिंहविरचितायां स्कन्दोपपुराणव्याख्यायां भक्तिविलासप्रकाशिकायां नवमोऽध्यायः ९॥ ॥ ॥

पूर्वाध्यायान्ते विस्मुना पूजितात् कर्पूरलिङ्गात् सोमास्कन्दतनुः शिवः प्रादुरभूत् इत्युक्तं तदर्थश्च उमा च स्कन्दश्च उमास्कन्दौ ताभ्यां

महान्तं देवमुद्दिश्य चचार व्रतमुत्तमं भूयः संप्राप्य भर्त्तारं कमलापि शिवाज्ञया ५९ ज्ञात्वा हत्याविनिर्मुक्तं तत्राभूत्परि
चारिका चारुचित्रैरमालिङ्गैर्येरानर्चि महेश्वरः ६० स्थाने जवंतिकापुष्पैः कमलालयनामनि कमलाक्रीडविकचैस्तै
रेवमधुसूदनः ६१ शिवनामसहस्रेण पूजयामास भक्तिमान् कर्पूरालेपकह्लारकलिकामालिकार्चितम् ६२ गते
कोटिद्वये ब्दानां सुप्रीतश्चन्द्रशेखरः सोमास्कन्दतनुर्भूत्वा विस्मुमन्वग्रहीद्धरः ६३ अभ्यर्चितान्मधुभिदा हिमः
सारलिंगात्सार्द्धं गिरीन्द्रसुतया च षडाननेन कर्पूरलेपकमनीयवपुस्सुगंधिसौगंधिकस्रगभवत्पुरतोऽस्य शंभुः ६४
इतिश्रीस्कन्दोपपुराणे नवमोऽध्यायः ९ ॥ ॥ ॥सोमास्कन्दं महादेवमाविर्भूयाग्रतः स्थितं कर्पूरालेपकह्लार
वासनांचितदिङ्मुखम् १ तप्तकांचनसच्छायसमुन्नतजटाधरं मृणालधवलां तन्वीं मौलौ चान्द्रमसीं कलाम् २
गंगामहीन्द्रमम्भोज भूकपालस्रजं तथा॥ विभ्राणमलिके चारुमृगनाभिविशेषकम् ३ ॥ ॥ ॥

सहितां तनुर्यस्य तत्र शिवगौरीषण्मुखान् क्रमेण वर्णयिष्यन् आदौ शिरप्रभृतिपादपर्य्यन्तं षोडशभिः शिवं वर्णयति सोमास्कन्दमि
ति कर्पूरालेपश्च कल्हाराणि च सौगन्धिकानि च तेषां वासनया अञ्चितानि पूजितानि दिङ्मुखानि यस्य तं १ २ गङ्गामिति अम्भो
जभुवः ब्रह्मणः कपालानां स्रजं मालां अलिके ललाटे मृगनाभिविशेषकं कस्तूरीतिलकं विभ्राणमित्यन्वयः ३ ॥ ॥ ॥

स्फुरदिति काश्मीरजातं कुंकुमं काश्मीरजन्माग्निशिखमित्यमरः तस्य तिलकमिव भास्वत्प्रकाशमानं वन्हिविलोचनं यस्य तं ४ ५ ६ ७ रत्नेति परश्वधेत्यादि चतुर्भुजमूर्त्तिवर्णनाभिप्रायेण ८ गन्धेति अपराङ्गे पृष्ठभागे विषक्तं अद्रिकन्यायाः पार्वत्याः भुजलता

स्फुरज्जवंतिकापुष्पकर्णाभरणभासुरम् काश्मीरजाततिलकभास्वद्वन्हिविलोचनम् ४ शोभनभ्रूलतं सान्द्रकरुणापाङ्गवीक्षणम् ॥ कपोलादर्शसंक्रांतबिंबगौरीमुखाम्बुजम् ५ स्मितोन्नतनसं मुक्ताफलश्रीदशनावलिम् ॥ विद्रुमोत्तमसच्छायमृदुलाधरपल्लवम् ६ वदनादर्शवृन्ताभचुबुकश्रीविराजितम् ॥ कालकूटप्रभामिश्रकंठकर्पूरलेपनम् ७ रत्नाङ्गुलीयकटककेयूरवलयाङ्गदम् ॥ परश्वधमृगाभीतिवरमुद्रास्फुरत्करम् ८ गन्धपंक्तिकृतोद्भ्रान्तभृङ्गसौगंधिकस्रजम् ॥ अपराङ्गविषक्ताद्रिकन्याभुजलतास्पदम् ९ उद्ग्रीवनागमाणिक्यप्रभापूरितनाभिकम् ताराहारावलीनिष्कपदकांचितोदरम् १० उपवीताहिनिश्वासमृष्टभस्मानुलेपनम् व्याघ्रचर्मपरीधानंमणिनूपुरमंडितम् ११ उत्फुल्लाहिशिरोरत्नप्रभापाटलपादुकम् नम्राहंकारतिमिरप्रभाकरतलप्रभम् १२ कालवक्षस्थलशिलादंभोलिनखभास्करम् कैवल्यकल्पकक्षोणिरुहनूतनपल्लवम् १३

स्पदं यस्य तं ९ उद्ग्रीवेति ताराणांशुद्धमुक्तानां मुक्ताशुद्धौ च तारस्यादित्यमरः तेषां हारावलीषु निष्कपदकं रत्नांचितसुवर्णपदकं तस्य आभया कांत्या आञ्चितं उदरं यस्य तं १० ११ १२ कालेति कालस्य यमस्य वक्षस्स्थलमेव शिला तस्याः दंभोलयो वज्ररूपाः ये नखाः तैर्भासुरं इत्यादि चरणांभोजं इत्यस्य विशेषणं कैवल्यं मोक्षः स एव कल्पकक्षोणिरुहः कल्पवृक्षः तस्य नूतनपल्लवइ

१४ १५ पार्वतीं वर्णयति वसन्तीमित्यादि अस्य शिवस्य वामभागे वसन्तीमित्यन्वयः १६ कुमारं वर्णयति क्रीडन्तमिति तयोः शिवयोः १७ १८ शार्दूलेति शार्दूलनखैः कंठाभरणलग्नैर्व्याघ्रनखैः उद्यत्सूर्यनिभैरित्यादिषड्भिर्मुखांबुजैरित्यग्रिमेणान्वेतित्तैरुपलक्षितमित्यर्थः उपलक्षणेत्तृतीया एतादृशं कुमारं चालोक्य शिवस्य पदयोर्निपपातेत्यन्वयः १९ २० २१ २२ २३ प्रणम्येति बर्हिबर्है

भक्ताभयप्रदाराव किंकिणीपरिभूषितं संसाररोगभैषज्यपरागस्मृतिवैभवम् १४ दधानं चरणांभोजं दलितांबुजसन्निभम् रत्नसिंहासनारूढं रमणीयतमाकृतिम् १५ उन्मिषज्जीवरत्नश्रीपरिवेषपरागतं वसन्तीं वामभागेऽस्य वारिजायतलोचनाम् १६ शैलराजसुतां देवीं सर्व्वभूषणभूषितां क्रीडंतं च तयोर्मध्ये कुमारं कोमलाकृतिम् १७ मञ्जीरकिंकिणीकांचीकेयूरकटकांगदैः वलयैरंगुलीयैश्च महाहारैः परिभूषितम् १८ शार्दूलनखराश्लिष्टकंठाभरणभास्वरं उद्यत्सूर्यनिभैः षड्भिः स्फुरद्दशनकुड्मलैः १९ अर्द्धोक्त्यमृतनिष्यन्दमन्दहासमनोहरैः सिद्धाञ्जनान्वितापांगलोलतारकलोचनैः २० अंबिकास्तन्यकणिकाभूषिताधरविद्रुमैः सुविभ्रमद्भ्रूलतिकैर्नगनाभिविशेषकैः २१ चूडामणिपरिष्वक्तनीलकुंचितकुंतलैः ललंतिकामणिज्योतिरनुलिप्तालिकस्थलैः २२ सामोदश्वसितैः षड्भिः दर्शनीयमुखांबुजैः आलोक्यानंदभरितः पादयोर्निपपात ह २३ प्रणम्य कोटिशस्तुत्वा श्रिया सह कृतांजलिः दधार छत्रमस्योर्ध्वं बर्हिबर्हविनिर्मितम् २४ चंचच्चामरगुच्छेन श्रीरवीजयदंतिके पांचजन्यं दरवरं प्रदध्मौ हर्षनिर्भरः २५ ॥ ७ ॥

णमयूरपिच्छेन विनिर्मितं छत्रं अस्य शिवस्योर्ध्वे दधारेत्यन्वयः २४ लक्ष्मीकृत्यमाह चंचदिति पुनर्विष्णुकृत्यमाह पाञ्चजन्यमिति दरवरं शंखश्रेष्ठं प्रकर्षेण दध्मौ शब्दापयामास ध्माशब्दाग्निसंयोगयोरित्यस्य लिटि रूपम् २५ ॥ ७ ॥ ७ ॥

शिवसाक्षात्कारजन्यस्यानंदस्य अपारतां दर्शयति देवमिति २६ २७ २८ यथेति अविक्षतं अखंडितं २९ ३० आन्तइति एवंरूपंस ग्रथारयेतिशेषः ३१ ३२ इतीति तेनविष्णुनाप्रार्थितः देवाःयोगिनश्चतंशिवंदृष्ट्वाशुद्धचेतसः शुद्धचित्ताःआसन्नित्यन्वयः ३३ नाम



देवमालोक्यपुरतोयमानन्दमगाद्धरिः नतस्यकणिकामात्रंब्रह्मानन्दोऽपिसंभवेत् २६ अथप्रसन्नोदेवेशःसो मास्कन्दोमहेश्वरः प्रणतंप्रांजलिंप्रव्हमभाषतजनार्दनम् २७ निवृत्ताभ्रूणहत्यातेसंगतोसिश्रियापुनः मत्ताप्य मधुनालब्धमनयाव्रतचर्य्यया २८ यथापूर्वंत्रिजगतामस्त्वैश्वर्य्यमविक्षतं तवाहंगोचरोऽन्येषामदृश्योयोगिना मपि २९ रत्नसिंहासनासीनंस्कन्देनचसहोमया येसेवन्तेमहाभागाःतेषांमुक्तिःकरेस्थिता ३० आन्तोसिसुचिरं विलोकिमन्यद्वांछितंतव श्रीविष्णुरुवाच मत्प्रसादायभगवन्एवंरूपंसदाविभो ३१ भूयोदेवाश्चमुनयःकृतार्थास्सं त्वद्दर्शनात् योगनिद्राविधानायप्रयच्छतुमतिंविभो ३२ इतितत्प्रार्थितःशंभुःतथारूपोबभूवह देवाश्चयोगिनोदृष्ट्वातमासञ्छु द्धचेतसः ३३ यद्यदिष्टतमंयस्यतस्यतत्तत्प्रदानतः त्यागेश्वराभिधांभेजेमनोवाचामगोचरः ३४ अथकालेगतवतिमहार्णवशायः पुमान् रत्नसंपुटमध्यस्थंकृत्वात्यागेश्वरंविभुम् ३५ निधायोरसिसुप्वापलब्धानुज्ञोमहेश्वरात् निश्वासोच्छ्वासवेगेननिद्रालोः कमलापतेः ३६ प्रसक्तताण्डवंदेवंहंसनृत्यमथास्तुवन् योगिनोहंसनटनंविलोक्यगिरिजापतेः ३७ संसारार्तिजहुर्वक्षः कंसारेरधिजग्मुषः अथासुरेभ्योभीतेनप्रार्थितोवज्रपाणिना ३८ उत्थायहरिरिन्द्रायदत्वावक्षोगतंहरं दिनेदिनेपूजयास्यपू

रूपरहितस्यशिवस्य त्यागेश्वराभिधानेप्रवृत्तिनिमित्तं दर्शयति यद्यदिति ३४ ३५ ३६ ३७ संसारेति इन्द्रायशिवप्रसादंव र्णयति अथेत्यादिना ३८ उत्थायेतिषट्पदी दिनेदिनेहरंपूजयेस्त्वमेवोच्चदितिशेषः ॥ ॥

कुर्वाण इति अर्द्धेन इन्द्रस्य दुष्टलाभं सामान्यतो वर्णितमिति ज्ञेयं ३९ विशिष्य इन्द्रस्यैवं विष्णुतुल्यसम्पत्प्राप्तिं च तस्य वर्णयति आकाशे ति ४० इति श्रीमानवस्तुपनामकनृसिंहविरचितायां स्कन्दोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां दशमोऽध्यायः १०॥७॥
अथ विष्णुशक्रयोरिवमुचुकुन्दस्यरात्तःशिवप्रसादं वर्णयिष्यन् तदुपोद्घाततया कैलासोपवने शिवयोर्विहारं वर्णयितुमारभते एत

कुर्वाणः सहितः शक्रो महतीमृद्धिमाप्तवान् ३९ आकाशगंगापयसा च बर्हिर्वृत्रेण शंखध्वनिभिश्च मंद्रैः ज
वंति कास्त्वभिरूपास्य शंभुं हरिःश्रियं प्रापयथा मुकुंदः ४० इति श्रीस्कंदोपपुराणे दशमोऽध्यायः १०॥ ७० ॥
एतस्मिन्नंतरे देवो देव्या सह महेश्वरः कैलासशैलोपवनं प्रपेदे पुष्पितद्रुमम् १ राजरंभासमुद्भूतैः कर्पूरैः
सेचकैरिव पांडुरं हेमपद्मानां परागैः कुंकुमैरिव २ अरुणं नवदूर्वाभिः श्यामलं क्वचिदुन्मदैः अनेकवर्णैर्वि
हंगैः कूजद्भिरभितो वनम् ३ प्रविश्योपवनं गौरीं कामिनीमिव कामुकः अलंचक्रे नवैः पुष्पैः कामदर्पहरो हरः
४ अलके कर्णिकारं च कर्णयोः प घ कर्णिकां उन्नते नासिकाग्रे च चारु पुंनागकुंडलम् ५ कपोले लोध्ररेणुं च कंठ
नाले मनोरमं सिंदुवारकृतं दाम मृणालवलयानि च ६ हस्ते महोसलं दत्तं पत्रलेखां चितं स्तने प्रसूनाभरणं गौरी वि
भ्राणा रमयद्धरम् ७ श्रीफलद्रुममूले तां प्रसूनशयने हरः उपवेश्य तदुत्संगे शिश्ये सर्वगुहाशयः ८ ७ ॥

स्मिन्निति १ तदेवोपवनं द्वाभ्यां वर्णयति राजरंभेत्यादिना २ ३ प्रविश्येति हरः उपवनं प्रविश्य कामिनीं कामुक इव गौरीं पुष्पैः अलं
चक्रे अनेन वेषविभावाख्यशृङ्गारः सूचितः ४ अलंकरणप्रकारमेव तत्तदवयवेषु वर्णयति अलके इत्यादिना सार्द्धद्वयेन ५ ६ हस्ते
इति एवं प्रसूनाभरणं पुष्पाभरणं बिभ्राणा गौरी हरं अरमयत् रमयामास ७ श्रीफलेति सर्वगुहाशयः समस्तभूतानां हृदयाकाशवर्ती ८

९ यत्रेतिरोमशः बहुरोमवान् असिताननः कृष्णमुखः गोलाङ्गूलो वानरजातिविशेषः १० शाखेति श्रीवृक्षाग्रे बिल्ववृक्षाग्रे जातिसिद्ध्

पश्चिमाचलपर्यन्तेलंबतेस्मतदारविः दिष्ट्यातदाप्रदोषोऽभूत्पावनःपापिनामपि ९ यत्रबिल्वदलैःशंभुम
र्चयन्मुच्यतेनरः तदानींरोमशःकश्चिद्गोलांगूलोसिताननः १० शाखाचंक्रमणंकुर्वन्श्रीवृक्षाग्रेपपातह
विश्रान्तस्तस्यशाखाग्रेचेष्टयाजातिसिद्धया ११ बभंजबिल्वपत्राणिकोमलान्यक्षतानिच तानिसर्वाणि
पत्राणिपतंतिधरणीतले १२ दिष्ट्यागौरीसमेतस्यनिपेतुःपादयोर्विभोः गणयामासतानीशोयावदष्टोत्तरं
शतम् १३ कीशंचादर्शयत्गौर्यैसाकटाक्षेणचैक्षत ततउत्थायसंहृष्टःपशूनांपतिरीश्वरः १४ आगच्छेत्या
ह्वयामासबिल्वोपरिगतंकपिं तत्क्षणेजातविज्ञानःसोऽवरुह्यततोद्रुमात् १५ प्रदक्षिणीकृत्यपदेशिव
योर्निपपातह तमाहभगवानीशःप्रीतोबिल्वदलार्चनात् १६ अष्टोत्तराद्वैसाहस्रशतपर्यंतमेकराट्
मंडलाधिपतिर्भूत्वाचांतेमत्पदमेष्यसि १७ गच्छभूमौमनोर्वंशेसंभवोस्तुतवानघ इत्युक्तःप्रत्युवाचाहगो
लांगूलोमहेश्वरम् १८ त्वत्पादसेवांहित्वायद्यपिजन्मभवेन्मम कदाजन्मनिवृत्तिःस्यात्ससीदपरमेश्वर १९
भक्तिरेवपदांभोजेतवास्तुममशाश्वती त्वत्पादसेवाप्रस्तूहंनराज्यंदातुमर्हसि २० दासदासोभवाम्यत्र
नभूमौयामिजन्मभाक् यत्रदिव्यावयंदिव्यसर्वेशमदमूढधीः २१ अहंकुर्वन्नविज्ञायत्वामधोगतिमश्नुवे
चतुरंगबलोपेतंसर्वभोगसमृद्धिमत् २२ तवराज्यंददामीतिवंचनात्वनोचिता प्रसन्नोयदिकारुण्यदृष्टिः

या वानरजातिसिद्ध्या ११ १२ दिष्ट्येति दैवयोगेन विभोः शिवस्य पादयोः निपेतुः पत्राणीत्यनुषज्यते १३ कीशमिति कीशं वानरं मर्कटो

२४ २५ २६ २७ २८ २९ ३० मदुक्तइति त्वमितिशेषः गांगुवं इदं गोलांगूलमुखम् ३१ ३२ सइति यायजूकस्य इज्याशीः

भवतो वांछितं नान्यं न सेवे श्रीकृते भवन् नयत्र सेवा युवयोः तत्र जन्म निरर्थकम् २४ प्रसीद करुणासिन्धो
दयाभवतु ते मयि इति शोचंतमाश्वास्य प्राह तं वृषभध्वजः २५ शृणु खेदं च मा कार्षीः यदादिष्टं तदाचर
अज्ञानादर्चनं भुक्त्यै मुक्त्यै विज्ञानपूर्वकम् २६ वेदागमसहस्रेषु निर्णीतं वेदवित्तमैः एकबिल्वदलाचीयाः प्रदोषे
मम यत्फलम् २७ रहस्यं तत्प्रवक्ष्यामि शृणु तत्फलभागसि विरक्तो मां प्रदोषेज्ञः पूजयित्वा विमुच्यते २८ अं
ज्ञानात्काकतालीयामत्पूजा राज्यभोगदा ततस्त्वमेत्य जन्मैकं भुंक्ष्व भोगान्सुरेप्सितान् २९ मद्विज्ञानादमु-
ष्यान्ते मत्पदं प्राप्स्यसि ध्रुवं आवयोर्दर्शनं तत्र भविता सख्यतो हरेः ३० मदुक्तो न हि संतापं कर्तुमर्हसि गच्छ गाम्
इत्युक्तः स पुनः प्राह स्मरत्वे मुखमिदं मम ३१ तत्र भूयादथेशोऽपि तथेत्युक्त्वा तिरोदधे गूलांगूलमुखः सोऽभून्मु
चुकुन्दो मनोः कुले ३२ सररक्ष महीं राजा दिवं देवपतिर्यथा अजस्रं यायजूकस्य सखाभूत्तस्य वज्रभृत् ३३ एकदा
सुहृदाहूतो दैत्यानां विजयं प्रति निर्जित्य दानवान्सर्वान्स हेन्द्रेणाविशद्दिवम् ३४ अभ्युद्गतः सुरैः सर्वैः कृताशीर्गु
रुणा नृपः उपाविशन्महेन्द्रेण रत्नसिंहासनोत्तमे ३५ अर्द्धासनगतं जिष्णोरनंगसदृशाकृतिं सुरारिसैन्यबाणाग्रव्रण-
भूषितवक्षसम् ३६ जयश्रियेव रागेण नखक्षतविभूषितं उपासां चक्रिरे तत्र नाकवारांगना नृपम् ३७ जग्राह चामः

तस्य इज्याशीलो यायजूक इत्यमरः ३३ ३४ ३५ ३६ जयश्रियेति सुरारिसैन्यबाणाग्रव्रणभूषितवक्षसं अत एव जयश्रिया रागेण नख-
क्षतविभूषितमिवेत्युत्प्रेक्षा ३७ तसमप्सरसेवां वर्णयति जग्राहेत्यादिना श्लोकद्वयेन भृङ्गारं कनकपानीयपात्रं भृंगारः कनकालुके

वीणावत्याद्यास्तिलोऽप्सरसः ३९ ४० ४१ ४२ दिव्येति दिव्येनदिविभवेन आगरवेण अगरुसंबंधिनाधूपेन ४३ मुचुकुन्दइति महादे



दधतुर्नृत्यचातुर्ये उर्वशीचतिलोत्तमा वीणावतीचित्ररेखासहजन्याचतालभृत् ३९ सोपगानाश्चगन्धर्वाःमुचुकु
न्दंसिषेविरे श्लाघद्वाद्यसंगीतंनभोमध्यगतेरवौ ४० आरुह्यैरावतस्कन्धंमहेन्द्रोन्तर्गृहंययौ दधारछत्रमिन्द्राणी
मुचुकुंदेमुकुंदवत् ४१ नरेन्द्रश्चमहेन्द्रश्चस्नात्वामंदाकिनीजले पुरारिपूजासदनंजग्मतुर्मणिभूषितम् ४२ दिव्याग
रुधूपेनवासितेतत्रवज्रभृत् पुरारिपूजामारेभेभस्मरुद्राक्षभूषितः ४३ मुचुकुन्दोऽपिराजर्षिःमुरारिसमविक्रमः॥
सोमास्कन्दंमहादेवंदृष्ट्वारोमांचितोमुदा ४४ तदीयवाक्यंसस्मारतुष्टावमनसाशिवं रहस्यस्तुतिसंतुष्टःपशूनांपति
रीश्वरः ४५ अनुजग्राहतत्कर्णेभुविपूजयमामिति संभ्रांतस्तत्सपर्यायांनविवेदशचीपतिः ४६ पूजावसानेभूपालंगमि
ष्यंतंमहीतले किमभीष्टमितिप्राहगाढालिंगनमाचरन् ४७ अथपाणौगृहीत्वेन्द्रमिदमाहशचीपतिं सोमास्कन्दमिमंदे
हि सोहार्दंयदितेमयि ४८ पूजांविधातुमिच्छामिकृतार्थःप्रणयात्तव उवाचेन्द्रोऽपिभूपालंस्मयमानमुखांबुजः ४९ सखेः
सत्यंवदाम्यत्रद्रोध्यतेकिंमयातव विष्णोर्नान्यमिमंविद्धिपूजामात्रेस्यचोदितः ५० तथाप्यमुष्यपूजायांयदिवांछास्तिभूप
ते श्रीपतिंप्रार्थयित्वैनंयदिसंमनुतेहरिः ५१ अथवानास्मिदानस्यप्रभुःस्यादन्यथापिसः ऐन्द्रीमाकार्यसगिरंदध्यौह
रिमहेश्वरम् ५२ तदाज्ञप्तोऽब्जजस्तार्क्ष्येगत्वावैकुंठमच्युतम् नत्वास्तुत्वाचबहुधासोमास्कन्दमयाचत ५३ केशवे
श्वक्षणंध्यात्वानियोगात्पारमेश्वरात्॥ ददावनुमतिंभूपःपुनर्गत्वाहवज्रिणम् ५४ ॥ ७ ॥ ७ ॥

वंदृष्ट्वा इन्द्रसमीपेद्युतिशेषः ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ॥ ७ ॥

५५ ५६ कथमिति अभ्याशे समीपे त्वष्टारं देवशिल्पिनं ५७ ५८ ५९ अकल्पितमिति मामार्चयेति आदराद्विरुक्तिः ६० ६१ अकल्पि
तमहेशानं अकृत्रिमं सोमास्कंदमित्यर्थः कलिः कलहः ६२ ६३ ६४ ६५ आन्नसइति प्रत्यतिष्ठिपत् प्रतिष्ठापितवान् पराः कलाः देवशि

लब्ध्वानुत्तोऽस्मिन्निस्मोऽस्त्वंजिष्णोर्देहि महेश्वरं अस्येति समयः क्षोणी यामिसौ हार्दमेधताम् ५५ श्रुत्वा नृपः
गिरं शक्रश्चिंतामापत्तदंतरे इमं दास्यामि शून्यानि यास्यंति दिवसानि मे ५६ कथन्नु पूर्णकामः स्यान्मुचुकु
न्दश्च भूपतिः आलोच्य धीमानभ्याशे शक्रः त्वष्टारमत्यगात् ५७ न जानीयाद्यथा राजा प्रतिबिंबोऽस्य क
ल्प्यतां निर्माय विश्वकर्मापि ददौ बिंबं शचीपतेः ५८ प्रदाय कल्पितं बिम्बं प्रयाहीत्यभ्यभाषत आदौ चा
दायतमपि सख्यायं प्राह भूपतिः ५९ अकल्पितपरं देहि मामार्चयमामिति पुनःपुनः कल्पितानि षड्बिम्बा
नि ददौ हरिः ६० स तानि प्रतिगृह्याथ चिकीर्षेन् सप्तमं पुनः यंचनामुं चरत्रारे साक्षात्त्रेरयतीश्वरः ६१ अक
ल्पितमहेशानं देहि नो चेद्भवेत् कलिः अथानुनीय भूपालं सोमास्कन्दं महेश्वरम् ६२ रत्नसिंहासनारूढं ददौ राजे शची
पतिः बर्हिछत्रं च शंखं च जयंतीपुष्पमेव च ६३ कल्हारमालां कर्पूरलेपनं नियमात्कुरु इत्यादिश्य महीपालं प्रेषया
मास तं प्रति ६४ प्रदक्षिणीकृत्य भुवं मुचुकुंदोऽपि कृष्णधीः सर्वोन्नते शिवस्येष्टे सक्षेत्रे कमलालये ६५ आन्नसो वनिरस्ता
थै महेशं प्रत्यतिष्ठिपत् स्थानेषुण्ढुसु परितः प्रतिष्ठाप्यपराः कलाः ६६ नित्यं संपूजयन् कीर्तिं विमलां प्राप्य शाश्वतीं अन्वग्र
हीत्सुराविष्णुर्योमहेन्द्रमनंतरम् ६७ मुचुकुंदं ततो यश्च प्रसीदतु समे प्रभुः ६८ कर्पूरलेपाय कलाधराय कल्हारमालांचितकं

ल्पिनिर्मिताः ६६ नित्यमिति पुरा यः शिवः विष्णुं अन्वग्रहीत् अनंतरं महेंद्रं ६७ मुचुकुन्दमिति ततः यश्च मुचुकुन्दं अन्वग्रहीत् सः

वरदानमाह इतीति ममसखेव कुबेरइव अधिवर्द्धस्वेत्याशीः ७० अनुग्रहानन्तरंशिवप्रेरणयासुन्दरस्यविवाहंवर्णयति इतीति ७१ इति श्रीमानवल्युपनामकनृसिंहविरचितायांस्कन्दोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांएकादशोऽध्यायः ११॥ ॥छ॥ अथ विवाहानंतरंसुन्दरस्यकृत्यंमुनीन्अगस्त्योब्रवीति त्यागेश्वरेति त्यागेश्वरस्यप्रियसखंदृष्टमित्रंसुन्दरं नायकंप्राप्यकन्याआनन्दं जगामेत्यन्वयः १सुंदरंप्रतिशिववचनमाह वरेति अमुक्तोद्वाहवेषः अपरित्यक्तविवाहालंकारः २ किमिति कौबेरंकुबेरसंबन्धिनं

इतिसुंदरसूक्तिसुधामुदितःतरुणेंदुकलाभरणोभगवान् परिकंपितमौलिरुवाचभवाननुकंपितएधिसखेव मम ७० इत्याशिष्यमहेशानःविवाहंप्रतिचोदितः सुन्दरोन्वभवत्तस्याःपाणिग्रहणमङ्गलम् ७१ इतिश्रीस्कं दोपपुराणेएकादशोऽध्यायः ११॥ ॥छ॥ श्रीअगस्त्यउवाच त्यागेश्वरप्रियसखंसुंदरंप्राप्यनायकं धन्यावेदः निधेःकन्याजगामानन्दमुत्तमम् १ वरवेषधरंदेवंप्रणमन्तंसुहृत्तमं अमुक्तोद्वाहवेषोमांभजेत्याहमहेश्वरः २ किमन्यद्भुवनेभाग्यंसुन्दरःशांकरःसखा वंदारुवर्गकौबेरंवंदीचक्रेसुवेषभृत् ३ उमावक्षोजसंक्रान्तकर्पूरालेपगंधिना हरोरसासमाश्लिष्टंस्वंमेनेसुंदरोगुहम् ४ त्यागेश्वरसकल्हारकर्पूरामोदवासितं त्यागेशभावनावन्तः प्रणेमुःसुन्दरंजनाः ५ श्रीमुनयऊचुः कथंसुन्दरदूतोऽभूत्त्यागेशःपरमेश्वरः एतदाचक्ष्वचरितंकृपयाकुंभसंभव ६

वन्दारुवर्गंअभिवादुकसमुदायं वन्दारुःअभिवादुके इत्यमरः शरिवंघोपरुःसुंदरः वन्दीचक्रे अवन्दिनः वन्दिनश्चकारेत्यन्वयः वं दिनःस्तुतिपाठका इत्यमरः ३ उमेति सुन्दरः हरस्यउरसावक्षसासमाश्लिष्टं स्वमात्मानंगुहं षण्मुखंमेनेजानातिस्मतत्तुल्यत्वादि तिभावः ४ ५ सुन्दरःशांकरः सखेत्युक्तं तत्रजातसंशयाः मुनयः पृच्छन्ति कथमिति ६ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

पुरा पार्वतीसख्यौ दृष्ट्वा सुन्दरस्य मनश्चांचल्यं तस्य युक्तशापादिकं च वर्णितं तयोरेका सुन्दरेण विवाहिता सम्प्रति द्वितीयासंबन्ध माह द्वितीयेति सागरिका तन्नाम्नी गणिकान्वया वेश्यावंश्या ७ तामेव वर्णयति सामुद्रिकेत्यादिना ८ ९ १० ११ १२ ॥

द्वितीया सुन्दरासक्ता या गौरीपरिचारिका सैव सागरिका जज्ञे त्यागेश गणिकान्वया ७ सामुद्रिकोक्तनिःशेषल क्षणोत्तमलक्षिता अव्याजसुन्दरी बाल्यं विद्याभिस्सा व्यनाह्यत ८ परिज्ञाताखिललिपिः नृत्यगीतविशारदा सर्वातिशायिनी लोके चित्रनिर्माणकर्मणि ९ जगदानन्दसन्दोहघनीभाववदुदितः देहस्तदीयो लोकानां नेत्रानन्दकरोऽभवत् १० यौवनारंभयोगेन श्रियं सा भूयसीं दधौ यथा वसन्तयोगेन माधवी पुष्पशालिनी ११ शारदी चन्द्ररेखेव विद्युद्वल्लीव वार्षिकी भूयिष्ठशोभना तन्वी मणिरुक्तेजितो यथा १२ सा वसन्ती गृहे मातुः नक स्यापि दृशः पथि चन्द्रलेखेव सुमुखी निलीना मेघमंडले १३ सा कदाचन सुश्रोणी निद्राणा निशि सुन्दरं स्वप्ने दृष्ट्वा समुत्थाय न निद्रामगमत्पुनः १४ मनसाराधयामास सुन्दराकारमद्भुतं प्रभातायां रजन्यां तु शयनागारमेत्य सा १५ रत्नभित्तौ विलिख्यैनं यथादृष्टममोदत तन्माता चित्रमालोक्य ज्ञात्वापि न बहिर्व्यधात् १६ अथ कालेन कियता वि ख्यातो भुवनत्रये त्यागेशस्य प्रववृते सुमहान्फाल्गुनोत्सवः १७ नानादेशजनानां च समवायो महानभूत् रुद्रपादेष्व सास्ता तु मायया कमलालयम् १८ त्यागेशं तं वरं देहीत्युक्त्वास सत्यो शुभानना जनसंघे सुमहति संचरन्स च सुन्दरः १९

१३ सम्प्रति तस्याः सुन्दरसमागमसूचकं स्वप्नमाह सेति १४ १५ स्वप्नदर्शनमुक्त्वा चित्रदर्शनमाह रत्नभित्ताविति ज्ञात्वापि बहिः न व्यधात् न प्रकाशयामास अन्यथा अनेककामुकविरोधः स्यादिति भावः १६ अथेति दर्शनानन्तरं फाल्गुनोत्सवः कामोत्सवः १७ नाने

देशोद्भवास्त्यागेशतीर्थे १८ सर्वाति त्वैव सुन्दरस्य समागम नं वर्णयति १८ ॥

स्नात्वेति अष्टभिस्तांवर्णयति आपादंपादपर्यंतं परभागेणगुणोत्कर्षेण अभिव्यक्ताकुन्तलमञ्जरीयस्यास्तांद्रूपादिद्वितीयान्त वि शेषणानांनवमस्थेनसागरिकामिति द्वितीयान्तेनान्वयः २० २१ २२ २३ नानेति संव्यानंउत्तरीयं २४ २५ २६ २७ २८ स

स्नात्वोत्थितांसागरिकामपश्यत्तिमितेक्षणः आपादपरभागाभिव्यक्तकुंतलमंजरीम् २० निश्वासामोदसंमोद मानमत्तमधुव्रतां व्याघ्रहुंकारवित्रस्तमृगार्भकविलोचनाम् २१ कपोलादर्शसंक्रांतवलन्माणिक्यकुंडलां अ लकांतरसंसक्तनखकिंशुकधोरणीम् २२ मनोभवमहाराजेकुर्वाणांतोरणस्रजं अलिकासक्तकस्तूरीलेखोज्व लमुखांबुजाम् २३ नानाभरणरत्नश्रीपरिष्वक्तगलस्थलां सूक्ष्मसंव्याननिर्मोकदृश्योन्नतपयोधराम् २४ महाहंसौ मसंवीतामापादगलमस्तकं विभ्राणामभ्रगलितामिवसौदामिनीलताम् २५ लावण्यामृतनिष्यन्दशीकराननमौ क्तिकां मीनकेतनकल्पद्रुनवोद्यत्पल्लवाधराम् २६ पादारविंदवाचालमणिमंजीरमंडितां मंदमंदपदन्यासकला जितमरालिकाम् २७ निर्मितांरतिकोदेवलक्ष्म्याःप्रतिकृतिंयथा मान्मथींमोहनकलामूरीकृततनूमिव २८ सतां सागरिकांदृष्ट्वाविलक्षहृदयोभवत् पुरारिनेत्रनिर्दग्धस्मरस्तत्सुंदरींयथा २९ तांचापयष्टिमादायजिगायकिलसुन्दरं स्तब्धस्यतामुदीक्ष्याथसर्वाश्चेन्द्रियवृत्तयः ३० लोचनद्वयमार्गेणनिपततिस्मतन्मुखे सापिदृष्ट्वासमालोक्यसोयमित्ये वजानती ३१ कटाक्षोत्पलमालाभिःक्षणमानर्चसुंदरं तदीयेचैतदीयेचलोचनेमिलितेपथि ३२ ॥ ७ ॥

इति विलक्षं विस्मयान्वितंहृदयंयस्यस्थितः २९ तामिति तांसागरिकामेवचापयष्टिमादायसुन्दरंजिगायेत्यन्वयः अथानंतरंतामु दीक्ष्यस्तब्धस्यस्तंभाख्यसात्विकभावंप्राप्तस्यतस्यसर्वाःइंद्रियवृत्तयःलोचनद्वयमार्गेणतन्मुखेनिपततिस्मेत्युत्तरेणान्वयः ३०

अन्योन्यमिति अथानन्तरं वेश्मगृहं प्रति प्रयातायां सत्यां ३३ ३४ सुन्दरस्य विस्मयं वर्णयति तद्रूपमिति द्वाभ्यां ३५ ३६ ३७ पंचभिः अरतिं वर्णयति जपतइति ३८ ३९ ४० ४१ ४२ ध्यानेति जागरावस्थायां निशि निर्निद्रमासीनं सुन्दरं त्यागेशः प्राहेत्यन्वयः तदेवाह सखेइति

अन्योन्यं गाढमाश्लिष्य परान्निर्वृतिमापतुः अथ तस्यां प्रयातायां प्रति वेश्म स सुन्दरः ३३ अन्वगाद्वागृहद्वारमन ङ्गपरतंत्रया गृहीत्वा तत्परिजनांस्तदीयन्नाम कीर्त्तयन् ३४ तद्रूपमनुसौंदर्य्यमेकांते मीलितेक्षणः अहो केश्य महो सुभ्रूविभ्रमापांगवीक्षणम् ३५ अहो मंदस्मितमहो वदनसरसो धरः अहो तस्यास्तनद्वंद्वमहो मंदतरा कृ तिः ३६ इति चिन्तयतस्तन्वीं चेतस्तादूप्यभागभूत् हित्वा पंचाक्षरीं विद्यां तन्नामचतुरक्षरम् ३७ जपतो भून्मन स्तस्य कामोन्मादेनमेदुरं उद्यानाद्भिन्नमोलापः कर्णयोः कालकूटवत् ३८ फणिफूत्कारवत्तस्य बभूवमलयानिलः मौलीन्दुदर्शनभयान्नत्यागेशमसेवत ३९ नास्तोषीद्विमनादेवं मुचुकुंदवरप्रदं विषास्वादद्वाहाराः भस्मनेवसितं वपुः ४० उन्मत्तशेखरीभूत्वास्थानेशंभोरगात्सखा ४१ चंद्रातपो रात्रिषु चंद्रमुक्तश्चंडातपो पम्यमसुष्य भेजे प्रसूनशय्यां तरसंनिवेशोप्यंगारराशावज निप्रवेशः ४२ ध्यानमौनपरिम्लानमानसं मदनांतकः निशि निर्निद्रमासीनं त्यागेशः प्राह सुन्दरं सखे सुन्दर किं दैन्यमुपयासि स्थिते मयि ४३ नास्तोषीर्मां यथापूर्वं म्लानं च वदनं कुतः किमिति त्वं न निद्रासि नाश्नासि नचभाषसे ४४ किं ते व्याधिसमुत्थानं यथावद्वद सुंदर शोचंतं सुहृदं सुक्कास्यातुं नो सहते सुखम् ४५ उत्तिष्ठ ब्रूहि शोकस्य कार णं शमयामि ते सुन्दरउ० आधिर्मदीयो मम दुर्निवारस्त्वयाविना तस्य न शांति कर्त्ता अनंगरोगाद्वमांसखायं विषक्तमंत्वां भिषजांभृश

४३ ४४ ४५ उत्तिष्ठेति त्यागेशप्रश्नं श्रुत्वा सुन्दरो वक्ति आधिरिति त्वां विषजां मध्ये भिषक्स्मम् अतिशयेनवे वृणोमि प्रथमो दैव्यो

४८ ४९ ५० ५१ संप्रति दौत्यं प्रार्थयते दूतइति दौत्यस्य प्रत्युपकारमाह नवीनेति ५२ उपायान्तरैर्दुर्निवाराकामपीडेत्याह तत्वेति ५३ सागेशः किमकरोत्तत्राह प्रतिज्ञायेति सागरिकालयं यथा विष्यनेनान्वयः ५४ ५५ ५६ ५७ यातीति दौत्यं दूतकर्म तत्करोतीति त



अनंगज्वरदूनोस्मितंत्कृते व्यसनं महत् यदि तस्याः परिष्वंगो लभ्यते सकृदेव मे ४८ त्यागेश्वर भवत्पूजाफलमेतन्न संशयः ४९ त्वद्रूपचिंतां परिहृत्य तावत्तद्रूपचिंतातरलं मनो मे त्वन्नाममांगल्यमपास्य दूरे तन्नामपारायणसादरोस्मि ५० दीनस्य काम दून स्य त्यागेश्वर दयानिधे देहि संजीवनीं मे तां सर्वाधिव्याधिशांतये ५१ दूतस्त्वमेव गत्वा तां यद्यानयसि शंकर नवीन पद्मसाहस्रमर्पयामि स्तव प्रिय ५२ तत्वोपदेशसाहस्रैस्तस्यामाशा न वार्यते उपेक्षसे यदि स्वामिन् पश्यतस्ते त्यजाम्यसून् ५३ श्रीत्याग स्त्यग इत्युक्त्वा प्रणतं पादे सुंदरं भक्तवत्सलः ५३ प्रतिज्ञाय तदे तस्मै दूतरूपमवीभरत् अथार्धरात्रे सर्वेषु निद्राणेषु शरीरिषु ५४ सुंदरस्य विनिद्रस्य सागेशस्तापशांतये एकः सर्वगुहावासी ययौ सागरिकालयम् ५५ यांतं सुंदरदूतं तं कर्पूरालेपधूसरं वीक्ष्य विश्वाधिकं देवं विस्मयं ते स्म खेचराः ५६ तस्य पादाब्जविन्यासपरिपूतानि वीथिषु रजांसि शिरसा धृत्वा सिद्धा बंधमुचोऽभवन् ५७ याति सागरिकावासं त्यागेशे दौत्यकारिणि जय सुंदरदूतेति काहली व्योम्न्यजृंभत ५८ अनुरक्तासुंदरस्य स्वं गच्छंतं दूतरूपिणं व्यजिज्ञपन् परिजना देव्यै दिव्यविभूतये ५९ मणिसौधाग्रमध्यास्ता कमलालयनायिका गवाक्षेण विलोकेशं गौरीमदस्मितं दधौ दधौ च मनसा देवी तद्रूपं तस्य भूषणम् ६० भस्मास्थिमालानृकरोटिपात्रश्मशानचर्याजरदुक्षभाजः स स्मुः कृते दौत्यमिदं पशूनां पत्युर्विनोदो न हि दूषणाय ६१ अथातीत्य महावीथीं महादेवो दयानिधिः ययौ सागरिका

च्छीलः तस्मिन्त्यागेशे सागरिकावासं यातिसति हे सुंदरदूत जय इति व्योमनि काहली नाद्यविशेषः अजृंभत ५८ ५९ मणीति बहूप

दी संदः ६० भस्मेति भस्मादिभूषितस्य विकृतवेषस्येत्यर्थः पशूनांपत्युः शिवस्य सख्युः कृते सुंदरस्य निमित्तं इदं दौत्यकरणं हि यस्मात् का
रणात् विनोदः अतो न दूषणाय किन्तु भूषणायेत्यर्थः ६१ अथेति शुभवितर्दिकं भद्रवेदिकं ६२ ज्ञातमिति गणिकागृहस्य शिलाद्वारस्य
अधोदारुपशुपतेः तत्पादांबुजं यत्स्पर्शयत् वराहरूपिणा मुरारिणा न ज्ञातम् किंच नासाद्वारोपरिस्थितं दारुशिरः पस्पर्शयत्
विधिरूपेण हंसेन मृग्यं मार्गितुं योग्यं निशि सुंदरदौत्यभाज इति पशुपतेर्विशेषणं पुरा खलु शिवरात्रौ परस्परं लोकेशाभिमानि

ज्ञातं वराहवपुषा न मुरारिणा यत्पादांबुजं पशुपतेर्गणिकागृहस्य पस्पर्श तत्खलु शिलाविधिहंसमृग्यं नासाशिरोपि नि
शि सुंदरदौत्यभाजः ६३ अथार्चकतनुर्भूत्वा त्यागेशः सर्वसूक्ष्मभाक् उद्घाटयाररं रात्रौ रम्यं कान्त्रेत्यभाषत ६४ अथाईरा
त्रे गंभीरां गिरमाकर्ण्य शंकिता तत्र सागरिका मात्रा विनिद्रा साईमायया ६५ बाले सागरिके पश्याद्भुतं पश्यामि कः पुमा
न् निशीथे समहह द्वारमेत्य साहूयति साहसी ६६ इति मातार्गलेन्यस्तपाणिस्तस्थौ विशंकिता प्राह सागरिका तत्र ज
ननीं सुंदराशया ६७ मातः कर्पूरकल्हारजवंतीपुष्पवासना बहिराकर्षती तूर्णं कोयं द्वारि विलोक्यताम् ६८ पूर्वेद्युः
कश्चनेत्येवं अर्द्धोक्ते विरामे च उद्घाटयाररमिति ध्वनिरासीद्बहिः पुनः ६९ त्यागेश्वरो वतु सुते कुलदैवतं नः तां प्रत्य
सावुपगतो न नु तर्कयामि आहूत एति गणिकागृहमर्द्धरात्रे बालापि साहसमिदं कथमातनोषि ७० ॥ ७ ॥

नौ विधिविष्णोः तत्त्वप्रदर्शनाय सप्तलोकपरिमितं लिंगशरीरं धृत्वा निजचरणमस्तकदर्शनाय परमशिवः तावादिदेश तौ च अनेक
कालमन्विष्य अदृष्टचरणमस्तकौ शिवं तुष्टुवतुः इति स्कंदपुराणकथात्रानुसंधेया अधस्तात् दारुणि शिलानासादारूपरिस्थितमित्यमरः
६३ अथेति अररं अर्गलं ६४ ६५ सागरिकां प्रति तन्मातुर्वचनमाह बालेति ६६ इतीति सुन्दराशया सुंदरागमनाशया ६७ ६८ ६९

बालेन्द्विति बालेन्दुरेव मौक्तिकं तं जुषतीति तादृशस्य तव परतंत्रतायुक्ता अयं सुन्दरः एतु आगच्छतु त्वां नृपसन्निधिं आनयामि इत्युक्त्वा गृहमुखारंभे दत्तगृहागैलोह्लादिनी सा माता विहितार्चकवेशं ईशं ददर्शेत्यन्वयः ७१ इति श्रीमानवल्लुपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां द्वादशोऽध्यायः १२॥ ॥ ७ ॥ संप्रति निजभक्तस्य सुन्दरस्य कामसौख्यानुभ

बालेन्दुमौक्तिकजुषः परतंत्रता ते युक्तायमेतु नृपसंनिधिमानयामि उक्तेति सा गृहमुखारंभे दत्तं माता ददर्श विहितार्चकवेषमीशम् ७१ इति श्रीस्कंदोपपुराणे भक्तविलासे द्वादशोऽध्यायः १२॥ ॥ ॥ श्रीअगस्त्य उ॰ मत्वार्चकं दृष्ट्वा हृतदा सागरिका प्रसूः इहतत्किंगुरूणामप्युचितं मद्गृहागमम् १ धन्यास्म्यनुगृहीतास्मि दृशीचेयमिहास्यतां निशीथे तादृशो वेश्यासदनं चेन्महान्व्रजेत् २ अपवादपरो लोको मूढः किं किं न वक्ष्यति अनुग्राह्या वयं ब्रूहि किमागमनकारणम् ३ इति तस्यां ब्रुवाणायां स्मयमानमुखांबुजः मायार्चकवपुः प्राह भगवान्परमेश्वरः ४ शृणु सागरिकामातः शृणोतु च सुता तव श्रेयसे यशसे भूत्यै पुत्र्यास्ते वचनं मम ५ त्यागेश्वरसुहृत्कश्चिदस्तीह खलु सुंदरः स तु सागरिकां दृष्ट्वा तामप्यसंगजमूर्छितः ६ दूतं तस्यागतं विद्धि सांप्रतं सदृहं प्रति ऐश्वर्यममितं तस्य वयो नवमनुत्तमम् ७ रूपं च विद्या प्रथिता यया सौ सुहृदीश्वरः आवयोरिव ते पुत्र्याः प्रणयोऽस्याप्यखंडितः ८ भूयादनर्घ्यं कौशेयमतः संप्रति गृह्यतां इत्यु

वपूर्वकं मोक्षप्राप्तिं वर्णयितुं दूतरूपस्य त्यागेशस्य सागरिकामात्रा सह संल्लापं उपक्रमते मत्वेति १ धन्येति वृशी कुशासनं व्रतिनामासनं वृशीत्यमरः २ ३ ४ तां लोभयति शृण्विति ५ अथ यदुक्तं तदाह त्यागेश्वरसुहृदिति अंगजः कामः ६ ७ रूपमिति यया विद्यया ८ भूयादिति अनर्घ्यं अमौल्यं कौशेयं पट्टवस्त्रम् ९ ॥ ७ ॥ ७ ॥ ७ ॥

१० सागरिकाभिप्रायमाह ममेति ११ १२ १३ १४ भगवानिति द्विजोत्तमाः इतिसंबोधनं अनयोःसागरिकामात्रोः १५ १६ प्राहे
ति नागरिकान्नगरवासिनः स्वप्नप्रत्येकंप्राहत्यागेश्वरः तत्रहेतुगर्भविशेषणं दिव्यशक्तिमानिति १७ १८ १९ नागरिकाणांविस्म

मातापुत्रीमुवाचेदंतथैवक्रियतामिति व्याजलज्जावतीसातुप्राहसागरिकागुरुम् १० ममत्यागेश्वरादिष्टोवरोभवतिसंम
तःसाक्षाद्यथामेसभवेत्तदानींहितृणेवरम् ११ तदाकार्योर्चकःप्राहत्यागेशस्यापिसंमतं इदमेवसुहृत्तस्ययतोसौसुंदरः
कविः १२ तथासागरिकेकार्य्यमावयोर्यत्तदंतिके पुनःसागरिकाप्राहस्वामिनःसंमतंयदि १३ सएवसाक्षाद्दत्तुतथा
कर्त्तास्यनंतरं इतितस्यांब्रुवाणायांस्वीयंरूपमदर्शयत् १४ भगवाननयोस्तत्रत्यागराजोद्विजोत्तमाः तेप्रणम्यपदांभो
जेवृषभारूढमीश्वरम् १५ प्रार्थयामासतुर्मुक्तिंदेहांतेस्त्विितिसोब्रवीत् संगमःश्वोस्तुयुवयोइत्युक्त्वाथतिरोदधे १६ प्रा
हनागरिकान्स्वप्नेप्रत्येकंदिव्यशक्तिमान् त्यागेश्वरःसागरिकांसुहृद्राघटयेदिति १७ सुंदरंचसमासाद्यसंगमःश्वोभविष्य
ति इत्युक्त्वातत्क्षणेस्नेहाद्गाढमाश्लिष्यसुंदरम् १८ सखेतदृतिकालेमांमाविस्मरयथासुखं विहरेतितमादिश्यधामस्वंप्र
त्यपद्यत १९ अथापरेद्युःसर्वेपिनागरामिलिताजनाः परस्परानुरूपेणस्वप्नालोकेनविस्मिताः २० प्रसूषेसागरिकयासुं
दरंसमचोदयन् योजितःसागरिकयानागरैरथसुंदरः २१ स्वर्लोकदुर्लभान्भोगानन्वभूदिहदेववत् सुंदरालिंगना
लापशयनासनभाग्यभाक् प्रापसागरिकानंदंश्रितावल्लीवकल्पकम् २२ मणिविद्रुमसोपानस्वर्णस्तंभविभूषिते मू
र्छितागरुधूपौघपुष्पंधयसमाकुले २३ प्रासादेनिवसन्नित्यंप्रेयसींतामरीरमत् मंदरोन्मथितांभोधिपयःफेनोत्करप्रभाः २४

यमाह अथेति २० २१ स्वर्लोकेति सुन्दरस्य आलिङ्गनादिभाक्सागरिकाकल्पकंकल्पवृक्षंश्रितावल्लीवआनंदंप्रापेत्यन्वयः २२भो

२५ सोगेशेति तस्य सुन्दरस्य धिषणा बुद्धिः सैव लतेति रूपकं २६ २७ २८ २९ त्वेषइति षट्पदी॥ मनोहरतमोऽतिशयेन मनोहरः तथा तेनैव वेषेण ननु स्नानादिकं विना देवतासंस्पर्शे दोषः स्यादित्याशंक्य शिवभक्तमात्रस्य दोषो न भवति किमुत मित्रस्येति परिहरति नेति अकर्म विरुद्धकर्म मम दासस्य बंधाय न सुहृदः किमु ३० अदृष्टवशतः कामव्यापारप्रवणस्य तस्य शिवप्रसादात् शिवविस्मरणं क



यत्र शय्याः सुखस्पर्शाः प्रवालकुसुमास्तराः केवेः सागरिकाश्लेषक्रीडासौख्यामृतोर्मयः २५ त्यागेशवंदिनस्तस्य पुष्पुर्धिषणालतां दिने दिने सागरिकानखदंतक्षतांचितम् २६ उष्टायो षसिगच्छंतमर्धेऽश्रष्टानुलेपनं कपोलगर्भसंशोभितांबूलकवलोज्वलम् २७ सुंदरं सुहृदं दृष्ट्वा त्यागेशः प्रीतिमानभूत् अथैकदाकृतस्नानं कृतान्हिकमुपागतम् २८ संनिधौ स्तोतुकामं तमुवाच त्यागनायकः प्रातः सागरिकासौधादुत्थितस्य सखे तव २९ वेषो मनोहरतमः तथा नित्यं भजस्व मां नाकर्म मम दासस्य बंधाय सुहृदः किमु इत्यादिष्टो भगवता तथा सेवत सुंदरः॥३०॥ हासावलोकनविलासदृढोपगूढक्रीडासुखानुभवकोटिषु कोमलांग्याः न व्यस्मरत्सुहृदमाततमंमहेशं त्यागेश्वरं सगिरिशस्तुति सुंदरोक्तिः ३१ आकृतान्हिकमासीनं सुंदरं वीक्ष्य चालये अस्पृश्यं गणिकासक्तं धूर्तं केचिद्बभाषिरे ३२ केचिदीशप्रसादाढ्यं त्यागेशं मेनिरे जनाः सुंदरस्तु सुहृच्छं भो निन्दास्तुत्योः समो भवत् ३३ न तस्य गणिकाभोगो दोषाय स्मरतः शिवं यथा गंगाप्रवाहस्य कर्दमक्षोणिसंगमः ३४ अथैकदा समायान्तं प्रातः सागरिकालयात् करे गृहीत्वा पप्रच्छ त्यागेशः सुंदरं

दापि नाभूदित्याह हासेति ३१ तथाविधं सुंदरं दृष्ट्वा केषांचि न्निन्दां वर्णयति आकृतेति ३२ अन्येषां स्तुतिमाह केचिदिति निंदास्तुतिभ्यां सुंदरस्य विकाराभावमाह सुंदरस्त्विति ३३ एवं कामव्यापारेपि सदाशिवस्मरणात् पापलेशोपि नाभूदित्याह नेति दृष्टांतयति य

३६ ३७ ३८ सुंदरस्य शिवैकताननतां वर्णयितुं तदुत्तरमाह मोदेति इष्टवस्तुदर्शनजन्य आनन्दो मोदः तल्लाभजन्यः प्रमोदः तद्भोगजन्यः आनन्दः एतेषां मध्ये अहं न किंञ्चिद्वेद्मि साक्षिरूपत्वात् त्वमेव जानासीति भावः तत्र दृष्टांतमाह भोक्तुरिति शयनमध्यस्थस्य भोक्तुः सुखं शयनं यथा न जानाति तथा पंचकोशांतस्थितस्य साक्षिणस्तव सुखमहं न जानामीत्यर्थः ३९ सर्वेति सर्वेषां इंद्रियाणां प्रेरयिता

सखे सुन्दर पृच्छामि किंचित्सत्यं समुदीर्यतां सुखं सागरिकासंगे यादृशं तन्निवेद्यताम् ३६ यच्च कुम्भस्तनस्पर्शे गाढाश्लेषे च यत्सुखं यच्चाधरामृतस्वादे यच्च गोष्ठीषु सुभ्रुवः ३७ सौहार्दादेव पृच्छामि प्रश्नो नैवं विधोन्यतः यथानुभूतं तत्सर्वं मे तन्मे वक्तुमर्हसि ३८ श्रीसुन्दर उ० मोदप्रमोदानंदानां न किंचिद्वेद्मि शंकर भोक्तुः सुखं न जानाति शयनप्रच्छदांशुकम् ३९ सर्वेंद्रियप्रेरयिता सर्वलोकगुहाशयः कर्त्ता भोक्ता त्वमेवैतज्जानास्यखिलतत्ववित् ५० नास्मि कर्त्ता न भोक्ता च प्रेरणीयस्त्वयास्म्यहं यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपि वा ५१ नामरूपात्मकं वस्तु त्वन्मयं सकलं खलु इत्युक्त्वा त्यागराजस्य प्रणिपत्य पदाम्बुजे ५२ तस्थौ ससुंदरस्तूष्णीं पार्श्वे भृत्यो यथा प्रभोः तदाज्ञया द्विजानस्तु त्वातिल्लकावनवासिनः ५३ तैश्च संपूजितस्तेषां बभूवाग्रेसरः सुधीः तस्य चित्तपरीपाकमवलोक्य महेश्वरः ५४ ददौ वेदांतविज्ञानं यत्रैतद्वीचिवज्जले स्वपादाब्जोरकस्यातं सुन्दरं ज्ञानदीक्षया ५५ कृतार्थयति देवेशे तत्रासन् सनकादयः प्रणम्य संशयच्छेदं प्रार्थयंस्त्वथ तेष्वपि ५६ ॥ ७ ॥

अंतर्यामिरूपेण प्रेरकः गुहाशयः दहराकाशवर्त्ती कर्त्ता विज्ञानमयः भोक्ता आनन्दमयश्च ५० नेति प्रेरणीयः प्रेष्यः ५१ ५२ तिल्लकावनं तन्नामकं अरण्यं तत्रस्थान् द्विजान् तदाज्ञया शिवाज्ञया ५३ ५४ ददाविति वेदान्तविज्ञानं ब्रह्मज्ञानं यत्र एतत् दृश्यं जगत् जले वीचिवत् तरंगइव उत्पद्यते विलीयते चेत्यर्थः ५५ ५६ ॥

सुन्दरस्यनिश्चलभक्त्याप्रसन्नःशिवःसनकादिसहितायतस्मैतत्वमस्यादिमहावाक्यंउपदिशति निष्क्रियमित्यादिना निष्क्रियंक्रियार रहितंकूटस्थमित्यर्थःनिर्मलंपापरहितम् निरवद्यंकामादिदोषरहितं निरंजनंनिर्लेपं असंगोह्ययमात्मेतिश्रुतेः ४७ परिपूर्णमिति अखंडं अहंप्रत्ययिप्रत्यग्ज्योतिःसर्वसाक्षिचैतन्यंयदस्तितत्जगतः अभिन्ननिमित्तोपादानं मायाविद्योपाधिभेदेनेत्यर्थः त्वं मलिनसत्वप्रधानोविद्योपाधिकः जीवोसिनान्यदित्यर्थः ध्रुवंनिश्चयः सदेवसौम्येदमग्र आसीदितिश्रुत्यर्थमुपदिशति प्रागिति ४८

शृणुवत्समुनिश्रेष्ठश्रीमानसुंदरंप्राहशंकरः श्रीमहेश्वरउवाच निष्क्रियंनिर्मलंशांतंनिरवद्यंनिरंजनम् ४७ परिपूर्ण महंप्रत्यग्ज्योतिस्तत्वमसिध्रुवं प्रागासमेकएवाहमस्मिनान्यदसच्चसत् ४८ निलीनेष्वथसर्वेषुयोवशिष्टोहम स्मिसः अंगुष्ठमात्रंपुरुषंगुहाशयमनामयम् ४९ प्रत्यङ्मुखेनध्यायंतिमनसामांमुनीश्वराः मनोमत्प्रेषितंभूतपत त्यसुगणोमया ५० चोदितोंतश्चरत्यत्रचित्रंच्छिद्रघटाम्बुवत् रूपंयेनेक्षतेचक्षुःयेनशब्दग्रहश्रुतेः ५१ स्वादुवि द्रसनायेनसोस्मिसर्वेंद्रियांतरः मयिज्योतिषिसूर्याद्यानुभांतेनेत्रदीपवत् ५२ अनुयांतिकृतःसर्वेराजानमनुसैन्य वत् भूतंजातंमयिमृषासिंधौवारिविकारवत् ५३ भिदांभश्चंद्रवन्मिथ्याद्रष्टुःस्वप्नेशरीरवत् जायमानेषुभूतेषुलीयमा

निलीनेष्विति सर्वेषुनिलीनेषुसुषुप्तिसमाध्योरसत्वेनबाधितेषुयःसाक्षीसर्वबाधाधिष्ठानतयाअवशिष्टःसोहमस्मिजगद्बाधे कसाक्षिणस्तस्यबाधोनास्तीत्यर्थः वैश्वानरविद्यामुपदिशति अङ्गुष्ठमात्रमिति ४९ प्रत्यगिति मुनीश्वराःमननशीलाः मांप्रत्यङ्मु खेनअन्तर्मुखवृत्याध्यायन्ति समाधौसाक्षात्कुर्वंतीत्यर्थः असुगणः इन्द्रियसमुदायः ५० चोदितइति अत्रशरीरेयेनप्रत्यगात्मः

नारूपंनीलपीतादिकं चक्षुरिन्द्रियंईक्षते पश्यति येनचक्षुतैः श्रोत्रेंद्रियस्य शब्दज्ञानंभवतीतिशेषः ५१ स्वादिति येनरसनास्वादुवि
त् इदमस्वादुनोप्युपलक्षणं सर्वेन्द्रियान्तरःसर्वान्तर्यामीसोहमस्मीत्यर्थः नतत्रसूर्योभातीतिश्रुत्यर्थमुपदिशति मयीति ५२ ५३
निद्रेति अभ्रश्चन्द्रवत् जलप्रतिविम्बितचंद्रइवदृष्टुःपुरुषस्यस्वप्नेशरीरवत् भिदाभेदःमिथ्याअसत्वेसतिभासमानत्वादित्यर्थः
मायामात्रभिदंद्वैतमद्वैतंपरमार्थतइत्युक्तेः ५४ नेति मेघोदयान्ततः मेघोदयनाशाभ्यां वियतःगगनस्ययथाविकारोनास्ति तथामे

नमेविकारोवियतोयथामेघोदयांततः आब्रह्मस्तंबपर्यंतंयस्तज्ज्ञानमनंतरम् ५५ तदस्यहमितिज्ञात्वापशुःपाशाद्वि
मुच्यते द्वौसखायौखगौ वृक्षंपरिष्वज्यस्थिताविमम् ५६ पिप्पलाशीतयोरन्यस्त्वन्योनश्नन्प्रकाशते कर्मानंदाइमे
सिंधोःशीकराइवतेमयि ५७ ज्ञात्वेतिमुक्तसंकल्पोदेहीनावर्ततेपुनः आन्वीक्षिक्यादयोविद्यानमद्विज्ञानहेतवः
५८ नमामुपनिषद्दीपःप्रकाशयतितद्विदः भक्त्यैवोपनिषद्वेद्यंचिरेणमदनुग्रहात् ५९ ज्ञात्वामामंजसाकश्चि
च्छोकंतरतिदुस्तरं यथोर्णनाभिःसृजतिग्रसतेचतथेश्वरः ६० सृजत्यवत्यत्तिजगदितिज्ञात्वाविमुच्यते मामेवस
र्वभूतानांहृदिस्थंपरमेश्वरम् ६१ तरंतिशरणंप्राप्यकृतार्थाःसर्वसाक्षिणं इतिवेदांतजंज्ञानंदत्तंसुंदरतेमया ६२

असंगस्यआत्मनःजगदुत्पत्तिलयाभ्यामितिभावः प्रज्ञानंब्रह्मेतिमहावाक्यार्थमुपदिशति आब्रह्मेति ५५ तदिति पशुर्जीवः द्वौसुपर्णो
वितिश्रुत्यर्थमुपदिशति द्वाविति खगाविवखगौ द्रुमंवृक्षंशरीराख्यंपरिष्वज्य आलिङ्ग्य द्वौजीवेश्वरौस्थिताविन्यर्थः ५६ पिप्पलाशीति
तयोर्जीवेशयोरन्योजीवःपिप्पलंविषयसुखं अश्नाति तच्छीलःअन्यः ततोभिन्नःईश्वरः अनश्नन् भोगमकुर्वन् प्रकाशतेसाक्षिरूपेणे
त्यर्थः कर्मानन्दाःकर्मजन्यसुखविशेषाः ५७ ज्ञात्वेति आन्वीक्षिकीतर्कविद्याआदिपदेनसांख्यादयोगृह्यंतेताःभेदप्रधानत्वात्त्रा

लज्ञानकारणानि न भवन्तीत्यर्थः ५८ नेति उपनिषद्देवदीपः भक्त्यैवेति कारणान्तरनिषेधोक्तिः ५९ ज्ञात्वेति तरति शोकमात्मविदिति श्रुतेः ऊ
र्णनाभिः कोशकारकीटविशेषः ६० सृजतीति सर्वभूतानां हृदिस्थं ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति स्मृतेः ६१ तरन्तीति उपसंह
रति इतीति ६२ ६३ ६४ मदिति ब्राह्मी ब्रह्मसंबंधिनी सर्वं मद्रूपं सर्वं खल्विदं ब्रह्मेति श्रुतेः विज्ञाय ज्ञात्वा निन्दाः पामरलोककृताः न

विरक्त एतद्विज्ञाय मुच्यते कर्मबंधनैः श्रद्धया परया भक्त्या तपसा गुर्वनुग्रहात् ६३ संछिन्नसंशयो धन्यः
कश्चिदेव विमुच्यते तस्मात्सुंदर मामेव शरणं प्राप्तवानसि ६४ मत्प्रसादात्त्वया विद्या ब्राह्मी लब्धा सुखी भव वि
ज्ञाय सर्वं मद्रूपं न निंदाश्च स्मरिष्यसि ६५ त्यक्तं यथाहि निर्मोकं न च नैः स्मरते पुनः इमां मे चिन्मयीं मुद्रां ध्या
त्वाजन्मांतवान्भव हि ६६ इत्युक्त्वा दर्शयन्मुद्रां त्यागेशः स्वस्य चिन्मयीं संछिन्नसंशयाः सर्वे सनकाद्याश्च सुंद
रः ६७ सहस्रकृत्वस्त्यागेशं प्रणेमुः पूर्णमानसाः अथाज्ञया भगवता तेजग्मुस्सनकादयः भावयंतो ज्ञानमुद्रां निसं
त्यागेशदर्शिताम् ६८ दीर्घोपचारं परमेशकृत्यं क्षमापयन्स्तोत्रशतेन सुंदरः विमुक्तसंगो विषयेषु निर्वृतिं प
रामवाप स्मरभित्प्रसादतः ६९ श्री अगस्त्य उ॰ चरितं सुंदरस्यैतत्शृण्वंति च पठंति ये तेषां शिवप्रसादेन मु
क्तिः स्यान्नात्र संशयः ७० इति श्रीस्कंदोपपुराणे त्रयोदशोऽध्यायः १३ ॥ ❀ ॥ ॐ ॥ ❀ ॥

स्मरिष्यसि ६५ तत्र दृष्टान्तमाह त्यक्तमिति निर्मोकं त्वचं स्वोपदिष्टवेदान्तज्ञानदार्ढ्याय ज्ञानमुद्रां दर्शयति इमामिति जन्मांतवान् जननम
रणवान् ६६ ६७ सहस्रेति सहस्रकृत्वः सहस्रवारान् ६८ ६९ शृण्वतां मुनीनामगस्त्यः एतदध्यायश्रवणपठनफलमाह चरितमिति ७०
इति श्रीमानवल्लुपनामकनृसिंहविरचितायां स्कंन्दोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां सुन्दरस्य ज्ञानोपदेशवर्णनं नाम त्रयो
दशोऽध्यायः ॥ ७

अथनीलकंठोपाख्यानमारभ्यते तत्रअस्यग्रन्थस्यभक्तिप्राधान्यात् वर्णाश्रमहीनानामनधिकारिणामपि भक्तिवशान्महादेवः मुक्तिं द
दातीतिदर्शयितुंकुलालस्यनीलकंठस्यचरितंवर्णयन्अगस्त्यः मुनीनांभक्तिदार्ढ्यायशिवमष्टभिःप्रथमंस्तौति नदैवतमित्यादिना १ स्वेति
शिवस्यैवकालभयमोक्षणे शक्तिरितिमार्कण्डेयोपाख्यानेस्पष्टं तस्यकालस्य २ प्रारब्धेति प्रारब्धकर्मणांभोगादेवक्षयइतिनियमेनत
धीन सुखदुःखानां अतएवभूत्वा भूत्वाविनश्यतां अनादिसंसारप्रवाहपतितानामित्यर्थः देहिनां शरीरिणांएकः अद्वितीयःएकोरु-

अथकुलालकुलोद्भवस्यश्रीनीलकंठस्यचरित्रारंभः श्रीअगस्त्यउ॰ नदैवतंमहादेवादपरंसुलभार्चनं वृथापरिश्रमोलोकः
सेवतेदैवतांतरम् १ स्वकालभयमोक्षायशक्तिर्नान्यस्यकस्यचित् भीतःकालाज्जनस्तस्यसेवयाकिंकरिष्यति २ प्रार
ब्धाधीनभोगानांभूत्वाभूत्वाविनश्यतां उपास्योदेहिनामेकोभगवान्कालशासनः ३ फलंतुसुमहत्तस्यभजनेह्यपुनर्भवः
सुकरंचास्यभजनंमूढःक्लिश्यतिसंसृतौ ४ अनन्ययाहरोभक्त्याप्रसीदतिदयानिधिः प्रसादादस्यमुक्तिश्चनज्ञानान्नापिक
र्मणः ५ अधिकारिविशेषेपिज्ञानंकर्मप्रवर्त्तते सर्वेधिकारिणोभक्तेरितिशास्त्रेषुनिर्णयः ६ ॥ ७ ॥ ७ ॥

द्रोनद्वितीयोवतस्थेइतिश्रुतेः भगवान् उत्पत्तिंचविपत्तिंचभूतानामागतिंगतिं वेत्तिविद्यामविद्यांचसवाच्योभगवानित्युक्तलक्षणः का
लशासनःमृत्युंजयएवउपास्योनान्यइत्यर्थः ३ कुतइत्याह फलंत्विति अपुनर्भवोविदेहमुक्तिः ननुतद्भजनमेवदुष्करमित्याशंक्य
परिहरति सुकरमिति मूढःसौकर्यानभिज्ञः ४ अनन्ययेति मुक्तेर्भक्त्यैकसाध्यत्वमाह नज्ञानादिति ५ ननुऋतेज्ञानान्नमुक्तिःउभा
भ्यामेवपक्षाभ्यांयथाखेपक्षिणांगतिः तथैवज्ञानकर्मभ्यामित्यादिनाज्ञानकर्मणोःसाक्षात्परंपरयामुक्तिसाधनत्वश्रवणात् न
ज्ञानान्नापिकर्मण इत्यसंगतं इत्याशंक्यतयोःअधिकारिविशेषपरत्वात्भक्तेश्चसर्वोपयोगितयाभक्तिरेवप्रबलंसाधनमितिदर्श

यति अधिकारीति अर्थीसमर्थोविद्वान् शान्तोदान्तइत्यादिना विद्वत्तादिगुणविशिष्टः शान्त्यादिगुणविशिष्टश्च कर्मणिज्ञानेचाधिकारीभक्तौतुसर्वेधिकारिणः चाण्डालोस्तुसतुद्विजोस्तुगुरुरित्येषामनीषाममेति भगवत्पादोक्तेः किंचभक्तिरसिकाः मुक्तिमपिनेच्छन्तीत्यत्रनपरिलषन्तिकेचिदपवर्गमपीतिभागवतादिकंप्रमाणंद्रष्टव्यं ६ भक्तिमार्गस्यसौलभ्यं दर्शयति भक्त्येति ७ साध

भक्त्याकेवलयाजंतोःपत्रपुष्पफलादिभिः प्रसीदत्यर्चितःशंभुर्नविद्यासत्कुलादिभिः ७ विनायोगेनसांख्येनतपसोत्तमजन्मना कर्मणाविद्ययाचापिभक्त्यामुक्तास्सहस्रशः ८ अत्रैवोदाहराम्येतच्चरित्रंशृणुतद्विजाः यस्यश्रवणमात्रेणप्रसीदतिमहेश्वरः ९ अस्तिभूमंडलस्यास्यमंडनंक्षेत्रमुत्तमं श्रीमच्चिदम्बरंनाम्नादर्शनान्मुक्तिदंनृणाम् १० यत्रस्वर्णसभामध्येनृत्यंदृष्ट्वापिनाकिनः बभूवतुर्मुक्तबंधौव्याघ्रपादपतंजली ११ महेशंयजतांयत्रब्राह्मणानांगृहेगृहे अग्निहोत्रोत्थितोधूमःसायंप्रातश्चपावनः १२ हविराज्यपुरोडाशपुण्यगंधमनोहरः दिग्वधूमुखकस्तूरीपत्रभंगांकुरायते १३ तत्रकश्चित्कुलालोस्तिकुंभकारकुलोत्तमः दिवित्वष्टुरिवामुष्यभुविनिर्माणकौशलम् १४ सनित्यंशिवगंगायांस्नातःशिवकथाश्रुतिः नित्यंनवभांडजातंनृतराजमुदेददौ १५ ददातिशिवभक्तेभ्योवांछितंपात्रमुत्तमं संभावयन्शिवाकारान्शिवभक्तानसेवत १६ भार्याचास्यवरासाध्वीशिवभक्त्यामहीयसी तयान्वितस्यभक्तस्यनासीद्दुष्टाकरःसुतः १७ नचानपत्यभावेनखेदस्तस्याभवत्क्वचित् श्रीमच्चिदंबराधीशेभक्त्यानंदमु

नांतरनैरपेक्ष्येण भक्त्यैवबहवस्तीर्णाइत्याह विनेति ८ आख्यायिकामाह अत्रेति ९ १० यत्रेति यत्रक्षेत्रे व्याघ्रपादपतंजलीऋषीमुक्तबंधौ बभूवतुः इयंच कथा स्कन्दपुराणेप्रसिद्धा ११ १२ १३ १४ सइति शिवगंगायां तत्रसत्तीर्थेनृतराजस्यशिवस्यमुदे हर्षा

१९ तस्य नीलकंठ इति नामप्राप्तिहेतुमाह कदाचिदिति २० २१ २२ २३ तयेति आसारो धारासंपातः २४ २५ २६ ददाविति आगरवं

शृण्वतः शिवमाहात्म्यं शिवगंगातटेऽन्वहं सकलस्य नटेशस्य बिंबे चित्तमभूद्दृढम् १९ कदाचित्स प्रसंगे दृष्टां स्मरतः शांभवीं कथां कंठनाले महेशस्य कालकूटप्रभांचिते २० रतिरासीत्तदारभ्य नीलकंठेति सर्वदा तदा सर्वैर्जनैर्नाम्ना नीलकंठः कृतो हि सः २१ तस्यैवं वसतः कालः सुमहानत्यवर्तत अथ प्रावृषि सायान्हे कदाचिद्दुंडमुत्तमम् २२ प्रदत्वा नर्त्तराजाय प्रतस्थे स्वगृहं प्रति अंतरा महती वृष्टिर्महावातसमन्विता २३ तया नज्ञायते भूमिर्द्यौर्दिशो ध्वातु किं पुनः आसारपीडितश्चायमार्द्रवस्त्रश्च खिन्नधीः २४ आसन्नवेश्यासदनद्वारभूमिं तदाश्रयो तं नीलकंठं विज्ञाय वेश्या तद्गृहवासिनी २५ नीत्वा तमंतस्सदनं वन्हिं प्रज्वाल्य सेंधनैः अनार्द्रवसनं दत्वा ताम्बूलादि समर्प्य च २६ ददावागरवालेपं शैत्यं येनोपशाम्यति अथासौ विरते वर्षे नीलकंठोऽनुमोदितः २७ वेश्यया स्वगृहं प्रापसोंगरागविभूषितः शयानो भार्यया लेपं प्रतिपृष्टः स सत्यवाक् २८ सर्वं जगाद तत्त्वेन तस्याः शंका महत्यभूत् चिराय वेश्यासक्तस्त्वं नाद्य प्रभृति मां स्पृश २९ नीलकंठोपरि ततः शापो दूरे स्थितो भव इति सा ध्व्यापि सप्रोक्तस्तदा प्रत्यश्रृणोत्क्रुधा ३० आदेहपातं नैव त्वां स्पृशामीति निशम्य तत् चकंपे सा परं साध्वी सात्वया मा स तं पुनः ३१ प्रतिज्ञां नात्यजत्सोपि तयोरिंद्रियनिग्रहात् भक्त्या नटेशः संप्रीतः प्रसादं कर्त्तुमैहत ३२ मुनिवेशमुपादाय हस्तसद्मं ययौ तमुत्थाय प्रणम्याथ नीलकंठोऽभ्यपूजयत् ३३ किं कार्यमिति पप्रच्छ दत्वासनमनुत्तमं स्मयमानो

अगरुसंबंधिनं २७ २८ २९ नीलकंठेति ततः तस्मात् नीलकंठोपरि शिवोपरि शापः शपथः यदि मां स्पृशतो स्यर्थः प्रत्यश्रृणोत् प्रतिज्ञातवती ३० ३१

३५ ३६ न्यासेति न्यासभूतं निक्षेपभूतं इदं पात्रं ३७ ३८ न्यासरक्षणे तस्य सावधानतामाह सदिति ३९ न्यासरक्षिणां उत्तमलोक



नयोगिनोमेवांछास्तिकुत्रचिदृश्यवस्तुषु तथापिकिंचिद्वाक्यंमेनीलकंठनिशम्यताम् ३५ तपसापात्रमेतन्मे-
प्राप्तमन्येनदुर्लभं यदाहंयच्चवांछामिददाम्येतद्धिमेतदा ३६ न्यासभूतमिदंरक्ष्ययावदागमनंमम इत्युक्त्वात
स्यहस्तेतस्सदायाद्भुतभाजनम् ३७ ययौमुनिःस्वैरगतिःसचतत्संररक्षह यथानकोपिजानातिपात्रमंतर्गृहेस्थि
तम् ३८ सगत्वायत्रकुत्रापिपुनरेत्यतदैक्षत देहांतःप्राणवत्तेनरक्षितंभाजनंगृहे ३९ न्यासंरक्षंतियेन्यस्य ते
षांलोकाःसनातनाः हस्तेतस्यमुनेर्न्यासंपात्रंदत्वाकृतार्थताम् ४० यास्याम्यायास्यतिकदासचेतिसमचिंत
यत् इतिचिंतापरेतस्मिन्ईशमायाप्रकल्पितम् ४१ तिरोबभूवतत्पात्रंशास्त्रमस्मरतोयथा अथागस्यमुनिःप्राह
नीलकंठेनपूजितः ४२ त्वयिविन्यस्तपात्रस्यदेशांतरचरस्यमे नकदाचिद्विचारोस्तिप्रसीदतुतवेश्वरः ४३
देहिपात्रंमदीयत्तन्मांयद्रक्षतिमातृवत् अन्नाभ्यंजनवस्त्राणिप्रदायाभीप्सितान्यहो ४४ नीलकंठोपितच्छ्रु-
त्वायत्रतत्स्थापितंगृहे नददर्शसतत्पात्रमन्विष्टमपितत्पुनः ४५ भार्यामाहक्वतत्पात्रंनैवावैमीत्यभाषत किं
मायाकिंनदुःस्वप्नउपसर्गोथभौतिकः ४६ अपवादाम्बुधेरस्मान्नीलकंठोद्धरस्वमां नोचेदिमानहंप्राणान्सोप
वादान्नधारये ४७ इतिनिश्चित्यमनसामुनेरंतिकमाययौ मुनीश्वरोपितंप्राहनीलकंठाशुदीयतम् ४८ मदीयं
पात्रमधुनाविलम्बःक्रियतेकथम् अथतंप्रणतःप्राहभीतःशोकविमूढधीः ४९ ॥ ७ ॥ ७ ॥

प्राप्तिमाह न्यासमिति ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ७ ७ ७ ॥

५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ यज्वनामिति स्वाश्रुतं स्वेनप्रतिज्ञातं ६३ ६४ ६५ ६६

इदमाकार्यस्वामिन्नपराधंक्षमस्वमे सुरक्षितंतेतत्पात्रंदुरितान्मेनदृश्यते ५० अन्यत्तस्स दृशंपात्रंददामिप्र
तिगृह्यताम् श्रीअगस्त्यउ॰ नीलकंठेब्रुवस्येवंचुकोपसमहामुनिः ५१ ततस्तसोमुनिःसर्वान्मेलयित्वेदमब्रवीत्
अहोपश्यतदौरात्म्यंकुंभकारस्यदुर्मतेः ५२ अपहृत्येष्टदंपात्रंमृत्पात्रंदातुमिच्छतः व्याघ्रस्यगोमुखस्येववच
नाचातुरीतव ५३ दृष्ट्वासिवंचितोवेषंभस्मरुद्राक्षधारिणः गांदोग्ध्रीमपहृत्यैवप्रदातुंखरमिच्छति ५४ यदिकु
स्यापितल्लोकेचरितंसंमतंभवेत् शृण्वंतिवाकथांनित्यंभस्मरुद्राक्षभूषिताः ५५ परद्रव्यापहारायपरंब्रमः
तिसाधुवत् बलादपहृतद्रव्यंकुलकोटिंध्रुवंहरेत् ५६ नीलकंठततोहंत्वांब्रवीम्याशानिवर्त्यतां अथवान्व
यकोटीभिर्निरयेपतनंध्रुवम् ५७ सहमानोदुरुक्तिंचप्रांजलिःप्रणिपत्यतं नमयापहृतपात्रंसत्यमित्याहकुंभकृ
त् ५८ नीलकंठमथप्राहसमुनिर्जनसंसदि त्वद्वाक्येमेनविश्वासोयदिसत्यंब्रवीषिच ५९ शिवगंगाभसिस्त्वा
त्वाकुलतंतोःशिरस्पृश॥ अनपराधोसिचेद्दार्याहस्तेकृत्वार्द्रवस्त्रभृत् ६० नटेशसन्निधौस्नात्वासत्यमेतदुदाहर
नष्टंचेदस्तुतत्पात्रंहृतस्त्वत्संगमादहम् ६१ प्रतिज्ञाभंगभीरुस्तन्नानुमेनेसकुंभभृत् निनायाथबलाद्योगीन
टेशपदसंनिधिम् ६२ यज्वनांसंसदंचैवव्याजहाराखिलंचतत् प्रत्ययःकार्यइत्युक्त्वासचस्वाश्रुतमभ्यधात्
६३ सत्यंनैवंविधास्येतिमुनिःप्राहाथतेऽवदन् नीलकंठमुनिःक्रूरःप्रतिज्ञायुवयोर्यदि ६४ उपायस्तत्रदृष्टोयंसद
स्ये श्रूयतामयं अपवादोन्यथावास्याज्जनात्प्राप्तवतोऽचिरम् ६५ ननटेश्वरभक्तस्यभवंतिविपदःक्वचित् मुनि

संघीभूयेति सहस्यानां जलदिव्यात्तत्त्वां वदति कोटीइति कोटी अग्रभागौ ६७ ६८ ६९ ७० अध्यायश्रवणपठनफलमाहयइति ७१ ७२ इतिश्रीमानवल्लुपनामकनरसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां नीलकंठोपाख्यानं नाम चतुर्दशोऽध्यायः॥ १४॥ ॥ ७ ॥ उत्तमनूद्य भक्तिमार्गस्य सौलभ्यं दर्शयितुं चतुर्भिः पृच्छंति चरितमिति १ द्वितीयमनुवदति तथैवेति २ ननु श्रोतव्यः

संघीभूय महांतोयदृदंतिश्रेयसे हितत् कोटीद्वे वेणुदंडस्य गृहीत्वा द्वौ युवामिह ६७ शिवगंगांभसि स्नात्वा प्रत्ययं ददतां मुनेः इतियज्वत्रिसाहस्रप्रोक्तं वाक्यं निशम्य तौ ६८ दंपती वेणुदंडस्य कोट्यालंब्य ममज्जतुः शिवगंगांभसस्तस्मादुन्मज्जंतौ युवाकृती ६९ तौ मुनिं वृषभारूढं नटेशं तमपश्यतां तयोः प्रसन्नो भगवान् दत्वा मुक्तिमभीप्सितां ७० सह ताभ्यां चिदाकाशं स्वधामप्रत्यपद्यत यः पठेदिदमध्यायं शृणुयाद्वा समाहितः ७१ नटेश्वरप्रसादेन न पुनर्जायते भुवि ७२ इतिश्रीस्कन्दोपपुराणे चतुर्दशोऽध्यायः १४॥॥ ऋषय ऊ॰ चरितं सुंदरस्योक्तं सर्वज्ञस्य महात्मनः भक्त्यावशंगतो यस्य गुरुरासीन्महेश्वरः १ तथैव नीलकंठस्य शिवकैंकर्यकारिणः आकर्णितं तच्चरितं भक्तिमान्यो नटेश्वरे २ नयेषामधिकारोस्ति वेदांतज्ञानसाधने स्वयं च कर्तुं कैंकर्यमशक्तास्त्रिपुरद्विषः ३ अथापि मुक्तिं वांछंति निकृष्टकुलसंभवाः केन प्रीतो ददात्येषां मुक्तिमीशस्तदुच्यताम् ४ अगस्त्य उ॰ अत्रेतिहासं ब्रुवतो मत्तः शृणुत भूसुराः यस्य श्रवणा

श्रुतिवाक्येभ्यः तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति इत्यादि वाक्यैर्ब्राह्मणस्यैवाधिकारो नान्येषां किंच सेवाधर्मः परमगहनः इत्यादिना शिवभक्तिरपि दुष्करा तत्कथं मुक्तिरिति शंकतेन येषामिति ३ अंगीकृत्य पुनः पृच्छति अथापीति निकृष्टकुलसंभवाः शूद्रादयः ४ तेषां उत्तरं दातुं आख्यायिकामवतारयति अत्रेति इतिहासं पुरावृत्तं ५

ज्ञानाधिकारिणामिति ब्राह्मणानामित्यर्थः अनुरूपार्चयावैदिकः ज्ञानयज्ञेनकर्मयज्ञेनचेत्यर्थः ६ निकृष्टेति स्वभक्तपूजयैवेत्येवकारेण वेदाध्ययनादिनैरपेक्ष्यंदर्शितं ७ यद्यदितिस्पष्टं ८ नन्वेवंशिवभक्तस्यपूजया केमुक्ताइत्याशंक्यबहवःसन्तीत्याह॥ बहवइति ९ तीर्थेति व्रतंउपवासादि दानंगोदानादि पूर्त्तंतडागादिखननं निगमोवेदः १० इतिहाससमुपक्रमते अस्तीति ११ वर्षेति संवत्सर

ज्ञानाधिकारिणांपुंसामपिकर्माधिकारिणां अनुरूपार्चयाशंभुःयथाप्रीणातिसर्ववित् ६ निकृष्टकुलजातानांज्ञानकर्मजडात्मनां स्वभक्तपूजयैवेशःतथाप्रीणातिदेहिनाम् ७ यद्यदिष्टतमंलोकेशिवभक्तस्ययाचतः तत्तत्प्रदायहीनोपिजात्यासद्योविमुच्यते ८ बहवःसंतिभूलोकेशिवभक्तैकपूजया विमुक्तबंधनाःसद्योमुक्ताःशंभोरनुग्रहात् ९ तीर्थाटनाध्वरतपोव्रतदानपूर्त्तसन्मंत्रतंत्रनिगमागमवर्त्मभाजां प्रीणातिसर्वजगतांपतिरिन्दुमौलिस्तद्वद्यथास्वपदभक्तजनेषुभक्त्या १० अस्तिदक्षिणदिग्भागेकावेरीतीरभूषणं नगरंधनिनांलोकेवणिजांधनवर्धनम् ११ वर्षमात्रनिवासेनयत्रक्षुद्रोपिनिर्धनः संपदंमहतींप्राप्तःस्पर्धतेधनदेनच १२ हृतेषुनवरत्नेषुवणिग्भिर्यन्निवासिभिः क्रोशतीवमहांभोधिःउदस्तोर्मिकरोन्वहम् १३ तत्रासीदूरुजःकश्चिद्धनदेनसमःश्रियाख्यातोमहाधनोरत्नपरीक्षासुविचक्षणः १४ सकृत्तस्यकरस्पृष्टंअत्यल्पंवर्द्धतेधनं तस्यार्णवचराःसर्वेनौधनाःपादसेविनः १५ बाल्येतेनोशितंद्रव्यंमहामेरुरिवापरः भार्यावसुमतीनामसर्वलक्षणसंयुता १६ तस्यासीद्बंधुकोटीभिःयस्याःपरिवृतंजगत् सत

मात्रनिवासेन धनदेनकुबेरेणसहस्पर्द्धतेजिगीषांकरोतिततोप्यधिकसंपत्भवतीत्यर्थः १२ हृतेष्विति उदस्ताउत्क्षिप्ताऊर्मयःतरङ्गाएवकरायेनसः तत्रेतिऊरुजःवैश्यः १४ सकृदिति नौधनाःनावएवधनंयेषांनौकाव्यवहारनिपुणाइत्यर्थः बाल्येतिउशितंकांक्षितंसंपादितमित्यर्थः १५ १६ १७

१८ १९ २० गृहमिति तेनपौराणिकेनआस्वउपविशेतिनिर्दिष्टः २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ यदिति देहात्मवादिनः लौ



भोगाननर्घ्याभरणालेपस्रग्वस्त्रभासुरः एवंभार्यासमेतस्यसमयःसुमहानगात् १८ व्रतचर्यापरस्यासीन्नापिवंश
करस्सुतःसदाःखिन्नधीस्तेनपरित्यक्तविभूषणः १९ वाणिज्यकल्पयित्वैकदासंतूष्णींगृहेवसत् एकदासतुकावे
र्यांप्रातःस्नात्वासहस्त्रिया २० गृहंजिगमिषुस्तीरेपौराणिकमवंदत सतेनास्वेतिनिर्दिष्टःस भार्यश्चाशृणोत्कथाम् २१
तस्माच्छिवपुराणानिपठतोब्राह्मणोत्तमात् श्रुत्वाशिवकथाःपुण्याःभक्तिस्तस्यशिवेभवत् २२ दिनेदिनेपुराणस्य
श्रवणासक्तचेतसः सभार्यस्यविरक्तस्यशांताविषयवासना २३ तौदंपतीद्विजंदृष्ट्वाशिवतत्वेषुनिष्ठितं प्रसाद्यप्राप
तुर्मंत्रंपंचाक्षरमनुत्तमम् २४ क्षेत्रवस्त्रगृहादीनितस्मैदत्वाविशुद्धधीः सदाशिवपुराणेषुसंसक्तोभून्महाधनः २५
गुरुंकदाचित्पप्रच्छविनीतोविहितांजलिः मुमुक्षोर्मेकथंमुक्तिर्भवितेशप्रसादतः २६ ज्ञानेनकर्मणावापिविहि
तेनयथाविधि उपासितोजगत्कर्त्ताप्रसीदतिमहेश्वरः २७ नतयोरधिकारोमेकथंमोक्षोभविष्यति प्रशंसंतिपु
राणानिकर्मणोज्ञानमुत्तमम् २८ इमंमेसंशयंछिंधिसर्वज्ञोसिदयानिधे इत्याकर्ण्यगुरुस्तस्यवाक्यमेतदभाषत
२९ विश्वासोयदिमेवाक्येप्रसीदतिमहेश्वरः संशयश्चेद्गुरोर्वाक्येसंशयात्माविनश्यति ३० असत्संगंपरित्यज्यसदा
सत्संगवान्भव असतांचसतांचापिशृणुवक्ष्यामिलक्षणम् ३१ यत्परिज्ञानमात्रेणमतिःसत्संगतोभवेत् देहात्मवा
दिनोवित्तगृहक्षेत्रेषुसस्पृहाः ३२ लौकिकव्यवहारेषुससक्ताःसद्विलक्षणाः एषुयेसंगतावैश्याःशोकस्तेषांदुरत्य

कापत्तिकाःपामराश्च ३२ लौकिकेति एषुपामरेषुसंगताःवैश्याःतेषां शोकःसंसाररूपोदुरत्ययःदुस्तरइत्यर्थः ३३ ॥ ७ ॥

३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ५२ ५३ भस्मेति भस्मना अङ्कितं चिन्हितं अलिकं ललाटं यस्य ललाटमलिकं गोधिरित्यमरः ४४ ४५

न ते संभाषिणीयास्ते संतो येषामसंमताः सतां च लक्षणं तावदुच्यमानं मया शृणु ३४ शिव एव जगत्कर्ता शिवे सर्वं प्रतिष्ठितम् कर्मीधकारे भ्रमतां मार्गदर्शी स भानुमान् ३५ स एव शरणं नान्यद्दैवतं धर्मसाधनं शिव गौरीपते शंभो जय चंद्रकलाधर ३६ मां कालकवलं पाहि कालशासन शंकर इति ये शिवनामानि कीर्तयंति दृढव्रताः ३७ शिवलिंगार्चनपरा भस्मरुद्राक्षधारिणः पापिनामपि मुक्तिः स्यान्नूनं तत्पादसेवया ३८ यद्यदिष्टतमं तेषां भक्तानां परमेश्वरे तद्दानाद्भवति क्षिप्रं शिवानुग्रहभाजनम् ३९ प्रीणाति न तथा क्षिप्रं कुर्वतां स्वपदार्चनं भक्तोपासनया शंभुर्येथा झटिति तुष्यति ४० कुर्वन्लोकविरुद्धानि शिवभक्तमुदे नरः शिवप्रसादात्संसारशोकं तरति दुस्तरम् ४१ निषेव्य शिवभक्ताग्रिमिष्टवस्तुसमर्पणात् ज्ञानाभ्यासप्रसादेन विना मुक्तो भविष्यसि ४२ इति स्वगुरुणा दिष्टः तं प्रणम्य तथेति सः भाग्यवान्शिवभक्तानां पादसेवां चकार ह ४३ भस्मांकितालिकं दृष्ट्वा तथा रुद्राक्षधारिणं ॥ नमस्करोति शतशः तदभीष्टं प्रयच्छति ४४ प्रददात्यविलम्बेन दुर्लभं तदभीप्सितं भस्मानुलिप्तसर्वांगो रुद्राक्षस्रगलंकृतः ४५ नित्यान्नदाता भक्तेभ्यस्तदुच्छिष्टाशनो भवत् पतिव्रता च तद्भार्या भर्तुरिष्टानुसारिणी ४६ अनुकूला स्वकृत्येषु गुरुवाक्येन चोदिता बांधवास्तस्य तत्कर्म मिलिता नानुमेनिरे ४७ निपेतुः प्रतिषेधं च सतेषां नाशृणोद्वचः उच्छिष्टभोजी दासोऽयं वंचितो भस्मधारिभिः ४८ करोत्यनुचितान्येव ह्योचिसारिपुरस्कृतः इतिं

४६ अनुकूलेति तस्य वैश्यस्य बांधवाः ज्ञातयः मिलिताः संगताः संतो तत्तद्दानादिकर्मणा नानुमेनिरे अनुमतिं न चक्रुः ४७ ४८ ४९ ॥ ॥

५० ५१ पंचेति ब्रह्मबंधोः अधिक्षिप्तब्राह्मणस्य ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ उपसंहरति



नकश्चिच्छिवभक्तोऽस्तिसतेनानर्चितोहियः इतीशभक्तदासस्यमहान्कालोव्यवर्त्तत ५० सर्वंब्राह्मणसात्कृत्सः
यदनेनार्जितंधनं भक्त्या दृशुषस्तस्यप्रसन्नोभूदुमापतिः ५१ पंचविंशतिवर्षस्यब्रह्मबंधोर्विधायसः वेषंमध्या
ह्नसमयेतद्गृहद्वारमाययौ ५२ भिक्षांदेहीत्युवाचोच्चैर्भस्मरेखाचितालिकः सासस्यगन्नमादायतद्भार्यानिरगाद्ब
हिः ५३ तांविलोक्यद्विजस्तस्थौतरुणींधूर्त्तशेखरः भिक्षांगृहाणेत्युक्तोपिप्रतिजग्राहनैनसः ५४ तस्याःस्तनोमु
खंचापिस्तब्धदृष्टिरवैक्षत तद्दृष्टिशंकिनीसाध्वीनाथमेहीत्युवाचसा ५५ तत्राप्यभिक्षांगृण्हीष्वेत्युवाचसमहा
धनः तमुवाचमहादेवःप्रहसन्छद्मनाविटः ५६ आगतोनान्नभिक्षार्थंलभ्यतेऽन्नंगृहेगृहे द्विजस्यवांछितंदेहि
भिक्षाम्मेभस्मधारिणः ५७ अथप्रणम्यतंवैश्योभिक्षांपप्रच्छकामितां दीयतेयदिवक्ष्यामिनोचेद्यास्येयथागत
म् ५८ सविप्रेणैवमुक्तस्तुमाविलंबोऽस्तुगृह्यतां इत्युक्त्वापादयोस्तस्यसनत्वासोत्कृतांजलिः ५९ ययाचेतरु
णींभिक्षांनिर्विशंकोद्विजोविटः अविचार्यसभार्यांचप्रददौतत्रशंभुधीः ६० प्रचोदिताचसाभर्त्राद्विजंप्रांजलिर
न्वगात् बांधवास्तस्यकुपिताःब्राह्मणंहंतुमाययुः ६१ निरोधकारिणोबन्धून्खड्गपाणिर्जघानसः स्वधर्मविद्वि
षोबन्धून्निहत्यसविलोकयन् ६२ नब्राह्मणंददर्शाथभार्यांपप्रच्छविस्मितः तयानवेद्मीत्युदितःसंस्मरन्हृदिशं
करं ६३ ददर्शवृषभारूढःसहगौर्यामहेश्वरः स्तूयमानःसुरगणैःसचान्यैश्चगणैर्वृतः ६४ गत्वासवैश्यदंपत्योर्मुक्तिं
मुनिगणोचितां पश्यतांसिद्धसंघानांसंधामप्रत्यपद्यत ६५ किंकर्मणाबहुविधेनचदुष्करेणज्ञानेनकिंबहुभुजन्मसु

किंकर्मणेति ६६ इतिश्रीमानवल्गुपनामककृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपंचदशोऽध्याः

भक्त्याप्रसीदतिपरंभगवान्महेशोतस्माद्विसृज्यसकलंभवताभुभक्ताः ६६ इतिश्रीस्कन्दोपपुराणेपंचदशोऽ
ध्यायः १५॥ ॥ ७ ॥श्रीअगस्त्यउ॰ शिवभक्तान्नपानीयप्रदानस्यान्वहंद्विजाः नतुल्यंसुकृतंलोकेशंभोःप्रीतिक
रंभवेत् १ भूषणंभूतलस्यास्तिकनिष्ठघटिकापुरं ब्राह्मणैःक्षत्रियैर्वैश्यैःस्वकर्मनिरतैस्सदा २ शूद्रैरपिद्विजा
तीनांशुश्रूषणपरायणैः संपूर्णंशिवभक्तैश्चशिवव्रतधृतादरैः ३ तत्रकश्चिदभूत्ख्यातोमारोनामपदोद्भवः शूद्रा
णांशिवभक्तांघ्रिसेवयेशःप्रसीदति ४ एवंगुरूपदेशेनस्थिरबुद्धिःसजायया सहनित्यान्नदानेनशिवभक्तानपू
जयत् ५ तस्यन्यायार्जितद्रव्यमवर्द्धतसमुद्रवत् सर्वंतद्भक्तपूजार्थंविनियोजयतिस्मसः ६ आरभ्योदयमारात्रंप्रभाः
तेचदिनेदिने ददातिशिवभक्तानामिष्टमन्नंचतुर्विधम् ७ तस्यभक्तिपरीक्षार्थंमतिंचक्रेमहेश्वरः अपुत्रस्यसभा
र्यस्यभक्तानामन्नदायिनः ८ धनजातमशेषंचतस्यसर्वेश्वराज्ञया दिनेदिनेक्षयंप्रापकृष्णपक्षेशशांकवत् ९
मारःप्रक्षीणवित्तोऽपिक्षेत्रपात्रादिविक्रयात् आगतायददावन्नंयथापूर्वमखिन्नधीः १० गृहोपकरणेष्वेवंविनष्टेष्व
न्नदानतः अवशिष्टमभूद्दार्वार्कंठमांगल्यसूत्रकम् ११ अथप्रावृषिकस्मिंश्चिद्दिवसेतमसावृते निशीथेतापसःक
श्चित्क्षुत्तृष्णापरिपीडितः १२ अन्विष्यान्विष्यशनकैःमारस्यगृहमाययौ आगत्यतद्गृहद्वारंमायातापसरूपभाक् १३

यः १५॥ ॥ ७ ॥शिवभक्तोपकारस्यसर्वोत्तमत्वंवर्णयितुंइतिहासांतरमारभमाणःप्रथमंतत्प्रशंसामाह शिवेति १ इतिहासमेवोपक्रम
तिभूषणमिति २ ३ ४ ५ ६ आरभ्येतिचतुर्विधंभक्ष्यभोज्यलेह्यचूष्यभेदेन ७ ८ धनेतिधनजातंधनसमूहंजातंधनसमूहयोरिति

१४ १५ १६।१७।१८।१९ वृथेति उपवसेद्यदि उपवासंकुर्याच्चेत् माजीवतुनिंदितंजीवत्वित्यर्थः २० २१ २२ २३ २४ लवणेति लवणान्नं



मारमाहूयभगवानिदमाहमहेश्वरः क्षुधार्तश्चापसंक्रांतोतपस्वीवचनाक्षमः १४ दूरेत्वामन्नदंश्रुत्वातवा
स्मिगृहमागतः देहिमह्यंक्षुधार्तायग्रासायसदनंनिशि १५ अन्नमन्नप्रदश्चासिपितामातातपस्विनां इति
तद्वाक्यमाकर्ण्यनिर्गतस्सहभार्यया १६ प्रणम्यप्रांजलिःपाद्यमासनंचप्रदायसः विषण्णहृदयोमारः भार्यांन
नमुदैक्षत १७ इतिनिश्वस्यचोवाचमंदंमंदंकुटुंबिनीं एहिसाध्विनिशीथेसौ संप्राप्तस्तापसोमहान् १८ क्षु
धितोन्नंप्रयच्छेत्युक्तियाचतेद्रूयतेमनः नोपायमिहपश्यामियेनास्यक्षुत्प्रशाम्यति १९ वृथाजन्ममयेदंस्याद्य
द्येहोपवसेदयं माजीवत्वधनःकश्चिन्मादृशोदुर्लभोभुवि २० यस्यमेगृहमासाद्यासक्षुत्तिष्ठतितापसः गृहिणो
शरणंभर्तुरिच्छुतःपरमांगतिम् २१ भार्यानुकूलानप्रायोयेनतस्यवनंगतिः अनुकूलाचसाध्वीचममत्वंदयिता
ननु २२ चिरंत्वदानुकूल्येनभक्तानामन्नदोस्म्यहं आपदोस्यास्त्वमेवात्रमामुद्धरपतिव्रते २३ इतिभर्तुर्वचःश्रु
त्वानाथंभार्याजगादतं नकंचिदत्रपश्यामिनाथोपायंगृहेतव २४ लवणान्नंहिसोम्यास्तिदिवसेत्ववशेषितं अ
ध्याप्याहवसत्वेषोहृष्टोपायस्यहेप्रभो २५ पूर्वेद्युरुप्तंकेदारेबीजजातमदूरतः अस्माकमस्तिमादैन्यंभजेतादृनि
भुज्यताम् २६ आनीयतांतद्भवतातदन्नंक्रियतेमया उप्ताःपल्लवितामुद्गाःसंतित्वत्सदनांगणे २७ नकिंचिन्न्यून
मत्रास्तिमहादेवप्रसादतः इतिभार्यावचःश्रुत्वाहृष्टःप्रोवाचतापसम् २८ मारोहमत्रशेषान्नंस्वामिन्कुंडितिपच्य
ते दिष्ट्यानिशीथेप्राप्तोसिकृतार्थोस्मीतिदर्शनात् ॥ १९ ॥

लवणरूपमन्नं २५ पूर्वेद्युरिति केदारेक्षेत्रे बीजजातंबीजसमुदायः २६ आनीयतामिति उप्ताःभूनिक्षिप्ताः २७ २८ २९ ॥ ७ ॥

इतीति संविवेश निद्रांप्राप ३० ३१ सांकुराणीतिसम्मर्ज्य सम्यक्मर्ज्जनंकृत्वा आशुशीघ्रं अवहृत्यअवहननेन वितुषीकृत्य ३२ ३३ ३४ ३५ ३६ तयोःशिवप्रसादंवर्णयन्नुपसंहरति अथेति ३७ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कन्दोपपुराणव्याख्यायांभक्त- विलासप्रकाशिकायांषोडशोऽध्यायः१६॥ ॥ॐ॥ पूर्वाध्यायेशिवभक्तान्नपानादिदानेनमुक्तिर्वर्णितासंप्रति शिवभक्तापराधसहने

इतिमारोक्तिमाकर्ण्यसंविवेशसतापसः मारोपिप्राप्यकेदारंउसबीजान्युपाहरत् ३० तावद्देवचसासाध्वीनवै र्मुद्गलतादलैः अवशिष्टैश्चलवणैःशाकंस्वादुचकारह ३१ सांकुराणिचबीजानिसंभर्ज्योश्चवहन्यच संपाद्या न्नपतिंप्राहतापसोबोध्यतामिति ३२ मारोपियावत्सुमनाःतापसोद्बोधनोद्यतः आगच्छन्नपिसुस्नातोनैवेद्यंगृ ह्यतामिति ३३ ब्रुवन्प्राप्यांतिकंतस्यददर्शाद्भुतहर्षभाक् आरूढवृषभंदेवंवरदाभयमुद्रितम् ३४ वामांकरूढया गौर्यापरिष्वक्तंमहेश्वरं प्रणम्यबहुधाभीतःतस्मादशरणंययौ ३५ भार्याचास्मैप्रहृष्टात्मानैवेद्यंसमुपाहरत् ववृ र्षुःपुष्पवर्षाणिदेवाश्चमुनयोस्तुवन् ३६ अवादयन्गणाःसर्वेवाद्यानिविविधान्यपि अथप्रसन्नोभगवानंविका पतिरीश्वरः ३७ दत्वाकैवल्यमनयोःसहताभ्यांतिरोदधे इतिश्रीस्कंदोपपुराणेषोडशोऽध्यायः१६॥ ॥श्रीअग स्त्यउ० शिवभावनयाभक्तान्पूजयंतोपिनित्यशः अपराधान्सहंतेयेभस्मरुद्राक्षधारिणाम् १ प्राप्तेपिप्राणसंदेहेशिव प्रीतिमभीप्सवः शिवप्रसादपात्रंतेह्यप्रतिद्रोहकारिणः २ स्वयंकृतेपकारेपिभक्तैस्तान्पूजयंतियेप्रीणातीशोयथा

नापिमुक्तिर्भविष्यतीतिवर्णयिष्यन् द्वाभ्यांप्रतिजानीते शिवभावनयेति १ प्राप्तइति अप्रतिद्रोहकारिणःभक्तकृतापराधस्यप्रतिक्रियामकु र्वंतः २ स्वयमिति भक्तैःअपकारेकृतेपि ये स्वयंतान्पूजयंतीत्यन्वयः ३

इतिहासं प्रवर्त्तयति अत्रेति ४ चेदिदेशे सत्यार्थो नाम प्रसिद्धः राजाभूदित्यर्थः ५ ६ ७ तस्येति मुक्तिनाथो नाम राजा प्रातिवेश्यः प्रतिवेशिभवः शत्रुः अभवत् तेन सह अस्य सत्यार्थस्य रणः युद्धमभवत् ८ ९ १० समयमिति छिद्रं दोषस्थानं विलोकयंति ११ तापसाका

॥ ९६॥

अत्रेतिहासं प्रथितमाकर्णयत भूसुराः यस्य श्रवणमात्रेण भक्तिः शंभौ भवेद्दृढा ४ चेदिदेशे पुरं किंचिदस्ति गो
चैरधिष्ठितं सत्यार्थो नाम राजाभूत्त्रिषु लोकेषु विश्रुतः ५ स एकः शिवभक्तानां नित्यमिष्टं प्रयच्छति याचितः शिव
भक्तानां स प्राणांश्च प्रयच्छति ६ स मंडलपतिर्दृष्ट्वा दूरे भक्तान्नमस्यति निरोधः शिवभक्तेषु नास्ति तद्द्वारिकस्य
चित् ७ तस्यैव वर्त्तमानस्य मुक्तिनाथो महीपतिः प्रातिवेश्यो भवच्छत्रुः तेनास्य चरणो भवत् ८ तं विनिर्जित्य समरे
सत्यार्थो रिपुमोजसा बलं धनं पुरं चास्य सर्वं जग्राह पार्थिवः ९ मुक्तिनाथः स तेनैव निरस्तो दुर्बलो रणे दुद्राव त्यक्त
सर्वस्वः क्वचिद्दीनो वनांतरे १० समयं गमयामास शत्रोः छिद्रं विलोकयन् चिरायोपायमासाद्य निश्चित्यैनमिति स्व
यम् ११ तापसाकारमापन्नो भूतिरुद्राक्षपुस्तकः सत्यार्थसदनद्वारं ययौ भस्मानुलेपनः १२ तदा शेते स्म नृपतिः आखे
टायासनिद्रया छन्नस्तापसवेषेण रिपुं चांतर्निरैक्षत १३ निद्राणे नृपतौ कार्यं किं तवांतर्बहिर्मेव द्वास्थैरिति निरुद्धो
ऽपि तानतापस्तापसः १४ रहस्यागमतत्त्वार्थमुपदेष्टुं महीपतेः गच्छामीति हठात्क्लाश्यागृहमरियो १५ आ
गतं पुस्तकधरं समुन्नतजटाधरं समीक्ष्य तापसं राज्ञी भर्त्तारं समबोधयत् १६ स च प्रबुद्धः सत्यार्थः छन्नवेषेण वैरिणं

रमिति सदनद्वारं गृहद्वारं ययाविस्यन्वयः १२ तदेति आखेटो मृगया तत्संबंधी यः आयासः खेदः तेन या निद्रा तया अन्तः गृहमध्ये १३ १४
रहस्येति रहस्यभूतः आगमानां शास्त्राणां यस्तत्त्वार्थः तं उपदेष्टुमित्यर्थः १५ १६ स इति स राजा वेषेण तापसवेषेण छन्नं गुप्तं १७

१८ १९ २० प्राणेष्विति मदीयेषु प्राणेष्वपि त्वदीया प्रभुतास्त्वस्तीति शेषः २१ २२ २३ इदमिति गौर्यै पार्वत्यै ईशेन वर्णितं २४ तस्यामिति कपाटेन सुखं द्वारं आवृणोत् आच्छादयामास किंच तस्मै राज्ञे भस्म प्रसादरूपं दत्वा त्वं नमन्नो भव इत्याह २५ तथेति क्रोडे भुजां

उवाच प्रांजलिश्चैव उपवेश्योन्नतासने धन्योस्म्यनुगृहीतोस्मि त्वत्पादाम्बुजदर्शनात् १८ परिपूतमिदं वेश्म गुरूणां पादरेणुभिः भवतां सेवया चित्तमिदमद्य प्रसीदति १९ किंकरोस्मि विधेयं किं नियुंक्ष्वानुगृहाण मां धनादिष्वपि मे स्वामिन् प्रभुता हि न केवलम् २० प्राणेष्वपि मदीयेषु त्वदीया सत्यमीर्यते इति ब्रुवाणे नृपतौ गृहीतविनयांजलौ २१ जगाद तापसच्छन्नः स्मयमानमुखोऽथ तं शृणु राजेंद्र मे वाक्यं भक्तानां प्रवरो ह्यसि २२ शिवतत्वरहस्यार्थान् हं बोधयितुं तव प्राप्तोहं त्वां त्वमेवैकः शृणु सत्सार्थ पार्थिव २३ इदं च शास्त्रं कैलासे गौर्या ईशेन वर्णितं इत्याकर्ण्य नृपः पत्नीं बहिर्गच्छेत्यभाषत २४ तस्यां बहिर्गतायां च कपाटेनावृणोन्मुखं भस्म दत्वा गतस्तस्मै त्वं नमेत्याह तापसः २५ तथेत्युत्थाय तत्पादे प्रणमंतं महीपतिं निगूढेनासिना क्रोडे जघान स तु मर्मणि २६ खड्गप्रहाराभिहतो मुमोह धरणीपतिः आहतोस्मीति चुक्रोश द्वास्थैः क्रुद्धैभ्यगाद्द्रुतम् २७ भित्वा कपाटं वेगेन गृहीत्वा तापसं करे हंतुं तेनैव खड्गेन जटासु च परामृशत् २८ क्षणादुन्मील्य सत्वार्थो तदा हास्थं समाहूयत् शापितोसि मम प्राणैः मोचयारिमितीरयन् २९ संघीभूताश्च बहवः तत्र क्रुद्धाश्च तद्भटाः संहर्तुमभवन् राज्ञा निरुद्धा रुषिता अपि ३० राजा सोढ्वा प्रहारं तं मा भैषीरित्यभाषत वेषाच्छन्नं वेपमानं श्रुत्वा केचिन्नृपाज्ञया ३१ ॥७॥

न्तरे नाना क्रोडो भुजान्तरमित्यमरः निगूढेन गोपितेन असिना खड्गेन मर्मणि जघानेत्यर्थः २६ खड्गेति आः इति पीडायां हतोस्मीति चुक्रोश २७ २८ क्षणादिति मम प्राणैः शापितोसि अरिं मोचय इति ईरयन् वदन् २९ ३० राजेति तं प्रहारं सोढ्वा सहनं कृत्वा त्वं मा भैषीः इति वेपमानं त प्रसभा

विषयेति विषयान्तम् देशान्तं कृतागसं कृतापराधं तं नयंतिस्म ३२ कृतेति भस्माङ्कितालिकः भूतिचिन्हितभालः ३३ ३४ दध्याविति नटे
शंशिवं ३५ एतदृष्टांन्तेन विशेषभूतेन सामान्यतः लोकानां भक्तापराधसहनं मुक्तिसाधनमुपदिशति भक्तैरिति ३६ इतिश्रीमानवल्युप

विषयांतं नयंतिस्म नाथ्यहं सनकृतागसं उपेक्षसे कथं शत्रुमिति पृष्टः सुहृज्जनैः ३२ कृतापराधोपिममशत्रुर्भस्मांकि
तालिकः सशंभुरेव मे स्वामी नैष वैरीत्यभाषत ३३ क्षेमं तपस्विनस्तस्य श्रुत्वा दूतमुखान्नृपः बहुमेने निजभटान् अ
र्थान्तापरिपालकान् ३४ दध्यौ न देशं मनसा सस्त्यार्थः पार्थिवोत्तमः सन्निधाय महेशोपि ददौ मुक्तिं महीपतेः ३५ भ
क्तैर्हतोपि परुषोक्तिभिरर्दितोपि संप्रापितोप्यसुषु संशयमिंदुमौलेः यः प्रीतये हितममी पुतनोति तस्मै प्रीतः प्रयच्छ
ति हरो न पुनर्भवार्तिम् ३६ इतिश्रीस्कंदोपपुराणे सप्तदशोऽध्यायः १७॥ ॥श्रीअगस्त्य उवाच सदाशिवपदां
भोजे भक्तिः परमपावनी पूर्वजन्मार्जितैः पुण्यैर्धन्यानामिह लभ्यते १ यएवदेही तरति दुस्तरं भवसागरं ॥ उ
च्छिन्नभवसंक्लेशो व्याघ्रः पंजरबंधनम् २ शिवभक्तिर्यथा मुक्तेर्मुख्यं भवति साधनं शिवभक्तांघ्रिभक्तिः
श्च तथा मोक्षैकसाधनम् ३ सपर्यां भक्तरूपेण साक्षाद्गृह्णाति शंकरः परोक्ष एव गृह्णाति लिंगादिषु समर्चि
तः ४ प्रत्यक्षेश्वररूपाणां भक्तानां पादसेवनं तत एव प्रशंसंति न परोक्षे प्रसेवनम् ५ ॥ ७ ॥ ७ ॥

नामक नृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां सप्तदशोऽध्यायः १७॥ ॥श्री॥ पुनर्भक्तिमेव दृढयन् भक्तानेव
प्रशंसति सदाशिवेति १ यइति एषदेही शरीरी दुस्तरं भवसागरं तरति तत्र दृष्टान्तः व्याघ्रः पंजरबंधनमिव स उच्छिन्नभवसंक्लेशः क्षीणसंसा
रदुःखइत्यर्थः २ शिवभक्तिरिव तद्भक्तभक्तिरपि प्राधान्येन मुक्तिहेतुरित्याह शिवेति ३ सपर्यामिति लिंगादिषु समर्चितः शंकरः परोक्ष एव अप्रत्यक्ष एव

येषामिति येषांभक्तानांदर्शनादेः संसारेशोचतांखिद्यतां सद्यःशोकोबंधः विलीयतेक्षीयते ६ ७ इतिहासमाह अत्रेति वीरमिन्द्रस्यतन्नामकस्यभक्तस्य ८ अस्तीतिचतुर्थान्वयजन्मभाक्शूद्रइत्यर्थः ९ १० ११ यद्इति शिवेशिवभक्तेचयोनरःसापराधःतस्मिन्हन्यमाने तस्मा

येषांसंदर्शनात्संगात्संल्लापात्पादसेवनात् शोचतामिहसंसारेसद्यःशोकोविलीयते ६ विनायज्ञेनतपसाविनावेदांतचिंतया मुक्ताःसहस्रंलोकेस्मिन्भक्तपादाब्जसेवया ७ अत्रैवोदाहरंतीममितिहासंपुरातनं वीरमिंद्रस्यभक्तस्यभक्तिर्यत्रोपवर्ण्यते ८ अस्तिकेरलभूभागेपुरंशोणाचलाह्वयं तत्राभूद्वीरमिंद्राख्यःचतुर्थान्वयजन्मभाक् ९ आसीदाबाल्यमेतस्यभक्तिर्भक्तेषुभूयसी नतथाभक्तिरभवन्महतीपरमेश्वरे १० तस्यैवंवर्त्तमानस्यमतिरासीन्मनोहरा बिभ्रतःपरशुंतीक्ष्णंशिक्षायैभक्तविद्विषाम् ११ यःशिवेशिवभक्तेचसापराधोनरःक्वचित् हन्यमानेनतस्मापंप्राणांस्त्यक्ष्याम्यथान्यथा १२ इतितीक्ष्णःसपरशुर्दधारव्रतमुत्तमं महापथेन्वहंतिष्ठन् भक्तानागच्छतःपथि १३ पूजयित्वाशिवधियाप्रापतेषामनुग्रहं एवंनिवसतस्तस्य वीरमिन्द्रस्यचेतसि १४ काचिद्बुद्धिरभूद्भूमौयेभक्ताश्चन्द्रशेखरे विख्यातेषुशिवस्थानेष्वासतेतेकथंमया १५ नसेव्यंतेवृथाजन्ममयातेषामदर्शनात् प्रदक्षिणीकृत्यभुवंचरित्वातत्रतत्रच १६ स्थानेनिषेव्यगौरीशंतद्भक्तानांचसेवया कृतार्थयामिजन्मेतत्संगत्यामानुषंसतां १७ इतिप्रतस्थेविषयान्भार्गवेणविनिर्मितान् अतीत्यसरितोमार्गेशैलान्देशान्वनानिच १८

पंनभवति अन्यथा अहन्यमाने अहंप्राणान्त्यक्ष्यामीत्यर्थः १२ इतीतिपरशुःपरशुनासहितः १३ १४ १५ १६ स्थानेइति सतांसंगत्या एतन्मानुषंजन्मकृतार्थयामि सफलयामीत्यर्थः १७ इतीति भार्गवेणपरशुरामेणविनिर्मितान् रचितान् विषयान्कोंकणदेशान् १८

वीरमिन्द्र इति क्षेत्रं काशीक्षेत्रं यत्र क्षेत्रे देहं त्यजतां जन्तूनां ईश्वरो विश्वेश्वरः तारकप्रदः तारकमन्त्रोपदेष्टा अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे इति जाबालश्रुतेः १९ सेवमान इति विश्वस्याधिपतिं विश्वेशं प्रभुं सेवमानः तत्रत्यान् क्षेत्रवासिनः

वीरमिंद्रोययौक्षेत्रं विख्यातं भुवनत्रये तद्यत्र देहं त्यजतामीश्वरस्तारकप्रदः १९ सेवमानोन्वहं तत्र विश्वस्याधिपतिं प्रभुं तत्रत्यानपि तद्भक्ताननयद्वत्सरत्रयम् २० ततो निर्गत्य शनकैरवाप कमलालयं तत्र दिव्यमहालीशैलालात्यागेश्वरं विभुम् २१ रत्नसिंहासनारूढं सिषेवे हृष्टमानसः अथालयांतस्तद्भक्तान् जितकामान् जितक्रुधः २२ भस्मावगुंठिततनून् रुद्राक्षस्रग्विभूषणान् पंचाक्षरीजपपरान् शतरुद्रीयजापिनः २३ शिवदीक्षासमायुक्तान् शिवव्रतपरायणान् श्रोतॄन् शिवपुराणानां शिवलिंगार्चनेरतान् २४ दृष्ट्वा द्वादशसाहस्रसंख्यातान् ब्राह्मणोत्तमान् भक्त्या रोमांचिततनुः प्रणनाम पुरस्सतान् २५ इदं विज्ञापयामास वीरमिंद्रः कृतांजलिः शुश्रूषां कर्तुकामोस्मि भवतामहमन्वहम् २६ शिवभक्तद्रुहामस्मि निग्रहे बलवत्तमः अनुजानीत मां सर्वे दासं वः शरणं गतम् २७ तथेत्यंगीकृतस्तैस्तान् सिषेवे त्यागराजवत् ईशभावनया भक्तान् भजमानस्य भूसुरान् २८ अत्यगुर्वीरमिंद्रस्य समा द्वादश तत्पुरे कृतेषु शिवभक्तानां कैंकर्येपारमेश्वरे २९ तं मिलित्वा वितेनुस्ते शिवकार्यधुरंधरं एतस्मिन्नंतरे भ्रातः कदाचन ससुंदरः ३० अपरित्यक्ततांबूलकपोलो धूर्तलक्षणः वेश्यांगरागसंसक्तसूक्ष्मवस्त्रावगुंठितः ३१॥

तद्भक्तानपि अन्वहं सेवमानो वत्सरत्रयं निनाय इत्यर्थः २० तत इति कमलालयं प्राग्वर्णितं २१ २२ २३ २४ २५ २६ २७ २८ अत्यगुरिति द्वादश समाः वर्षाणि अत्यगुः अतिक्रान्तानीत्यर्थः २९ ३० अपरित्यक्तेति धूर्तानां कितवानां लक्षणं चिन्हं यस्य सः ३१

३२ ३३ वीरमिंद इति सुन्दरआततायिनं वधोद्यतं तं वीरमिन्द्रं दृष्ट्वा ३४ प्रविश्येति अररं कपाटं मुखे द्वारे ३५ स्थित इति हे ब्रह्मबंधो ब्राह्मणाधम ब्रह्मबंधुरधिक्षिप्ते इत्यमरः ३६ विद्येति विद्यामदेन अवलिप्तोसि गर्वितोसि तंतुधारिणि उपवीतधारिणि ३७ ३८ ३९

अतीत्य गोपुरद्वारं निवेशालयमंडपे स्थितान्मिलित्वा सबहून्सेवमानान्महेश्वरम् ३२ अवमत्यान वेक्षेतान्वीरमिन्द्रेपि पश्यति गंतुमंतर्गृहं शंभोरियेष स महाकविः ३३ वीरमिंद्रः सुसंक्रुद्धः तं हंतुं परशुं दधौ आततायिनमायांतं तं दृष्ट्वा सुंदरोभिया ३४ प्रविश्यांतर्गृहे शंभोर्दृढी चक्रे ररं मुखे सखायं शरणं प्राप सुंदरस्यागनायकम् ३५ स्थितो गर्भगृहद्वारे वीरमिंद्रो जगाद तं निर्याहि ब्रह्मबंधो त्वां निहन्म्यद्य हरं द्रुहम् ३६ विद्यामदावलिप्तोसि महाद्रोहैकसाधनं तंतुधारिणि यद्यत्र त्वय्यद्यापि महेश्वरः ३७ विदधाति यदि प्रीतिं स बाह्यः क्रियते मया इत्याकर्ण्य वचस्तस्य संत्रस्तः स च सुंदरः ३८ आपदुद्धारणोपायं अंतः पप्रच्छ शंकरं स्तुहि भक्तानितीशस्य नियोगेन महाकविः ३९ भूयिष्ठभक्तिस्तान्भक्तान्तुष्टाव परया गिरा श्रीसुन्दर उवाच संसारसंक्लेशमहांधकारविध्वंसनोद्यद्दिवसाधिनाथान् श्रीकंठभक्तांघ्रिसरोजरेणून्विधाय मौलौ विपदं तरामि ४१ श्रीअगस्त्य उवाच सुंदरेण स्तुताः सर्वे भक्ताः संभूय ते मुदा वीरमिंद्रं निवार्याथ रणुते सुंदराभयम् ४२ वीरमिंद्रेन सर्वं च सुंदरस्य ययाचिरे तथेति शिवभक्तानां वचनं स चकार ह ४३ यदुक्तं शिवभक्तैस्तल्लंघने साह कदाचन त्यागेश्वरस्तस्य तथाकृतेन संतुष्टचित्तस्तुषितः पुरस्तात् वृषेंद्रमारुह्य तदो मयाविर्भूत्वा ददौ मुक्तिममुष्य धीराः ४४ इति श्रीस्कंदोपपुराणे अष्टादशोऽध्यायः १८॥

४० सुन्दरः शिवभक्तान्स्तौति संसारेति संसारक्लेश एव महान्धकारः तस्य विध्वंसने उद्यद्दिवसाधिनाथान् उद्यद्भास्कररूपान् ४१ सुन्दरेणेति

संभूयमिलित्वा ४२ ४३ ४४ इतिश्रीमानवल्लुपनामकनरसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांअष्टादशोऽध्यायः १८॥ ॥ ७ ॥ आख्यानान्तरमुपक्रमते पुराणेत्यादिना लोकविश्रुता लोकप्रसिद्धा १ २ ३ ४ ५ प्रथमेति प्रथमाश्रमिणः ब्रह्मचारिणः क



श्रीअगस्त्यउवाच पुराणसरिदाख्यातानगरीलोकविश्रुता तत्रास्त्यमरनीत्याख्योब्राह्मणःशिवभक्तिमान् १ सोभूत्तत्रपुरेशंभोःस्थानेप्रीतिकरेस्वयं निर्माय धर्मशालांच विदधे धर्ममुत्तमम् २ अन्वहंशिवभक्तानामन्नंक्षीराज्यपूरितं अभ्यंगवस्त्रममलंकौपीनंब्रह्मचारिणाम् ३ यतीनामुचिताःकंथाःसदनानिकुटुंबिनां ददातिशिवभक्तेभ्योयदभीष्टंक्षणेनतत् ४ एवंनिवसतस्तस्यद्वात्रिंशद्वत्सराययुः विधातुकामस्तद्भक्तिपरीक्षांपरमेश्वरः ५ प्रथमाश्रमिणोवेषंगृहीत्वातद्गृहंययौ कपर्दस्तच्छिखाजन्ते ललाटाग्रावलंबिनी ६ भस्मरेखाभवच्चाद्रौकलासाच्छन्नाबदोः भस्मबिंदुरभूद्भालेतार्तीयीकंविलोचनम् ७ यज्ञोपवीतमस्यासीत्प्रवाहःसौरसैंधवः आषाढदंडोजगवंधनुरस्यकरेभवत् ८ करभूषणनागोभूत्सवित्रंदक्षिणेकरे कृष्णाजिनमभूच्चर्मवैयाघ्रंमौंजिबंधनम् ९ आसीद्वासुकिरेतस्यदीर्घभोगःफणीश्वरः यदाव्रतमिदंचास्यमायाकौपीनतांदधौ १० भिक्षापात्रमभूद्ब्रह्मकपालंसर्वमाहितम् ११ समंदहासद्युतिभिर्दिगंतानुद्भासयन्निंदुरिवस्वभाभिः गृणन्नधीतानपिवेदमंत्रान्जगामवेश्माऽमरनीतिनाम्नः १२ सतद्धामरनीतिस्तत्प्रज्वलद्ब्रह्मवर्चसं मायावपुरिवप्रांचंमहाबलमदापहम् १३ ॥ ॥

पर्दःजटाजूटः ६ भस्मेति तार्तीयीकंविलोचनं तृतीयनेत्रं ७ यज्ञोपवीतमिति सौरसैन्धवःसुरसिंधुसंबंधी आषाढदंडःपालाशदंडः अजगवं पिनाकः ८ ९ आसीदिति दीर्घभोगःदीर्घकायः १० ११ १२ सइति प्रज्वलत्प्रकर्षेणदीप्यमानं ब्रह्मवर्चसं वृत्ताध्ययनसंपत्तिः १३ ॥ ७ ॥

१४ १५ १६ १७ भैक्षेति भैक्षं भिक्षासमूहः तद्रूपस्यान्नस्य भोजनं अधीयानस्य वेदाध्ययनं कुर्वतः वटोः ब्रह्मचारिणः युक्तमुचितमित्यर्थः १८
१९ २० २१ २२ इदमिति इदं कौपीनं वर्षाम्भसा वृष्टिजलेन उक्षितं सिक्तं माभूत् २३ २४ पालाशेति लतादाम्नि लतारूपे रज्जौ २५ आपादे

हर्षितस्तेजसा तस्य प्रत्युत्थाय कृतांजलिः स्वागतं ते वटो तावद्दास्यतामिह सांप्रतम् १४ त्वद्दर्शनात्कृतार्थोस्मि प्रीतिः पशुपतेर्मम आतिथ्यं कर्त्तुकामोस्मि दयादृष्ट्यावलोकय १५ स एवं वटुमभ्यर्च्य प्रार्थयामास भक्तिमान् मायावटुश्च तं प्राह स्मयमानमुखाम्बुजः १६ त्वमेवामरनीतिः किं श्रुतवानसि मे तेयशः शिवभक्तार्चनायैव त्वद्दर्जितमहो धनम् १७ भैक्षान्नभोजनं युक्तमधीयानस्य मे वटोः नाहं गृहस्थस्यैकस्य करोम्यन्नेन भोजनम् १८ दीयतामागतेभ्योन्नं भक्तेभ्यो ऽस्य र्चितो ऽमुना नैकत्र भुक्तिर्विहिता यथेच्छं ब्रह्मचारिणः १९ स्थीयते त्वद्गृहे तावद्यावद्वृष्टिः प्रशाम्यति मध्यान्हसमयो ऽत्येति वृष्टिश्चेयं प्रवर्त्तते २० इति तद्वाक्यमाकर्ण्य स भक्तस्तस्य पादयोः प्रणम्य प्रार्थयामास भुज्यतामिति तं पुनः २१ वटुश्चानुमतिं दत्वा स्नात्वाहविहिताह्निकः आगच्छामि भवद्वेश्म कौपीनं गृह्यतामिदम् २२ इदं सुरक्षणीयं मे मास्तु वर्षाम्भसोक्षितं इत्युक्त्वा प्रददौ तस्य हस्ते जग्राह सो ऽपि तत् २३ आषाढपाणिश्च वटुर्जगाम स्नातुमापगां गृहिणी त्वरयामास त्वं हरश्चार्च्यतामिति २४ पालाशदंडादवमुच्य तद्दुतं सतत्लतादाम्नि गृहान्तरस्थे निबध्य पूजां विदधे पुरारेः शिवार्चनान्ते वटुराजगाम २५ आपादकेशाग्रमसौ तदानीमासारधाराजलसिक्तगात्रं उत्कंपरोमांचजुषं ददर्श वटुं धृतस्वस्तिकमागतं च २६ शीतिकाबाधते तावत्कौपीनं तत्प्रदीय्य

ति आसारः धारासंपातः धृतः स्वस्तिकः अंसन्यस्तकरद्वयरूपो बंधनविशेषो येन तम् २६ २७ ॥ ७ ॥ ७ ॥ ७ ॥

२८ २९ ३० ३१ ३२ वामदेवेति भूभृतां पर्वतानां प्रभोः सुमेरोः उपरि अच्छोदनामके सरसि ३३ ३४ ३५ ३६ ३७ ३८ तदि



यत्र तन्निहितं तत्र न स्म पश्यति विस्मितः बहुधान्वीक्षमाणश्च न ददर्श तिरोहितम् २८ अथागत्य वटुं प्राह गृह्य
तामन्यदुत्तमं रज्जुबंधेन पश्यामि नापि कश्चिदिहागतः २९ विस्मयो मे महानत्र मायेव प्रतिभाति मे अथ क्रुद्धो वटुः
प्राह नान्यद्दद्मि किंचन ३० तदेवामरनीतं मे देह्यज्ञानादिहागमं अस्पृश्यमन्यत्कौपीनं मादृशां ब्रह्मचारिणां
३१ नेहानयसि तच्चावत्तावन्मे नास्ति भोजनं नाहंकारेण वच्मीदं श्रूयतां तस्य चागमः ३२ वामदेवोपदिष्टेन मंत्रेण मम
हृतां पुरा अच्छोदे तत्र सरसि प्रभोरुपरि भूभृतां ३३ आद्वादशाब्दमंभस्थो देवीं त्रिभुवनेश्वरीं अस्तोषं वचसा
देवी सा प्रसन्नाभवन्मम ३४ तया च करुणापांगतरंगैरनुकंपितः उक्तः शारदया देव्या जनन्या जगतामहम् ३५ उ
त्तिष्ठ विरमाया हि सर्वविद्याः स्फुरंतु ते शीतार्तोऽसि गृहाणेदं दुर्लभं योगिनामपि ३६ इत्युक्तो साद्य सव्यानं मे कौ
पीनमिदमुत्तमं ददौ सा हि दयासिंधुर्वाग्देवी वरदा मम ३७ तदहं च द्विधाकृत्य प्रतिसंध्यं धरामि च निर्णयस्सर्व
विद्यासु जातो मे तस्य धारणात् ३८ तच्चेद्विनाशितं नूनं मद्विधैश्वर्यभूर्भव वंचकः साधुवेषेण मादृशां चरसि क्षितौ
३९ किं करोमि क्व गच्छामि वाणी कोपं करिष्यति विज्ञातो राजराजेन न त्वां मुंचामि सा त्वं न प्रदास्यसि चेद्भिक्षा
भवेद्देह्यलमल्लकं ४० वटूक्तिभीतोऽमरनीतिरन्यत् पट्टाम्बरं किंचिदनर्घ्यमस्ति ॥ ❀ ॥ ❀ ॥

ति मद्विधानां मादृशानां यदैश्वर्यं कौपीनधारणभिक्षाटनादिरूपं तस्य भूः स्थानं भव ३९ किमिति राजराजेन कुबेरेण नेति त्वं न प्रदा
स्यसि चेत् कौपीनमिति शेषः भिक्षा भवेत् अल्लकं कौपीनं देहि ४० ४१

५२ ५३ ५४ ५५हृतदृति ममंमनः सीदतीवखिद्यतीव ५६ ५७ ५८ ५९ तुलितमिति यत्कौपीनंधृतेनमयापूर्वंधृतेनेत्यर्थः समंतुल्यंभ

स्पृष्टंनचान्येनदद्दामितत्तेगृहाणतुल्यंकरुणांविधेहि ४१ इत्युक्त्वान्यपतत्पादेभीतस्तदुपवासतः ४२ सचन

प्रतिजग्राहपरुषोक्तिपरोबटुः मिलिताश्चजनाःसर्वेबटोगर्वप्रभाषिरे ४३ जहसुश्चापरेतत्रपप्रच्छुःकोभ

वानिति वटुःप्राहस्मतैःपृष्टःशिवनामसमुच्चरन् ४४ नमेमातास्तिनपितानबंधुर्नोपिसोदरः नवेश्मब्रह्म

चार्यस्मिभिक्षाश्यमरनीतिना ४५ हतोस्मिसकलंनष्टंतपोमेतस्यनाशतः नोपायमन्यंपश्यामिसीदतीवम

नोमम ४६ भूयादमरनीतेतेपुण्यमायुश्चवर्धतां परिहासैरलंदेहिमदीयमलमल्लकम् ४७ तत्तुल्यमन्य

द्दातास्मी त्युक्तःप्राहपुनर्वटुः यदिसत्यमिदंवाक्यंप्रतिज्ञाजनसन्निधौ ४८ विधेहितथ्यंचेतत्तत्स्यात्तद्ध

र्मामीत्यभाषत जनाश्चयुक्तमित्यूचुःब्रह्मचारीतदावदत् ४९ तुलितंदेहिकौपीनंयद्धृतेनसमंभवेत् ध

टंचानीयतांतूर्णंजनाःपश्यंतुसाक्षिणः ५० इत्याज्ञयाधटातत्रसभक्तस्तूर्णमानयत् वटुर्दिगंबरोभूत्वानि

दधेस्वालमल्लकम् ५१ एकत्रभक्तःसंतुष्टोनूतनंनिदधेन्यतः नतदासीत्समंतत्रन्यधत्तान्यत्पुनश्चसः ५२ तदप्या

सीदसदृशमन्यदन्यत्तथापरं वासःपट्टांशुकशतंसर्वंलघुतदाभवत् जनाश्चविस्मिताःसर्वेभक्तःसोपिविसिस्मये ५३

प्रदक्षिणीकृत्यवटुंप्रणम्यतदारुरोहान्वितपुत्रदारः धटातदास्तांसदृशेधटेद्वेदिवोववर्षुःकुसुमानिदेवाः ५४ प्रसन्

नोवृषभारूढस्तदाभूत्वावटुर्हरः तस्मैप्रदायकैवल्यंकैलासशिखरंययौ ५५ इतिश्रीस्कंदोपपुराणेएकोनविंशोऽध्यायः १९ ॥ ७ ॥

वेत् धटा तुला ५० इतीति स्वालंस्वभूषणं अल्लकविशेषणमेतत् ५१ ५२ ५३ ५४ ५५ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदो

पपुराणव्याख्यायांभक्तविलासप्रकाशिकाख्यायांकौमारिकाखंडेएकोनविंशति

तमोऽध्यायः १९॥ ॥

एतावताशिवभक्तोपकारकस्यशिवभक्तापराधसहिष्णोश्चपरमगतिंप्रदर्श्यसंप्रतिशिवभक्तरक्षायै निजप्राणान्त्यजतोपिमुक्तिर्भवती त्याहरक्षायैइति १ कथांप्रवर्त्तयति अत्रेति दारकस्यतन्नामकस्य २ ३ ४ तत्रेत्यादि श्लोकद्वयमेकान्वयि शिवधर्माह्वयःतन्नामकः



अगस्त्यउ॰ रक्षायैशिवभक्तानांत्यजंतिप्राणमात्मनः एतेशिवप्रसादेनमुक्ताःस्युःकर्मबंधनैः १ अत्रवक्ष्येकथां पुण्यांश्रवणात्पापहारिणीं त्यजतस्तूलवत्प्राणान्दारकस्यमहात्मनः २ अस्तिश्रीगोस्थलंनामक्षेत्रंभुविपुरद्विषः तत्रदेवंमहेशानंदारकःसेवतेन्वहम् ३ शिवायशिवभक्तेभ्योवायेद्रुह्यंतिभूतले संहारार्थमसौतेषांद धारपरशुंकरे ४ तत्रास्तिब्राह्मणःकश्चिच्छिवधर्माह्वयःपुरे आजन्मनोव्रतंतस्यस्वहस्तापचितैःशुभैः ५ कुसुमैरर्चनंनित्यंनतस्याभंजतव्रतं त्रिकालमर्चयानस्यमहांतंदेवमीश्वरम् ६ पुष्पाहरणलक्ष्येणसमयस्सुमहानभूत् अनपायनयोनामतत्रराजामहायशाः ७ पुरंदरसमोवीर्येबभूवचतुरंगवान् सोपिभक्तेषुमहतींप्रीतिं वहतिशंकरे ८ शिवद्रोहिणमालोक्यसद्यःशिक्षांकरोतिच नित्यार्चनपरोभूत्वाभक्तानामुत्तमोभवत् ९ तस्यसेनागजःकश्चिन्महीधरइवोन्नतः बभूवमत्तोदानेनयस्यजंबालितंपुरम् १० दानगंधंसमाघ्रायद्रवंतिस्मापरेगजाः युगमानौचतद्दंतौपृथुलौगिरिभेदिनौ ११ दूरेदृष्ट्वाजनाःसर्वेभीत्याधावंतिचान्वहं आधोरणाश्चतंपश्चाद्दृग्रेतम्मदसूचकाः १२ संचरंतिमहारावास्तीक्ष्णकुंतधराःकरे राजाज्ञयादिवारात्रंरक्षंतिनगरंभटाः १३

५ ६ पुष्पेतिलक्ष्येण व्याजेन अनपायःनाशरहितःनयोनीतिर्यस्य तन्नामक नामेतिप्रसिद्धौ ७ ८ ९ तस्येति यस्यगजस्य दानेनमदेन पुरंजंबालितं कर्द्दमितं १० दानेति युगमानौ युगप्रमाणौ ११ दूरेतिआधोरणाःहास्तिपकाः १२ १३ कदाचिदिति अन्यत्रमार्गेनि

रुद्धे सति गजेनेति शेषः १४ १५ मन्द्रेति बृंहितं गर्जितं १६ १७ १८ १९ २० २१ २२ २३ २४ जघानेति निशितेन तीक्ष्णेन २५ २६ २७ स

कदाचिद्दारकः स्नातुं मध्यान्हे वापिकां ययौ दूरं निरुद्धे चान्यत्र मार्गे पार्श्वेन्यलीयत १४ सपुष्पपेटिकां विप्र द्विपं दृष्ट्वांतिकागतं उच्चैः स्वरेण चुक्रोश पाहि शंकर मामिति १५ मंद्रस्तनितगंभीरं कुर्वन् स्तनितमुच्चकैः वेगात् करेणुरागत्य तत्पुष्पपुटिकां हठात् १६ आकृष्य शतधा चक्रे पुष्पौघश्च व्यशीर्यत विशीर्णेषु प्रसूनेषु शिवधर्मसखिन्नधीः १७ आधोरणानुवाचेदं युष्माभिः किं दुरात्मभिः करेणुः प्रेरितो दुष्टः शिवार्चनविरोधकृत् १८ किं करोमि क्व गच्छामि शरणं मे न कश्चन न युष्माभिः कृतमिदं कृतं राज्ञा शिवद्रुहा १९ विलापध्वनिरित्यस्य शुश्रुवे बहुदूरतः तं श्रुत्वा दारकस्तूर्णमागतः प्राह भूसुरम् २० महात्मन्केन पुष्पाणि शिवपूजापरस्य ते विनाशितानि तं ब्रूहि पश्याद्य मम विक्रमम् २१ शिवधर्मो वदत्त्वेष्टां दुष्टस्य द्विरदस्य तां तदाकार्य करौ कर्णे कृत्वा शिव शिवेति च २२ तदा जज्वाल कोपेन हुताग्निरिव चक्षणात् प्राणत्यागे गतत्रासः सोनुप्राप्य तदा गजम् २३ निहंति स्म पदे तस्य चुक्रोधच निवृत्य सः गृण्हाति शुंडया यावत्तावदागत्य तत्सुरः २४ जघान दंतयोर्मध्ये निशितेनायुधेन सः गतासुस्तत्प्रहारेण सपपात महागजः २५ वारणस्कंधमारूढान् जिघांसून् आततायिनः दारको निजघान त्रीन् द्वौ च तस्यानुयायिनौ २६ द्विरदानुचरास्सर्वे भीत्यागत्वा नृपांतिकं साहसं दारकस्यैतद्द्विसापकमबोधयन् २७ स राजा तूर्णमागत्य निहतं वीक्ष्य च द्विपं हतं कुवलयापीडं हरिणेव भदानपि २८ दारकं शिवधर्मं च कुसुमापायदुःखितं निवार्य सोद्यमान्योधा

इति हरिणा कृष्णेन कुवलयापीडं कृष्णवधाय कंसेन प्रेषितं गजमिव द्वयं च कथा भागवते दशमे प्रसिद्धा २८ दारकमिति प्रहितांजलिः कृ

३० ३१ ३२ ३३ ३४ ३५ ३६ अहमिति तौदारकराजानौ अशरीरवाक् अनिर्दिष्टवक्तृकावाणी ३७ अनपायेति मुमूर्षसि मर्तुमिच्छसि



मदीयैर्विहितंकर्ममयैवविहितंध्रुवं सापराधोस्म्यहमितिदेवेभक्तेचशंकरे ३० प्रायश्चित्तंनपश्यामिद्रोहस्या-
स्यमृतेर्विना तस्मात्परशुनानेनभिंधिमामपिदारक ३१ परिपूतोभविष्यामिशिक्षितोभवताप्यहं इतिवाचंस
माकर्ण्यदयालौदारकेसति ३२ सतस्यहस्तात्परशुंजग्राहमरणोत्सुकः स्वयमेवगलच्छेदेप्रवृत्तंवीक्ष्यभूप
तिम् ३३ निरुध्यचमहाभक्तंदारकःखिन्नधीरभूत् अनपायनयंशंभोर्महांतंधर्मचक्षुषम् ३४ इमंभक्तमवि-
ज्ञायह्येतदीयाइमेहताः मयागिरीशभक्तानांयेनद्रव्यंविलुप्यते ३५ निष्कृतिस्तस्यमरणंनान्यथाक्कापिनिष्कृ-
तिः छिन्नकंठोभविष्यामिस्वयंपरशुनाऽमुना ३६ अहंद्रोह्यस्यहंद्रोहीमुमूर्षुःप्रागहंत्विति यदालंबितशस्त्रौ
तौतदाभूदशरीरवाक् ३७ अनपायनयप्रीतस्तवाहमधुनानृप यस्त्वंसाम्राज्यमुत्सृज्यभक्तद्रोहान्मुमूर्षसि
३८ तवास्मिदारकप्रीतःकृतंकर्मसुदुष्करं परशुंत्यजभावेनपूजयाद्यप्रभृत्यसि ३९ मुक्तश्चनिहतास्सर्वेस
मुत्तिष्ठंतुसांप्रतं इत्युक्तासहसोत्तस्थौगजःपंचभटाअपि ४० सर्वेऽपिविस्मयंजग्मुःपुष्पवृष्टिरभूद्दिवि दारकं
शिवधर्मंचप्रणम्यसमहीपतिः ४१ सख्यंताभ्यामियायाथगजारूढोगृहंययौ दारकस्त्वथपरशुर्मनसैवमहेश्व
रम् ४२ तत्रस्थःपूजयामासतदारभ्यसमात्रयं ततःशिवप्रसादेनदुर्लभेनचदेहिनाम् ४३ साक्षात्कारादवाप्तेन
कैलासपदमाप्तवान् ४४ इतिश्रीस्कंदोपपुराणेविंशतितमोऽध्यायः २०॥ ॥श्रीअगस्त्यउ॰ अन्यथाभावयंतश्च

३८ तवेति अस्मीति त्वमित्यर्थकंविभक्तिप्रतिरूपकं ३९ ४० ४१ ४२ तत्रस्थइति समात्रयं वर्षत्रयं ४३ ४४ इतिश्रीमानदत्युपनाम

कन्नृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांविंशतितमोऽध्यायः २०॥ ७॥ ॥अथशत्रावपिशैवलक्षणदर्शनेन देशत्यागेशिवप्रसादोवश्यंभवतीत्याहअन्यथेति १ २ ३ लक्षणमिति शतरुद्रीयंरुद्राध्यायः पंचार्णःशिवपंचाक्षरोमंत्रः ४ ५ अग्निहोत्रोद्भवमिति वैवस्वतोयमः ६ धृतमिति पंचपातकानिस्वर्णस्तेयादीनितेषांसंघातः समुदायएव तूलःकार्पासः तस्य

शिवभक्तेषुयःपूजांविदधातिशिवेयथा नश्यनश्यंतिपापानिवर्द्धंतेपुण्यराशयः २ शिवभक्तावमानेनशिवद्रोहोभवेन्नरः शिवभक्तप्रसादेनशिवानुग्रहभाग्भवेत् ३ लक्षणंशिवभक्तानांभस्मरुद्राक्षधारणं शतरुद्रीयपंचार्णजपादिचविशेषतः ४ भस्मधारणमेवाहुःपरमंभक्तलक्षणं ब्राह्मणस्यकुलीनस्यवेदाध्ययनवद्भवेत् ५ अग्निहोत्रोद्भवंभस्मयस्यभालेधृतंभवेत् तस्यवैवस्वतोराजादर्शनाद्दूरतोव्रजेत् ६ धृतंभस्मचयत्किंचित्पंचाक्षर्याभिमंत्रितं पंचपातकसंघाततूलदावानलोभवेत् ७ भूतप्रेतपिशाचाहिवृश्चिकादिविषापहं आयुरारोग्यसौभाग्यभोगभाग्यसमृद्धिदम् ८ भस्मैवकेवलंशुद्धं पुनर्भवविनाशनं पंचाक्षरविधानेनधृतंतन्मोक्षदंभवेत् ९ धृतभस्मानमालोक्यभक्त्याप्रणमतोहियः प्रसन्नस्तस्य [द्विजाः १२] जन्मार्त्तिंशिवएवनिरस्यति १० श्रीऋषयऊचुः भस्मधारणमात्रेणप्रसीदतिकथंशिवः महामोहजुषामेतत्कुंभयोनेवदस्वनः ११ श्रीअगस्त्यउवाच अत्रैवोदाहृतंपूर्वैःचरितंब्रह्मवादिभिः भक्तसेनादिनाथस्यशृणुतश्रद्धया

दावानलोवनाग्निःभवेत् ७ भूतेति अहयःसर्पाःभूताश्चेत्यादि वृश्चिकादयश्चेतिद्वंद्वःतेषांविषापहंविषनाशकं ८ ९ १० एवंभस्ममाहात्म्यश्रवणेनसंजातकौतूहला ऋषयःपुनःकुंभयोनिंपृच्छन्ति भस्मेति महामोहजुषां बलवदज्ञानसेविनां पापिनामित्य

र्थः शिवःकथंप्रसीदतीत्यन्वयः ११ इतिहासमारभते अत्रैवेति सेनादिनाथस्य तन्नामकस्य १२

१३ १४ दृष्ट्वेति सर्वकलासु समस्तविद्यासु दाक्ष्यं दक्षत्वं सामर्थ्यमिति यावत् १५ १६ १७ शूराद्इति अतिशूराख्यः तन्नामकः अन्यः तस्यएनादिनाथस्य ज्ञातेयवान् ज्ञातित्वाश्रयः अभूदित्यन्वयः १८ वीरेति आत्मानं वीरं मन्यते असौ वीरमानी केषांचित् दुरभिमानिना

दक्षिणापथदेशेऽस्ति नगरं शावराह्वयं कश्चिदेनादिनाथाख्यस्तत्राभूद्भक्तिमान्हरे १३ सद्यश्चैयस्य भेदेनशिवभक्तान् शिवं यथा धृतरुद्राक्षभस्मानःस्वस्य प्राणद्रुहोपि ये १४ दृष्ट्वा तान् प्रणमत्येषः तदिष्टं च प्रयच्छति तस्यैवं वर्त्तमानस्य दाक्ष्यं सर्वकलास्वपि १५ निरंकुशं विशिष्यासीच्छस्त्रेशास्त्रे महौजसः सर्वायुधविशेषाणां प्रयोगपरिमोक्षयोः १६ यथाभूदस्य सामर्थ्यं न तथान्यस्य कस्यचित् ये तत्र नगरे योधा देशांतरगताश्च ये १७ शूराविख्यातिमंतश्च तेषामासीदयं गुरुः अभूदन्योतिशूराख्यो तस्य ज्ञातेयवानिह १८ वीरमानी स केषांचिदाचार्य इति संमतः स्पर्धते च ह मे तेन गोमायुर्हरिणा यथा १९ नमत्समोयमेनादिरित्यघोषयदन्यतः चत्वरे क्रंदनं तस्य श्रुत्वापि स न कुप्यति २० गर्जितं प्रति भेकस्य न हि क्रुध्यति वारिदः शिष्याः कदाचिदेतस्य तस्य स्पर्धासहान्वहम् २१ समरायोद्यमं चक्रुस्तान्सांत्वयासन्यवारयत् असमर्थतयायोद्धुमसुध्येतन्निवारणम् २२ पुनरुक्तोपि चस्पर्द्धामतिशूरश्चकारह च क्षमेत तदपि श्रीमान्महात्मा शिवभक्तिमान् २३ अतिशूरो दिने क्वापि मुहुःप्रोत्साहितःखलैः आगत्यैनादिनाथस्य गृहद्वारं जनैर्वृतः २४ प्राह युध्यस्व शूरश्चेन्मया सार्धं न चेन्मम त्यक्त्वायुद्धपदे कृत्वा प्रणा

मित्यर्थः एतेन एनादिनाथेन स्पर्द्धते जिगीषां करोतीत्यन्वयः तत्रोपमा गोमायुर्हरिणा यथेति गोमायुर्मृगधूर्तकः इत्यमरः हरिणा सिंहेन १९ नेति चत्वरे अङ्गणे २० गर्जितमिति भेकस्य मंडूकस्य २१ २२ २३ २४ प्राहेति पदे प्रणामं कृत्वा शरणागतो भूत्वेत्यर्थः २५ ॥ ७ ॥

२६ २७ नैति बद्धकक्षौ बद्धकटिबंधौ २८ २९ ३० ३१ परिश्रान्त इति दिनयौवने मध्यान्हे इभं गजं हरिर्यथा सिंहइवेत्यर्थः ३२ ३३ ३४

इतितस्योक्तिमाकर्ण्यैकर्णयोःपरुषाक्षरां हसन्नेनादिनाथोपिप्रत्युवाचभटाग्रणीः २६ गृहाणशस्त्रंनिर्याहि बहिर्यावोरणांगणं अथैवमुक्तेसर्वेपिश्वःप्रभातेस्तुसंयुगः २७ नेदानीमतिमध्यस्थाःप्रतिषेधंव्यतन्वत अथापरेद्युरुषसिबद्धकक्षौगताबुभौ २८ रणांगणंविविशतुःशिष्यैःसहधृतायुधैःपौराःसर्वेचददृशुःसाक्षिणःसंयुगंतयोः २९ पणादितेषुतूर्येषुसिंहनादेदिविस्टशि पश्यत्सुवीरवर्येषुरणाकक्षांबबंधतुः ३० चरंतौविविधैर्मार्गैर्हतिभिःपरिभूषितौ दर्शयामासतुःशिक्षांनानाशस्त्रप्रयोगतः ३१ परिश्रांतोऽतिशूरोऽभूत्प्रस्विन्नोदिनयौवने च मेरखड्गंचविभ्रंतंजग्राहेभंयथाहरिः ३२ नजघानगृहीत्वातंदययासुभटोत्तमं तमुवाचातिशूरस्त्वांश्वोजेतास्म्यधुनात्यज ३३ तथेतितंहतप्रायंतत्याजैनादिनाथकः अतिशूरोगृहंप्राप्यचिंताक्रांतोबभूवह ३४ उदेष्यतिरविर्युद्धंभविष्यतिचतत्रमां विजित्यैनादिनाथोपिकीर्तिंप्राप्स्यतिशाश्वतीं ३५ वृथाप्रोत्साहितोमूर्खैःस्पर्धालुरधुनास्म्यहं प्रबलस्यापराधेनप्राप्तोहंप्राणसंशयम् ३६ एनादिनाथंसमरेसंपश्यामिधृतायुधं क्रुध्यंतमिवमत्तेभमनुकेसरिणंवने ३७ प्रातःकथंनिरीक्षेहंसक्रोधस्फुरिताधरं मुखमेनादिनाथस्यशार्दूलस्येवजृंभतः ३८ यदिभूयोऽपियोत्स्यामिगमिष्याम्यंतकालयं प्राक्प्रार्थितःकथंभूयःकरिष्येस्यपदानतिम् ३९ त्राणोपायंनपश्यामिप्राणानांकथमप्यहं रणेविनाप्रणामेननविमोक्ष्यतिमांरिपुः ४० अप्ययुक्ततरंमन्येममरात्रोपलायनं इतिचिंतापरस्याभूत् उपायःप्राणरक्षणे

३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४१

४२ ४३ प्रास्थादिति श्रुता तस्य अतिशूरस्य बिरुदावलीप्रबंधविशेषः तल्लक्षणंतु वार्यमानां कबिरुद्वर्णनप्रचुरोज्वला वाक्याडंबरसंयुक्तासामताबिरुदावलीति ४४ तत्रेति शुष्मिणो रविगजयोरिव ४५ ४६ ४७ ४८ आहूतद्वितिशिवभक्तानांअभिषंङ्गः पराभवः तेनयदंहः दुरितंतस्यनि



इतिकर्त्तव्यमित्युक्त्वासोतिशूरोस्वपन्निशि रजन्यांतुप्रभातायांत्रिपुंड्रालंकृतालिकः ४२ चतुर्विंशतिरुद्राक्षभूषितौचदधद्गजौ खड्गखेटधरैःसार्द्धमतिशूरो विनिर्ययौ ४३ प्रास्थादेनादिनाथोपिश्रुततद्बिरुदावलिः गच्छंतमन्वयुःशिष्यास्ताराश्चंद्रमसंयथा ४४ तत्रसर्वेषुपश्यत्सुतयोर्युद्धमवर्त्तत वाञ्छतोःकीर्त्तिमतुलांशुष्मिणोरिवमत्तयोः ४५ हस्तदूतेनखड्गेनसजघानरणेरिपुं अतिशूरोपिखड्गेनतत्प्रहारंन्यवारयत् ४६ एनादिनाथोथोत्कर्षन्लग्नंचर्मण्यसिंनिजम् भालेभस्मरिपोर्दृष्ट्वासंभ्रांतहृदयोभवत् ४७ विचारंचागमत्तीव्रंशिवद्रोहभयेनःसः कथंमयाशिवद्रोहमविचार्यदुरात्मना ४८ आहूतोभस्मरुद्राक्षधारीयुधिरिपूकृतः शिवभक्ताभिषंगांहोनिष्कृतिर्नेमृतिंविना ४९ यदित्यक्तायुधोहंस्यामयशस्यंभवेदघं पराङ्मुखवधात्तस्मात्तत्स्तिष्ठामिसायुधः ५० छिन्नग्रीवोऽस्यखड्गेनप्राणांस्त्यक्ष्येघशुद्धये नान्यथानिष्कृतिर्मेस्तिवर्षकोटिशतैरपि ५१ धृतासिरेवंनिश्चित्यतस्थाउद्यमवानिव भावज्ञोपिरिपुस्तस्यनजानन्निवतत्क्षणे ५२ अतिशूरःशिरश्छेत्तुंशत्रुंकैश्येपरामृशत् निर्विकारोयदातस्थौप्राणानामत्ययेपिसः ५३ तदानींवृषभारूढःशंकरःप्रत्यदृश्यत पार्वत्याचगणैःसार्द्धंविबुधेंद्रैरभिष्टुतः ५४ स्थितिंदत्त्वास्यकैलासेचक्रेपारिषदोत्तमम् किंवानसुलभंपुंसांप्रसन्नेपरमेश्वरे ५५ प्राप्याप्यापदमीश

ष्कृतिःप्रायश्चित्तंमृतिंविनानेत्यर्थः ४९ ५० ५१ ५२ अतिशूरइति कैश्ये केशसमुदाये ५३ ५४ स्थितिमिति पारिषदोत्तमं प्रमथा

इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांएकविंशतितमोऽध्यायः २१॥ ॥५०॥
संप्रति निषादादिहीनजातीनामपिशिवभक्त्यामुक्तिर्भवतीतिवदंति शिवेइति जन्मादिपदेनरोगमरणादिपरिग्रहः तेनयःक्लेशस्सएव ध्वांतं अंधकारःतस्य अर्कस्वरूपंसूर्यात्मकंतन्नाशकमित्यर्थः अंघ्रिसरोरुहंपादकमलंयस्यतादृशे १ नेतिश्लोकद्वयं एकान्वयि श्रुतं शास्त्रं इज्यायागः व्रतंउपवासादि स्वाध्यायोवेदाध्ययनं कुलादिकं सर्वं तथा तेनप्रकारेणपुनर्भवक्लेशहरं नभवति यथाशिवभक्तिः

इतिश्रीस्कंदोपपुराणेएकविंशतितमोऽध्यायः २१॥ ॥अगस्त्यउ॰ शिवेजन्मादिसंक्लेशध्वांतार्कांघ्रिसरोरुहे भक्तिंवितन्वतेयेत्रतेषांनास्तिपुनर्भवः १ नकुलंनश्रुतंनेज्यानव्रतंनतपोमहत् नस्वाध्यायोनदेवार्चानचतीर्थनिषेवणम् २ पुनर्भवक्लेशहरंभवतिब्राह्मणास्तथा शिवभक्तिर्यथापुण्याजन्मदोषविनाशिनी ३ शमादिगुणसम्पन्नोब्राह्मणोविजितेंद्रियः अपिब्रह्मविदीशांघ्रोर्विनाभक्तिंनमुच्यते ४ शिवभक्त्यैकयालोकेनिषादश्वपचांत्यजाः छिन्नबंधाविनायोगैरनावृत्तिपथंगताः ५ मांसनेत्रार्पणेनैकश्चंद्रचूडप्रसादतः निषादसूनुःपरमांगतिमापद्विजोत्तमाः ६ श्रीऋषयऊचुः॥ कथमर्पितवान्नेत्रंनिषादोनिंद्यजन्मभाक् ॥ कथंशंभोःप्रसादेन विमुक्तभवबंधनः ७ ॥ ७ ॥ ७ ॥

ब्राह्मणाइतिसंबोधनं २ ३ शमादीति आदिपदेन दमादयोपिगृह्यंते तथाच शमादिषट्कसम्पन्नोपीत्यनेन साधनसंपत्तिसत्वेपीश्वरः शिवचरणभक्तिंविना नमुच्यतेइत्यन्वयः ४ शिवभक्त्येति श्वानंपचंतीतिश्वपचाः चंडालाःनिषादाश्च श्वपचाश्च अन्त्यजा शूद्राश्चेतिद्वन्द्वः अनावृत्तिपथंमोक्षमार्गं नसपुनरावर्त्ततइतिश्रुतेः अनावृत्तिः शब्दात् इतितदर्थकं चरमं ब्रह्मसूत्रंयंप्राप्यननिवर्त्तन्तेतद्धामपरमंममेतिस्मृतेश्चगताःप्राप्ताः ५ ६ जातकौतुकामुनयःपुनःकुंभयोनिंपृच्छन्ति कथमित्यादिश्लोकद्वयेन ७ ॥ ७॥

८ इतिहासमारभते कांचीपुरस्येत्यादिभिः एकादशश्लोकैः ९ पर्वतंवर्णयति नाम्नेति कुंजराकारेणगजाकारेण भूषितोलंकृतः वन्यस त्वानां वनेभवानांजन्तूनां शरणेसाधुःशरण्यः १० कुन्देत्यादिश्लोकत्रयमेकान्वयि चलच्छदाः अश्वत्थाःशम्याकाः चतुरंगुलाः ११ अरिष्टाःफेनिलाःपारिभद्राःनिंबतरवः १२ वेणुभिरिति यत्रशैलेभूमीरुहाङ्गणाः वर्द्धन्तेद्रुत्यन्वयः १३ वर्धमानेति हर्यक्षाःसिंहाः १४ रत्नेति



अवापसिद्धिंपरमांदुर्लभांयोगिनामपि चरित्रंतस्यधन्यस्यवदनःकुंभसंभव ८ श्रीअगस्त्यउवाच कांचीपुरस्यमहतःस्थानस्येशानकोणतः सुवर्णमुखरीतीरेपर्वतोस्तिमहत्तरः ९ नाम्नावेणुगिरिःश्रीमान्कुंजराकारभूषितः शरण्योवन्यसत्वानांनानाधातुविचित्रितः १० कुंदमंदारहिंतालतालबिल्वचलच्छदाःसप्तपर्णाम्रशम्याकशललासनरोहणाः ११ नागकेसरपुन्नागनालिकेरविभीतकाः वरणोदुंबरारिष्टपारिभद्रादयोद्रुमाः १२ वेणुभिःसहवर्द्धंतेयत्रभूमिरुहांगणाः निकुंजनिलयायत्रवर्षातपनिरोधिनः १३ वर्धमानमहावेणुपर्वनिर्मुक्तमौक्तिकैः हर्यक्षनखनिर्भिन्नहस्तिकुंभच्युतैश्चतैः १४ रत्नकुंजांतरासंगपरभागमनोहरैः निशातशललीसूचीकृतरंध्रसमुज्वलैः १५ निर्मायंतेनिषादानांहारायत्रवनेचरैः छिंधिभिंधिनमुंचानुद्रवप्रहरमारय १६ इतियत्राभितःशब्दाःश्रूयंतेशबरेरिताः कलभायत्रबध्यंतेलताभिःशबरार्भकैः १७ भिल्लमल्लशुनोयत्रभषतोवीक्ष्यसूकरान् तरक्षवश्चशार्दूलाःपलायंतेवनेवने १८ ॥ छ ॥ छ ॥

रत्नखचितानांकुंजानां लतागृहाणां अन्तरस्यमध्यभागस्य आसङ्गेनयःपरभागःगुणोत्कर्षःतेनमनोहरैः निशाताःतीक्ष्णाःयाःशलल्यः शल्यरोमाणिताएवसूच्यः तत्कृतैःरंध्रैःसमुज्वलानितैरिति मौक्तिकविशेषणं १५ १६ १७ भिल्लेति तरक्षवः मृगादनाः १८ ॥ छ ॥

हरीति हरीणां सिंहानां केशरदामानि सटामालाः तद्वन्तः बद्धाः व्याघ्रनखाङ्कुरा यैः तादृशाः स्तनंधयाः बालाः दंष्ट्रिभिः वराहैः १९ कापोतेति कपोतानां समूहः कापोतं एवमग्रेपि तस्य मांसभुक् व्याधवाहिनी किरातसेना २० अवान्तरकथामुपक्षिपति तत्रेति विस्रगं

हरिकेसरदामांतबद्धव्याघ्रनखांकुराः स्तनंधया निषादानां यत्र क्रीडंति दंष्ट्रिभिः १९ कापोतशौकमायूरमार्गकौक्कुटमांसभुक् दुर्भिक्षं नैव जानाति श्रितायं व्याधवाहिनी २० तत्रास्ति गोधापुरमित्यनेकशवरास्पदं यत्पर्युषितमांसौघविस्रगंधिदिगंतरम् २१ नानापक्कणसाहस्रशतयूथपसेवितं सिंहव्याघ्रवराहेभत्वगावृत्तमहातपम् २२ नागोनामाधिपस्तस्य निषादकुलवल्लभः कुलाचलपुलिंदौघदीयमानकरो महान् २३ महाधनश्च शूरश्च भूपालानां च सम्मतः सदंतां नाम शबरीं समानकुलसम्पदम् २४ उद्वाह्य हर्षवानासीत् हस्तिन्या गजराडिव रूपयौवनसौजन्यशालिन्या च तया सह २५ रममाणो मुदं प्राप योगीव ब्रह्मविद्यया तस्यैवं वर्तमानस्य नापत्यमभवद्द्विजाः २६ दंतानपत्यभावेन खिन्ना शोचयति स्म तं अनुद्धुतापि बहुशो रत्नवस्त्रविभूषणैः २७ भर्त्रा प्रणयिना नित्यं बहुमेनेन किंचन पपौ न मधु मांसानि बुभुजे च न चाशनम् २८ दधौ मृगमदं नापि न सस्नौ कुंकुमांभसि न वेण्युद्वर्त्तनं चक्रे न दुकूलं बभार सा २९ तामवेक्ष्य निषादानामनुशोचन्नधीश्वरः नामन्यत सुखं गेहे रहिते पुत्रसम्पदा ३० एवं याते बहुतिथे का

धि आमगंधि २१ नानेति पक्कणाः शबरालयाः सिंहादीनां त्वग्भिः चर्मभिः आवृत्तः निवर्त्तितः महान् आतपो यस्मात् तदिति पूर्वश्लोकस्य गोधापुरमित्यस्य विशेषणं २२ नाग इति कुलाचलेषु हिमालयादिषु ये पुलिन्दौघाः किरातसंघाः तैः दीयमानः करः राजग्राह्यधनं यस्मै २३ २४ २५ २६ २७ २८ दधाविति मृगमदं कस्तूरीं न सस्नौ स्नानं न कृतवती वेण्युद्वर्त्तनं केशसंस्कारं २९ ३० एवमिति संसदि सभायां ३१

३२ ३३ प्राणानिति स्पष्टमर्द्धं व्याधाद्इत्यादि श्लोकद्वयमेकान्वयि वृद्धांपप्रच्छुरित्यन्वयः ३४ ३५ प्राभृतमिति प्राभृतं उपायनं ३६ ३७ ध्या

अनपत्योस्मि खिन्नोस्मि सदारो निंदितः कुले नभूतपूर्वः कोप्यस्ति मादृशो भाग्यवर्जितः ३२ यत्र कुत्रापि गच्छा
मि अनपत्येन मे फलं यदि कश्चिदुपायोस्ति पुत्रसंपत्प्रदो मम ३३ प्राणानपि परित्यज्य तस्य कर्त्तास्म्यसंशयं व्याधा
त्तस्य वचः श्रुत्वा पप्रच्छुश्च कुलोत्तमाः ३४ पक्कणस्य बहिर्वृद्धां जटिलां पर्णवेश्मगां प्रियंगुपिष्टभांडानां सहस्रंम
धुसर्पिषाम् ३५ प्राभृतं प्रस्थसाहस्रं दत्वा प्रांजलयोंतिके नागोपि मौक्तिकप्रस्थं प्रणामांते ददौ पुनः ३६ माणिक्यवे
त्रमतुलं त्वचं पट्टाम्बरं तथा प्रतिगृह्य च तत्सर्वं जरती शबरीक्षणम् ३७ ध्यात्वा शक्तिधरं देवं सह वल्या मनोज्ञया
चालयंती शिरः किंचिदिदमाह वनेचरान् ३८ सह भर्त्रा प्रसन्नेन वल्या स्कन्देन तं महत् मौक्तिकप्रस्थशतकं यद्यनेनः
प्रदीयते ३९ नागादप्यधिकः पुत्रो भविता प्रतिभूरहं इति तस्यां ब्रुवाणायां शकुनानामभूद्ध्वनिः ४० प्रत्ययं प्रापि
तो व्याधः प्रत्यज्ञासीत्तथैव तु मुक्ताप्रस्थशतं दद्यां संजाते तनये मम ४१ तथा विधेहि मा तर्मे यथा वल्ली प्रसीदति व
द्धा तद्वचनं श्रुत्वा नागमाह स्थितं मिथः ४२ त्वं वदं ताव्रतं मत्तः गृहीत्वा वत्सरं यदि तिष्ठन्मनोरथः पूर्णः भविता वल्यनु
ग्रहात् ४३ अस्त्वित्युक्त्वा गृही योगी तद्वाचा तोषयद्दृधूं सा प्रीता व्याधवचनाद्वृद्धां प्रातर्ननाम ताम् ४४ उपस्पृश्य
व्रतं वृद्धा स्पृशंती भस्म नालिके पद्यं च पाठयामास वल्ली प्रीतिकरं परम् ४५ नमो नमः षण्मुखवल्लभायै नमो नमो न
गजनार्तिहंत्र्यै नमो नमः सर्वसमृद्धिदायै नमो नमस्ते दिशवल्लि पुत्रम् ४६ एतत्पद्यं जपंती सा मधुमांसविवर्जनात्

त्वेति शक्तिधरं षण्मुखं वल्या तन्नाम्न्या पत्न्या सह ३८ ३९ नागादिति प्रतिभूः उत्तमर्णाधमर्णयोः मध्यस्थः ४० प्रत्ययमिति विश्वासमि

त्यर्थः प्रत्यज्ञासीत् प्रतिज्ञामकरोत् ४१ ४२ ४३ ४४ उपस्पृश्येति आचम्येत्यर्थः भस्मनाऽलिके भाले स्पृशन्ती ४५ ४६ ४७ मासत्रयेद्वृति

मासत्रयेप्यतिक्रांतेनाभवल्लक्ष्मकिंचन पुनः सापद्यमदिशत्षण्मुखस्तुतिसुन्दरम् ४८ नमो नमः शैलसुतात्मजाय नमो नमो बर्हिणवाहनाय नमो नमो वल्लिमनोहराय नमो नमो देहिसुतं गुहेश ४९ इति पद्यद्वयं वृद्धा पाठयित्वा च तां नतां बभूव परमप्रीता कृतार्थासीत्यभाषत ५० अतीते सप्तमे रात्रे वृंता निद्रावशंगता स्वप्ने ददर्श स्वोत्संगे स्थापितं पूर्णमंडलम् ५१ निषादाधिपते र्भार्या भास्वरं रजनीचरं अंतर्गृहे प्रदीसंच प्रवृद्धायै व्यजिज्ञपत् ५२ मान्यत्र कथयेत्युक्ता साप्रहृष्टतराभवत् अथ मासे व्यतिक्रांते प्रास्फुरत्गर्भलक्षणम् ५३ व्याधाश्च मुदितानेमुः व्रतां तेजरतीमपि प्रागेवजन्मनः सूनोर्यथोक्तं शबराधिपः ५४ मौक्तिकप्रस्थशतकं वल्लीदेवीमुदेददौ शुभेमुहूर्त्ते व्याधेंद्रः सर्वाभरणभूषिताम् ५५ आसन्नप्रसवां दंत्तामवलोक्य दधौमुदं बाहुभ्यामवतीर्णोब्धिपारंगतइवस्वयम् ५६ इयेष तनयं जातं कर्त्तुं शबरनायकं ततः शुभान्विते लग्ने शुभग्रहनिरीक्षिते ५७ दंतासूतात्मजं प्राचीहरिश्चंद्रमसं यथा नागः श्रुत्वा सजं जातं बभूव मुदितांतरः ५८ नष्टदृष्टिः पुनर्दृष्टिलाभेन तनुमानिव मधूनि दापयामास पक्कणेषु च सर्वेशः ५९ निषादो जरतीं साक्षाद्देवीं वल्लीमन्यत काहलीशृंगहिक्कानां शब्दास्तत्सुतजन्मनि ६० वियतो धीव्यजृंभंत नादयंतो दिशो दश ववर्षुः पुष्पवर्षाणि खेचराः शबरालये ६१ यथाधिकारं व्याधेंद्राः रत्नप्राभृतपाणयः उपासतांतिके नागं यथा पूर्वे प्रियंवदाः ६२ जगुः कलं च गंधर्वा नन्तु

लक्ष्मगर्भचिन्हं ४८ ४९ ५० ५१ ५२ मेति अन्यत्र माकथयेत्यर्थः ५३ ५४ ५५ ५६ ५७ दन्तेति प्राचीहरित् पूर्वादिक् ५८ ५९ ६० ६१

६२ जगुरिति अतनुः अशरीरिणी वाणी ६३

भ॰टी॰ शिवेति नयनार्पणात् निजनयनसमर्पणात् अच्युतात् विष्णोरपि अधिकांकीर्त्तिंप्रदधे धारयामास भूतकालस्य अविवक्षयाधारयिष्यतीत्य अ॰

६२

शिवभक्तिपरीक्षायांप्रदद्देनयनार्पणात् अच्युतादधिकांकीर्त्तिंसंप्राप्यशबरान्वयम् ६४ अलंकर्त्तुमयंजातःदं तायास्तनयोमहान् इतितद्गिरमाकर्ण्यसिद्धाःश्लाघामकुर्वत ६५ रोदनध्वनिमाकर्ण्यशिशोर्दंताकलाक्षरं अ विंदतपरानंदंयोगसिध्येवयोगिनः ६६ क्रमेणववृधेबालोमात्रासमुपलालितः शुक्लपक्षमनुप्राप्यकलानिधिरि वोदितः ६७ शबरीशबराणांचतस्मिन्नयनपङ्क्तयः पूर्णामृतमिवासाद्यतदाकंठंपिताजनाः ६८ देहवर्णस्यस दृशंनामचक्रेपिताशिशोः नीलवर्णतयानीलःप्रथितःपक्कणेऽभूत् ६९ जानुभ्यामपिबाहुभ्यांचक्रमंतंकुमारकं पश्यतोर्व्याधदंपत्योःप्रीतिंजानातिशंकरः ७० जातदंतस्यनीलस्यव्यक्ताऽव्यक्ताक्षरामुदा गिरस्सुधासमरसाःश्रु यंतेस्मतदामुहुः ७१ छिंधिदारयभिंधीतिनागःपाठयतिस्मसः धूलीकेल्यांनिषादानांशिशूनाक्षिप्यखेलति ७२ बालंविलोकयन्नागःभोजनस्यनचास्मरत् व्याघ्रभल्लूकभूदारहर्यक्षगजपोतकैः ७३ क्रीडंतंबालकंदृष्ट्वाप्रह र्षेत्यब्रवीसिता श्वानौबभूवतुस्तस्यकिशोरकसमौसदा ७४ पार्श्वयोर्भोजनेनिद्रासमयेपिसमीयतुः व्याधवृद्धानु दिवसंभस्मरक्षांवितन्वती ७५ वल्लीषण्मुखकारुण्याच्चिरंजीवेत्युवाचसा ७६ इतिश्रीस्कंदेपुराणेद्वाविंशोऽध्यायः २२॥ ॥द्वादशेवत्सरेतस्यनूतनायुधसंग्रहं कारयिष्यन्मुदानागोव्याधान्सर्वानमेलयत् १ हिमालयेमहामेरौनिष धेगंधमादने विंध्येमहेंद्रेमलयेत्रिकूटेमल्लिकार्जुने २ गिरावन्यत्रयेव्याधाःतेचसर्वेसमागताः नानोपायनहस्ता

र्थः ६४ ६५ ६६ ६७ ६९ ७० ७१ ७२ बालमिति भोजनस्येतिकर्मणिषष्ठी ७४ ७५ ७६ इतिश्रीमानवल्युपनामकनृसिंहविरचितायां

भक्तविलासप्रकाशिकायां द्वाविंशोऽध्यायः २२॥ ॥ ॥ अथ नागोनामव्याधराजः निजपुत्रस्य नीलस्य अस्त्रशिक्षादिकं चकारेत्याह द्वाद शइति अमेलयत् एकत्र चकार १ २ ३ संपूज्येति उपदीकृतं उपायनीकृतं द्रव्यजातं त्रिपादैः त्रिभिरंशैः संगृह्य चतुर्थभागस्य संचयार्थरक्षणीयत्वादितिभावः ४ ५ उलूकेति उलूकध्वनिं कुलाचारप्राप्तं घूकस्येव शब्दं तेषां तस्य मंगलार्थत्वादितिभावः अंगुलित्रं ह

संपूज्य मधुमांसादिजास्याहारप्रदानतः द्रव्यजातं स संगृह्य त्रिपादैरुपदीकृतम् ४ शुभे मुहूर्ते तनयं व्याघ्रचर्मणि नूतने निवेश्य प्राङ्मुखं हस्ते नागः स्वां क्षुरिकामदात् ५ उलूकध्वनिमातेनुः शबर्यश्च समंततः अथ बद्धांगुलित्रस्य सूनोर्वामकरे धनुः ६ दत्तो नागः शरं किंचिदिदं सदसि चाब्रवीत् पुरः पुत्र शमीवृक्षे निबद्धः क्रोडपोतकः ७ शरेणाकर्णकृष्टेन शरव्यं तन्निपातय इति नागेन संदिष्टो नीलः संधाय कार्मुके ८ सायकं तं प्रतितरं विससर्ज कृतास्त्रवित् स भूदाराभर्कं लक्ष्याद्विभिन्नं वीक्ष्य सर्वशः ९ श्लाघमाना वनचरास्साधु साध्विति चाब्रुवन् पुलिंदकुलवृद्धानां कारयित्वा नतिं पदे १० नागः पुत्रं समाश्लिष्य परां निर्वृतिमापह ततः परं समामंत्र्य पुलिंदास्तेन पूजिताः ११ युवराजस्य नीलस्य चाज्ञया स्वं पदं ययुः बद्धकक्षस्ततो नीलः शबराचार्यशिक्षया १२ सर्वायुधेषु परमां शिक्षामध्यगमच्चिरं शर्करामरुकांतारधावने हरिणद्विषाम् १३ निरोधे निर्भयामर्दे न तस्यासीत्समोपरः आनायादिप्रयोगेषु युद्धे केसरिभिः सह १४ सत्वप्रहारमोक्षे च सदृशस्तस्य नापरः आखेटकौतुकाक्रांतचेतसोऽस्यानुवास

स्तावापः ६ दत्ताविति क्रोडपोतकः वराहबालकः ७ शरेणेति शरव्यं लक्ष्यभूतं ८ सायकमिति सः नीलः ९ १० ११ १२ सर्वायुधेष्विति शर्कराः क्षुद्रपाषाणः मरुः ऊषरभूमिः कान्तारं दुर्गमं वनं तेषु धावने हरिणद्विषां सिंहानां १३ निरोध इति निर्भयं यथास्यात्तथा

आमर्दे परस्परसंमर्दे आनायः जालं मृगबंधनसाधनं १४ सत्वेति सत्वाः जंतवः १५ १६ १७ वलिशइति वलिशः कणिशश्चेतिनाम्नाप्रसिद्धौ
आदिवसात्ययं संध्याकालपर्यंतं १९ २० २१ नेति करणमांद्येनचक्षुरादिजाड्येन २२ २३ २४ २५ २६ विस्तार्येति वागुराः मृगबंधिनीः व



नशेकुरनुयानेपिनागसूनोर्वनेचराः सिंहव्याघ्रवराहेभशरभारण्यवासिनः १६ नतस्याविदितंकिंचिद्वनमस्तिः
महीतले मार्गानुसारिणोतस्यसुहृदौचबभूवतुः १७ वलिशः कणिशश्चेति व्याधयोधाधिपात्मजौ सहताभ्यांवि
निर्गत्यप्रातरादिवसात्ययम् १८ चरित्वासमहारण्येरात्रावायातिपक्कणे एवंविचरतस्तस्यपंचसंवत्सराययुः
१९ वर्षवातातपास्तस्यबभूवुर्नैवदुस्सहाः ततोवनचराः प्राप्यनागपक्कणवासिनः २० ऊचुर्दक्षिणतोबाधांमह
तींदुष्टसत्वजां निशम्यवचनंतेषांव्याधः प्रोवाचतानिति २१ नप्रागिवबलव्याधाः मृगयायांममाधुना दृङ्करः
णमांद्येनखिन्नोस्मीहवनेचराः २२ भवंतएवदुष्टांस्तान्निवारयतसायुधाः तरुणाबलवंतश्चबलिभिश्चान्विताः
श्वभिः २३ तमूचुःश्रुततद्वाक्याः पुलिंदामिलिताः शतं पुत्रंत्वदधिकंनीलंकुरुसेनाग्रयायिनम् २४ नागोपिप्रीत
येतेषांप्रेषयामासतैः सुतं प्रतस्थेव्याधसेनासादुष्टसत्वजिघांसया २५ नीलः सुहृद्भ्यां सहितोनीलमेघसमद्युतिः
धनुर्द्धरैः कवचितोमहद्वनमगाहत २६ विस्तार्यवागुराः व्याधाः तस्थुश्चपरितोवनं छिंधिभिंधिगृहाणेतिवदंतः स
त्वभूषणाः २७ ततः श्वनादमुखरेवनेसर्वत्रसंशयात् बभ्रमुर्मृगयूथानिगगनेघनयूथवत् २८ ॥ छ ॥

नंपरितः वनस्यसमन्तात् अभितः परित इत्यादिना षष्ठ्यर्थेद्वितीया सत्वभूषणाः सत्वंबलं तदेवभूषणंयेषां २७ ततइति श्वनांनादेन मुखरे
संशयात् जीवनसंशयात् मृगयूथानि गजसमूहाः भद्रामंद्रामृगाश्चेतिविज्ञेयास्त्रिविधागजाः हिमवद्विंध्यमलयशैलजाताः क्रमेणते द्

जघ्नुरिति लगुडैः दंडैः निखनंतः नितरां बद्धं कुर्वंतः २९ ३० ३१ ३२ ३३ ३४ उज्जहारेति वन्यदंष्ट्रिनः वनवराहस्य वपुषः शरीरात् यावत् श

जघ्नुर्व्याधाश्च लगुडैः मृगानंतिकचारिणः नीलराजेन दलितानिखनंतो महाबलाः २९ सिंहव्याघ्रवराहाश्च निपेतुः स्त्यक्तजीविताः नीलबाणप्रहारार्त्तेनानासत्वसमाकुलम् ३० आसीदरण्यं मथितं क्षुभितार्णववारिवत् नीलो निकुंजा द्गुवन्नंदक्षिणाशामुखं भयात् ३१ कृष्णसारमनुद्रुत्य प्रतस्थे धृतकार्मुकः कनिष्ठो वलिशश्चोभौ सहतेनाभ्यधावता म् ३२ दृश्यादृश्यतनुर्नीलं कृष्णसारोपि दूरतः विचकर्ष परिश्रांतमारीचो राघवं यथा ३३ धावतः कृष्णसारस्य मध्ये कश्चन सूकरः विनिर्ययौ नागसुतो निजघान शरेणतम् ३४ उज्जहार शरं यावत् वपुषो वन्यदंष्ट्रिणः स कृष्णसारः सहसा वने क्वापि तिरोदधे ३५ अथ तापपरिश्रांतः क्षुधितस्तृषितो वने व्याधराजसुतः प्राह सुहृदौ च धृतश्रमो ३६ मृगः प लायितोरण्ये परिश्रांता वयं क्षुधा उपलक्ष्येत चेद्वारि श्रांतिः शांतिमुपैष्यति ३७ कणिशोऽध्यतमाहेदं सखे स्वादु त्तरं न नु जांगलं वन्यलोकस्य भुज्यतां किं विलम्बसे ३८ न वन्हिमिह पश्यामि पिपासा महती मम उपायः को नु भवितेत्याह नीलो धृतस्तरुम् ३९ कणिशः प्राह तं भूप श्रूयतां मद्वचः सखे क्रोशद्वयादितः शैलो दृश्यते कश्चिदुन्नतः ४० सिद्ध चारणगंधर्वसेवितो देवभूषितः फलभारानतैः पुष्पैः सांद्रः सानुघ्रातं श्रितः ४१ सुवर्णमुखरीनाम ततउत्तरतो नदी क मलोत्पलकल्हारवनामोदाधिवासिता ४२ घृतपिंडोपमा यत्र चरंति शफराः सखे तत्र गत्वा महानघांस्त्वा त्वा पीलान् झोत्तमान् ४३ स्वादतस्तेन पुनरावृत्तौ बुद्धिर्भविष्यति मया परिचिता पूर्वं सा नदी मृगयांतरे ४४ ॥ ७ ॥

रं उज्जहार उद्धृतवान् ३५ ३६ ३७ कणिश इति जांगलं वनं ३८ नेवितरं धृतः धृतवान् इति कर्त्तरि क्तः ३९ ४० ४१ ४२ घृतेति झषोत्तमान् मत्स्यश्रेष्ठान् ४३ ४४ ॥

४५ ४६ श्लाघमानइति निमित्तानि शुभशकुनानि ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ गंधर्वेति गंधर्वाणां देवयोनिविशेषाणां गीतस्य॰ गानस्यमाधुर्येणद्रुवंतः नादक्रिययेतिभावः गानशास्त्रज्ञैः समयविशेषंप्रतीक्ष्यतदुचितगानकरणे पाषाणाअपिद्रवन्तिशुष्काश्च॰

उत्तिष्ठोत्तिष्ठतन्नीलंबलिशःप्राहहेसखे त्वयावनवराहोयंमयाविद्धःप्रतीक्ष्यताम् ४५ अत्रैवजलमानीयतवद्वा स्यावहेपुनः तथेत्युक्तेऽपिसुहृदानागसूनुर्नदींप्रति ४६ श्लाघमानोनिमित्तानिप्रतस्थेक्वणिशान्वितः मुहूर्तेनै वतंगत्वापर्वतंतस्यचांतिके ४७ ददर्शनीलस्तटिनींसुवर्णमुखरींततः स्वादुशीतलपानीयामतिस्वच्छांमहामुदा ४८ तरंगमधुराधूतपांथजालपरिश्रमां नानातीरतरुव्रातशिरःसाहस्रवर्त्तिनाम् ४९ विहंगमानांध्वनिभिःमुख रीकृतदिङ्मुखां मज्जनमुनिवरस्तोमशिष्यकोटिसमावृताम् ५० कालहस्तीशनिर्माल्यपुष्पभासुरवेणिकां मत्स्य कच्छपसंचारसमाधूतसरोरुहाम् ५१ मकरंदरसास्वादमत्तालिध्वनिनादितां मरालचंचुसंदष्टबिसलालसहंसि काम् ५२ मज्जन्निर्जरवारस्त्रीस्तनकस्तूरिकाबिलां पानावतीर्णवन्येभदानचंद्रकमंडिताम् ५३ हर्यक्षहतम त्तेभकुंभमौक्तिकशर्करां बालदूर्वादलश्याममरोमांचमृगांचिताम् ५४ गंधर्वगीतमाधुर्यद्रवदश्ममनोहराम् उपांतकुंजसंभुञ्जन्मुनिवाईकवल्कलाम् ५५ इङ्गुदीफलसंक्षोदस्निग्धश्लक्ष्णशिलांतरां तटकीचकसंदष्टबा॰ लार्तचमरीमृगाम् ५६ खंजरीटविहारक्ष्माखातशंकुवनेचरां स्फुरदावर्त्तनाभीकांनीलोत्पलविलोचनाम् ५७

तरवः पल्लविताभवंतीतिसंप्रदायः तादृशायेअश्मानःतैःमनोहरां वाईकं वृक्षसमूहः ५५ इङ्गुदीति संक्षोदः चूर्णः जटाबंधनार्थ मितिभावः तटकीचकैःसंदष्टाः येबालाः केशाः तैः आर्त्ताःचमरीमृगाः तेषां बालप्रियत्वादितिभावः ५६ खंजरीटेति खंजरीटानां खंजं

नारव्यपक्षिविशेषाणां विहारक्षमायां क्रीडाभूमौ खाताःनिखाताः शंकवः कीलायैस्ते वनेचराः यस्यां खंजरीटमिथुनक्रीडां दृष्ट्वा कि
रातास्तत्रनिधिनिश्चयेन कालान्तरे तत्परिचयाय शंकून् खनंतीतिभावः निधिमत्येवदेशे खंजनाः क्रीडंतीतिप्रसिद्धिः स्फुरदित्यादिना
सरितं नायकात्वेन रूपयति आवर्त्तएवनाभी यस्यास्तामित्यादि ५७ उन्नमदिति पुलिनमेव आरोहःनितंबः शुद्धफेनएव वरांशु

उन्नमत्पुलिनारोहांशुद्धफेनवरांशुकां विकसत्पंकजमुखीं दीर्घशैवालकुंतलाम् ५८ चक्रवाकस्तनवतींचारु
कुंचितहंसकां महिषींसिंधुराजस्यमंडितामिवभूषणैः ५९ सुवर्णमुखरींदिव्यासरितंशबरात्मजः समीक्ष्यमुमुदेः
नीलःसख्यासहविगाह्यताम् अपहायपरिश्रांतिमभवन्मोदनिर्भरः ६० सद्यःसुवर्णमुखरीसलिलावगाहाद्याध
स्यनष्टमखिलंदुरितंबभूव चेतश्चनिर्मलमभूद्बहुजन्मभाग्यकल्पद्रुमोप्यथफलोन्मुखतांप्रपेदे ६१ इतिश्रीस्कं
दोपपुराणेत्रयोविंशोऽध्यायः २३॥ ॥ॐ॥ ७ ॥श्रीअगस्त्यउवाच तीरद्रुमफलंस्वादुभुक्त्वायसुहृदर्पितं ब
भूवत्सोमुदितोनीलःश्रांतपरिश्रमः १ पश्यन्नभ्रंलिहान्वृक्षान्सुवर्णमुखरीतटे विश्राणस्सशरंचापंविचचार
वनेचरः २ अथश्रीकालहस्तीशसेवासंप्रीतचेतसां आसीदप्सरसांतस्मिन्संभ्रमःशैलमूर्द्धनि ३ निक्काणि
तरवोन्मिश्रोवेणुस्वनविचित्रितः मंद्रमर्द्दलनिर्ह्रादकृतमायूरकौतुकः ४ तानतारस्वालापलीलाकोरकित
द्रुमः गंडशैलशिलासारद्रवीकरणपंडितः ५ कालहस्तीशभूषाहिराजराजानुमोदितः संगीताडंबरस्तासांव्यान

कंयस्याः ५८ ५९ ६० ६१ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांत्रयो
विंशोऽध्यायः २३॥ ॥ॐ॥ प्रस्तुतमेववर्णयति तीरेति १ २ अथेति संभ्रमःत्वरा ३ निक्काणितेति निक्काणितरवःभूषणशब्दः

भूषणानां तु शिंजितं निक्काणो निक्कणः काणः क्वणः क्वणनमित्यपीत्यमरः मायूरं मयूरसमूहः तस्य कौतुकं मेघगर्जितभ्रमजन्यं कौतू-



हलं कृतं येन सादृश्यादिति भावः ४ तानेति तानानां स्वरविशेषाणां तारस्य अत्युच्चशब्दस्य आलापः आरंभसमयः तस्य लीलया कोरकि-

ताः संजातकोरकाः द्रुमाः यस्य पूर्वोक्तनादक्रिययेति भावः ५ कालहस्तीशेति भूषार्थं ये अहिराजराजाः महासर्पाः तैः अनुमोदितः तेषां गा

तेनाकृष्टमना नीलः सुहृदः प्राह कौतुकात् परिमृष्टा मम श्रांतिशपिशांता क्षुधा तथा ७ सुवर्णमुखरीस्नानात्परि

पूतोस्मि सांप्रतं न्यस्तभारमिवाभाति प्रसन्नमिव मानसम् ८ आपूरयति कोयं मे मुहुः शब्दामृतैः श्रुतिं अवतीर्ण इव

स्वर्गः शैलाग्रे किं न पश्यसि ९ अथ तं प्राह कणिशः पितुस्ते मृगयांतरे मया सह गतेन प्रागिदमाकर्णि तं तथा १० शि

खरे शैलराजस्य दिव्याकाचन देवता देवास्तां पूजयंतीति किंवदंती महीयसी ११ इयमेकपदी तत्र सेवार्थं गच्छ-

तां सखे मधुमाक्षिकशब्दानुविधायी श्रूयते ध्वनिः १२ दिदृक्षा यदि गच्छावः तत्रापि प्रिय सांप्रतं तथेति नीलः प्रथि

तः त्वरितः सुहृदा सह १३ आरुरोह गिरिश्रेष्ठं सोपानैः क्षुल्लकाश्मभिः समाधिमिव योगींद्रः शनकैः संयमादिभिः

१४ पार्श्वे परिणमद्वेणुपर्वोनोद्वांतमौक्तिकैः समंततः शर्करितामतिक्रम्य स वर्त्तनीम् १५ चरंति यत्र जीमूताः क-

लभाद्रुवमेचकाः अध्यारुरोह तान्नीलः ससुहृत्तदधित्यकाम् १६ ददर्श शैलशृंगाग्रे नमेरुवनमुत्तमं कृतमालवनोन्मि



नप्रियत्वात् व्यानशे व्याप्नोति स्म ६ ७ ८ ९ १० शिखरे इति देवता अस्तीति शेषः किंवदंती जनश्रुतिः ११ इयमिति एकपदी एकम

नुष्यसंचारयोग्यो मार्गः गच्छतां जनानां गम्यतामिति पाठे त्वयेति शेषः १२ दिदृक्षेति प्रियेति संबोधनं १३ आरुरोहेति क्षुल्लकाः सूक्ष्माः स

माधिमिव भूमिकाक्रमेणेति भावः १४ पार्श्वे इति परिणमतां जातपरिपाकानां वेणूनां पर्वभ्यः ग्रन्थिभ्यः उद्वांतैः मौक्तिकैः शर्करितां सं

ज्ञातशर्करां वर्त्तनीं एकपदीं १५ चरंतीति अधिस्यकां ऊर्ध्वभूमिं १६ १७ १८ १९ पदे इति प्रससादतरां अत्यंतं प्रसन्नं बभूव २० ततइति दर्दु
रेण मंडूकेन फूत्कुर्वन् अतएव उत्फणः उद्गतफणः यः अहिः सर्पः तस्य फणाकृति फणाकारं २१ २२ २३ कपोलेति कपोलयोः गंडस्थ
लयोः कषणे घर्षणे कण्डूशमनायेति भावः आसक्तानां मत्तेभानां मदेन वासितं सुगंधितं वल्मीकेषु सर्पायतनेषु ये अहयः सर्पाः ते

बिल्ववृक्षं तमुद्दिश्य गच्छन् व्याधोत्तमा स्तजः॥ ददर्श परितः सर्पान् शांतवैरान् सहस्रशः १८ गच्छतः पदवीं तस्य सो
मावधिमगाहत मुनेः शिवप्रसादेन संसाराध्वावधिर्यथा १९ पदे पदे स्य पापानि कोटिजन्मार्जितान्यपि प्रणष्टानि य
तस्तस्मात् प्रससादतरां मनः २० ततो दर्दुरफूत्कुर्वेदुत्फणाहिफणाकृति लिंगं माहेश्वरं दिव्यं प्रत्यक्षमुखमनव
स्थितम् २१ कृतोपहारं भक्तेन कृतमालस्रगंचितं कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम् २२ सकृद्दर्शनमात्रे
ण सर्वपापहरं परं सन्निधौ मुनिविन्यस्तपुष्पदूर्वातिलाक्षतम् २३ कपोलकषणासक्तमत्तेभमदवासितं वल्मी
काहिशिरोरत्नदीपांचितदिगंतरम् २४ दुकूलेनेव महता निर्मोकेण परीवृतं कस्तूरिकामृगासंगकस्तूरीरसवासितं
२५ कालहस्तीश्वरं नाम कालमृत्युनिवारणं बभूव मुदितो दृष्ट्वा योगीव ज्योतिरांतरम् २६ ननाम दंडवद्भूमौ प्रदक्षि
णमथाचरत् स्वामिन्मां रक्ष रक्षेति वदन्नंजलिमादधे २७ अभूद्रोमांचिततनुरानंदाश्रुकणांचितः भक्तिं दधा
वतितमां भवे भवभयापहाम् २८ पश्यतो व्याधपुत्रस्य भगवंतं महेश्वरम् चक्रुश्चक्षुष्यवस्थानं सर्वाःकरणवृत्त

षां शिरोरत्नान्येव दीपाः तैः अंचितं पूजितं दिगंतरं यस्य २४ दुकूलेनेति श्वेतपट्टवस्त्रेणेव स्थितेन निर्मोकेण सर्पत्वचा परीवृतं परिवृतं
२५ २६ २७ २८ पश्यतइति करणवृत्तयः चक्षुर्भिन्नेंद्रियवृत्तयः चक्षुषि नेत्रे अवस्थानं स्थितिं चक्रुः एकाग्रमना ददर्शेत्यर्थः २९ ॥

नवमिति अदः लिङ्गं नवन्नवमिवाभूत् अदृष्टपूर्वतया अतिरमणीयतया चेति भावः क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयता
याद् इत्युक्तेः तस्मात् सेवनात् सन्न्यासनः जातिं किरातजातिं व्यस्मरत् विस्मृतवान् ३० पिबन्निति उदन्यया पिपासया ३१ ३२ जारिणीति पूर्वं प्रोषि

नवंनवमिवादोभूल्लिङ्गं व्याधः सशांकरम् सिषेवे सादरं तस्मात् व्यसरज्जातिमात्मनः ३० पिबन्निव मुहुः प्रोत्या
लिहन्निव उदन्यया जिघ्रन्निव च संश्लिष्यत् किमाकर्णयन्निव ३१ गृह्णन्निव करे शंभुं व्याधः स्ववशमानयन्
आलिंग्य साहरं वृत्तिर्व्याधपुत्रस्य मानसी ३२ जारिणीव दृढं तस्यो प्रेयसं प्रोषितागतं एतावंतमिमं देवमनिषे
व्यातिवाहितम् ३३ कालं कष्टमहं मन्ये वृथैवायुर्मयः कृतः इतः प्रभृति नैवास्य त्यक्तव्यः सन्निधिर्मया ३४ कु
तकृत्सो भविष्यामि कालहस्ती शसेवया इति निश्चित्य मनसा सुखायं प्रियमानसः ३५ केन वा मूर्ध्नि देवस्य म्लानः पु
ष्पांजलिः कृतः उत्सार्याहं विधास्येऽस्य नवारग्वधमालिकाम् ३६ द्रुमानि वन्यपुष्पाणि निपतंति कथं यथा इति
नीलोक्तिमाकर्ण्य कणिशः प्राह विस्मितः ३७ पितुराखेटकाले ते दृष्टः कश्चिदिहागतः तस्य मुष्टिमिताः केशाः
मौलिमध्ये दृढीकृताः ३८ त्रिगुणैः तंतुभिः कृप्तं वामांसे वामतो वहन् असावन्वहमभ्येत्य सुवर्णमुखरीजले ३९
आनीतकलशेनामुं मूर्ध्नि सिंचति देवतां नवानि बिल्वपत्राणि शम्याककुसुमानि च ४० मौलौ पादे च निक्षि
प्यमंदं किमपि जल्पति अग्रस्थूलान्नकवलं कृत्वा हस्तं च दक्षिणम् ४१ दर्शयित्वा गृहीत्वान्नं प्रत्यहं याति मं
दिरं हस्तस्पर्शं जलक्षेपं सहते नैव देवता ४२ महतीयं न चास्माकं छायामपि सहिष्यते तस्मात्त्वं दूरतस्तिष्ठ यद्येकः

तः पश्चादागतः तं प्रेयसं जारिणी वयोषा जारमिव प्रियमिति श्रुतेः ३३ ३४ ३५ केनेति आरग्वधमालिकां शम्याकपुष्पमालिकां ३६ ३७ ३८ ३९ ४० ४१

४४ ४५ ४६ बहूनीति देवस्यप्रसादेजन्मकर्मादिनैवकारणंभक्तेरेवमुख्यकारणत्वादितिभावः ४७ ४८ ४९ ५० ५१ अङ्गीकुरुष्वेति

सख्युर्वोचंसमाकर्ण्यनीलःप्राहस्मयन्निव वनेचराणामस्माकमेतद्धिकुलदैवतम् ४४ अस्मद्गिरिवनेयस्माद्
सत्यासतमस्ततःसुहृत्त्वंविधास्यामित्वामिवामुंमहेश्वरम् ४५ द्वित्रैरेवदिनैःपश्यभक्त्याकिंकिंनसिध्यति सुवर्ण
मुखरीवारिसुलभंकुसुमानिमे ४६ बहूनिमृगमांसानिकथंनाराध्यतेहरः जन्मकर्मादिदेवस्यप्रसादेनैवकारणम् ॥
४७ साधनंभक्तिरेवास्मिन्जात्याहीनोप्यहंप्रियः रमतेनमनस्तत्रसखेमेपितुरालये ४८ यथात्रानंदभरितस्तस्मादत्र
वसाम्यहं इत्युक्त्वासन्निधिंप्राप्यसांजलिःसव्यजिज्ञपत् ४९ कथमेकोनिवससिवनेदुष्टमृगान्विते प्रभुस्त्वमसित्लो
कानांशैलाग्रेवर्तसेकथम् ५० अप्यस्माकंपरिजनोनतेकश्चिद्द्वितीयः अहमेवभविष्यामिदिवारात्रंचपार्श्वतः ५१
अंगीकुरुष्वमांदेवदासभागःक्षमस्वमे करोम्यंजलिमात्रंतेप्रसीदमयिशंकर ५२ एवमासार्पणंकृत्वाशवराधिपनंद
नः सपर्यांशांकरींकर्तुंतदारभ्योपचक्रमे ५३ शरैराच्छिद्यतस्यारात्तृणगुल्मलतादिकं दूरीचक्रेक्षणेनैवदुरितान्यपि
भक्तितः ५४ मृगान्निहत्यबहुशोमृगयायामथानले निक्षिप्यचिंतांमहतीमवापशबरात्मजः ५५ वतदूरेसरिद्वारिवने
पुष्पाणिनांतिके कलशादिनमेकिंचित्करिष्येर्चाकथंविभोः ५६ इतिचिंतयतस्तस्यप्रत्यभातबुद्धिरुत्तमा एवम
स्त्विति निश्चित्यसचक्रेयत्नमहात्मनः ५७ अनन्यसुकरंतद्धिश्रूयतांभक्तिसाहसं अभिषेकांबुकलशमतनोन्मुख
मात्मनः ५८ सोपानत्प्रपदंचापिव्यधान्निर्माल्यशोधनं दूराहृतानांपुष्पाणांभाजनंकेशिकांतरम् ५९ ॥ ७ ॥

हेदेवदासंमांअङ्गीकुरुष्वनिजभक्ततयास्वीकुरुमेआगः अपराधंक्षमस्व ५२ ५३ ५४ ५५ ५६ इतीति उत्तमाबुद्धिःप्रत्यभात्प्र

तिभातिस्म ५७ ५८ सोपानदिति उपानहापादरक्षयासहितं प्रपदं पादाग्रं निर्माल्यशोधनं व्यधात् विदधातिस्म पादेनैवलिङ्गशिरोग तं निर्माल्यं दूरीचकारेत्यर्थः एवंकेशिकांतरं केशवंदमध्यं पुष्पाणांभाजनं पात्रंचकारेत्यर्थः ५९ हस्तमिति अनलेन अग्निनापूर्वमुच्छूनं स्थूलंपाकवशेनपश्चाच्छोषितं ६० उद्धृत्येति हेतिना शस्त्रेणस्पृश्यं स्पर्शयोग्यं ऊष्मलं कदुष्णं सिध्मादित्वाल्लच् ६१ परीक्ष्येति दं



हस्तंचदक्षिणंमेनेनैवेद्यफलभाजनं अथसंवीक्ष्यपिशितंअनलोच्छूनशोषितम् ६० उद्धृत्यहेतिनाकृत्वाफूत्का रैःस्पृश्यमूष्मलं इदंयुक्तंकिमीशस्यस्वादुपक्वंनवाभवेत् ६१ परीक्ष्यदास्येदेवायनचेद्द्रोहोभविष्यति दष्ट्वादंतैस्त तोमांसंपर्यैक्षतचजिह्वया ६२ यद्यत्स्वादुतमंमांसंमधुसिक्तंवनेचरः शैलरंभादलपुटेततस्त्यंजगृहेपृथक् ६३ सुवर्णमुखरीवारिनिमज्यार्द्रैथकेशिके तत्रपुष्पाणिसंगृह्यमुखेसंजगृहेजलम् ६४ वामेनसशरंचापंआदायनि जपाणिना अन्येनमांसपुटिकामनुप्रातिष्ठतेश्वरम् ६५ यत्रास्तेकालहस्तीशोत्वरयाभ्येत्यतत्रसः सोपानहाप दाग्रेणभक्त्यानिःशंकमीश्वरम् लिंगंस्पृष्ट्वाप्रचिक्षेपनिर्माल्यंपरमेशितुः ६६ इतिश्रीस्कंदोपपुराणेचतुर्विंशोऽध्या यः २४॥ ॥७॥श्रीअगस्त्यउवाच मौलौनिरस्तनिर्माल्येगण्डूषजलधारया अभिषिच्यनिधायाग्रेमांसपत्र पुटंविभोः प्राक्षिपत्केशभारस्थंनतास्यःकुसुमोत्करं निवेदितानिमांसानिनोपयुक्तानिकिंमया २ ॥ ७ ॥

तैर्दंष्ट्वा दंशनंकृत्वाजिह्वयाच पर्यैक्षत परीक्षितवान् ६२ यदिति ततस्त्यं तत्रविद्यमानं ६३ सुवर्णेति वारिजले ६४ वामेति ईश्वरमनु शिवलिंगमुद्दिश्यप्रातिष्ठतप्रतस्थे ६५ ६६ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांच तुर्विंशोऽध्यायः २४॥ ॥७॥ क्रमेणनीलस्यशिवपूजाप्रकारमाह मौलाविति गण्डूषःमुखस्थितस्यजलस्य थूत्कारः १ २

विचारयन्निति मांगं मृगसंबंन्धि एवमग्रेपि मधुना आ प्लुत मिति अग्रिमेणान्वयः ३ ४ ५ ६ ७ ८ प्रातरिति महाग्रासः प्रलयेजग

विचारयन्नितिप्राहप्रांजलिस्सन्निधौहरं भुंक्ष्वमांसमिदंस्वादुमार्गंमायूरमाप्लुतम् ३ मधुनेदंतुकापोतंगो धामांसमिदंप्रियं एणेयंयद्दिवाराहंप्रियंतेचानयामितत् ४ सुवर्णमुखरोमीनानिमान्पश्यघृतोपमान् भुंज्य तांकालहस्तीशशपेमयिदयांकुरु ५ यदिनाश्नासिदेवेशनाश्नीयामप्यहंध्रुवं ददामिवदनेवातेमधुसिक्तं महेश्वर ६ एवमस्त्वितितद्धस्ते मांसंकिंचिदथार्पयत् दयालुःकालहस्तीशोतन्मांसंबुभुजेयदा ७ हृदीस वेतदाव्याधःस्वीचकारचशंकरः अथोत्थायमुदान्तस्सन्निदमाहकृतांजलिः ८ प्रातर्भुक्तमिवस्वादुमांसंकिंतु ममापिते व्याधवाक्यंनिशम्याथमहाग्रासोमहेश्वरः ९ ततोप्यधिकमेवेतिशिरःकंपाद्मोदत विवक्षुर्व्याधद त्तांतमिवदेवोदिवाकरः १० वरुणस्यापरांभोधौममज्जब्राह्मणोत्तमाः बहिर्गतैरिवाघौघैस्तिमिरैर्विश्वमावृतम् ११ गृहीतस्तंभिताहींद्रफणारत्नप्रदीपिते सन्निधौनिशिदेवस्यतस्थौदीपप्रदोहिसः १२ चिकीर्षुरालयंपूजा मेवमेववनेचरः अन्येद्युःप्रातरटवींमृगयार्थमगाहत १३ अर्चकोपिसमागत्यमांसगंधिंमहेशितुः दृष्ट्वालिंगंवि निश्वस्यरुरोदपतितःक्षितौ १४ उच्चैःस्वरेणचुक्रोशव्याधैर्दुष्टैरिदंकृतं नरके निपतिष्यंतिशिवद्रोहरताहिते १५ इतिसंप्रोक्षणंकृत्वापूजयित्वाचपूर्ववत् जगामस्वालयंविप्रःशबरोऽथसमाययौ १६ ॥ ८ ॥ ८ ॥

द्रसकृत्वादितिभावः ९ १० वरुणस्येति विवक्षुरिवेतिपूर्वेणान्वयः बहिर्गतैरिवेति शिवपूजाप्रभावात् नीलदेहतोनिष्क्रांतैः अ घौघैरिवस्थितैरित्युत्प्रेक्षा ११ गृहीतेति पूर्वंगृहीताः पश्चात्स्तंभिताः ये अहींद्राः तेषांफणारत्नैःप्रकर्षेणदीपितेप्रकाशिते १२

चिकीर्षुरिति आलयं यावद्देहपातं १३ १४ १५ १६

१७ १८ १९ अर्चकइति वनदेवैःवनदेवताभिः गृहीतंसुतं श्रुत्वा नागःनीलस्यपिता २० वैद्यैरिति भेषज्यकरणेपिसुतस्यालाभात् निराश इत्यर्थः २१ दीर्घेति निरोगःरोगरहितःदीर्घरोगीवसनीलः २२ २३ २४ भक्त्येति आध्वर्यंयज्ञसंबंधि हविंपुरोडाशादि २५ माल्यमि

अतीतःकिन्नुसमयःक्षमस्वकरुणाकर इतिनत्वायथापूर्वंकृत्वानिर्माल्यशोधनम् १७ स्वगंडूषाभिषिक्तस्यमांसा हारंन्यवेदयत् तथैवभोजयामासतच्छेषंबुभुजेपुनः १८ एवमर्चयतःशंभुंमासएकोत्सवत्तेन दूषितंप्रत्यहंमत्वा लिंगंसंप्रोक्षणादिना १९ अर्चकःशोधयामासविचाराक्रांतमानसः वनदेवगृहीतंस्वंनागःश्रुत्वागतःसुतम् २० वैद्यैश्चकारभैषज्यंनिराशःस्वालयंययौ प्रतियातेऽथशबरेततःपितरिपक्कणम् २१ दीर्घरोगीवनीरोगस्सबभूव वनेचरः प्रतिबंधविनिर्मुक्तोमुमुक्षुरिवशंकरे २२ दधारपरमांभक्तिंप्रीतिकामोवयोपिति गंधोदकाभिषेकंतंग डूषजलसेचनम् २३ सपादत्राणतस्यादप्रहारोमूर्ध्निचान्वहं स्कंदस्येवशिशोर्लीलाविन्यासोंघ्रिक्रमापतेः २४ भक्त्यापरीक्षितंस्वादुवन्यमांसंयदर्पितं सहस्रांशुतुलांतस्यनैवार्हत्याध्वरंहविः २५ माल्यंतत्केशविभ्रष्टंनिर्दो षंहेमपुष्पवत् पर्यटन्विपिनेनिघ्नन्सत्वान्जक्षन्पिबन्हसन् २६ नकिंचिदन्यत्संरभात्एवमेववनेचरः वारिपूरितगर्भोस्यमांसंपत्रेधनुःकरे २७ शिवार्चनार्थमायांतंखेचराःप्रशशंसिरे शिवार्चकःपरंतस्मिन्शबरे द्वेषमादधे २८ परंशंभुस्त्वतितरांशबरेप्रीतिमातनोत् अथैकदाद्विजःप्रातःपूजार्थंप्रागिवागतः २९ ददर्शलिं गमीशस्यशबरेमृगयांगते मांसकीकससंकीर्णंवसामंत्रितमक्षिकं ३० काकगृध्राकुलोपांतंश्वापदैःपरितोवृत्तं

तिजक्षन्भक्षयन् २६ २७ २८ २९ ददर्शेति कीकसान् अस्थीनि वसया मेदसा आमन्त्रिताःआकारिताःमक्षिकायेनतत् ३० ३१

देवेति सूनास्थानमिव पशुहिंसनस्थानमिव ३२ ३३ ३४ ३५ ३६ ३७ अथेति शाबरीं शबरसंबंधिनीं तद्वेषी शबरद्वेषी ३८ परी

देवस्थानमिदं पुण्यं सूनास्थानमिवाधुना पापेन द्रोहिणा केन कृतमेवं दुरात्मना ३२ अपराधं कथं नित्यं सहसे शबरैः कृतं हा हतोस्मि न मे मृत्युः किं पश्यसि महेश्वर ३३ न पश्यामि दुरात्मानं शिवलिंगविदूषकं गते मयि प्रतिदिनमेवं दूषयते खलः ३४ अद्य प्रक्षांतमिदं सर्व्वं श्वः सचाहं मृतो ध्रुवं इत्युक्त्वास्थीनि मांसानि स्वयमुत्सार्य दूरतः ३५ संप्रोक्षणविधिं कृत्वा गंधतैलादिलेपयन् सुवर्णमुखरीतोयकलशीशतसेचनात् ३६ शतरुद्रीयमंत्रेण पूजयित्वा महेश्वरं यथापूर्व्वं ययौ वेश्मन मुक्तिं विदधे शुचः ३७ अथ स्वप्ने तमाहेशः शाबरीं भक्तिमुत्तमां तस्मात्प्रियतरो नान्यस्तद्वेषी तु ममाहितः ३८ परीक्षणीया यदि ते भक्तिस्तस्य महात्मनः वसैकत्र निगूढस्त्वं रात्रौ गुल्मे परेहनि ३९ इत्युक्त्वांतर्धिमकरोत्कालहस्तीश्वरो विभुः अथा चैकः समुत्थाय भयात्पुलकितो निशि ४० नैव निद्रामवापायं स्मारं स्मारं विभोर्वचः शबरोपि यथापूर्वं पूजयामास चादरात् ४१ नीत्वा रात्रिं ययौ वन्यमाखेटाया रुणोदये द्विजोप्याजंतुसंचारदर्शनात्प्राक्समुत्थितः ४२ आगत्य कालहस्तीशमर्चयित्वा सविस्मयः उपांतवटवृक्षाग्रशाखामारुह्य संस्थितः ४३ अतिक्रांतेऽथ मध्यान्हे लम्बमाने दिवाकरे निहत्य विविधान्सत्वान् आदाय पिशितम्बहु ४४ स्नातः सुवर्णमुखरीवारिसंपूरिताननः मांसायुधकरः शंभोरंतिके समदृश्यत ४५ द्रुतमागत्य पादाग्रात्कृत्वा निर्माल्यशोधनं गण्डूषपयसा मौला वभिषेकं विधाय च ४६ ॥ ७ ॥

क्षणीयेति गुल्मे लतागृहे ३९ ४० नीत्वेति आसमंतात् जन्तूनां संचारदर्शनात्प्राक् किंचित् अवशिष्टायां रजन्यामित्यर्थः ४१ ४२ ४३

४७ ४८ ४९ वामेति आः इति पीडायां यद्वा आसमंतात् हतोस्मीत्यर्थः ५० ५१ ५२ अर्चकेति अर्चकापसदस्य अधमपूजकस्य आगोपराधः

क्षिपन्केशस्थितंपुष्पंपिशितानिन्यवेदयत् यथापूर्वमभुंजानमिदमाहमहेश्वरम् ४७ विलंबसेकथंदेव
मांसंमधुरसाप्लुतं भुंक्ष्वाद्यस्त्वयमेवास्मिश्रांतोदूराद्धनंगतः ४८ इत्युक्त्वाचिकुरान्व्याधोदृष्टिमार्गनिरोधिनः
सन्नद्धोशंभोजयितुंमांसहस्तोतिकंपयौ ४९ वामनेत्रस्रवद्रक्तंमुखमालोक्यशांभवं आहतोस्मीतिशबरःपरां
मूर्छामवापह ५० क्षणादुत्थायविरुदन्ममार्जरुधिरंदृशः पुनश्चरुधिरंतस्मान्नयनादपतद्बहु ५१ गजदंता
भिघाताद्वामृगाणांवाखुराहतं देवदेवस्रवद्रक्तंनववामविलोचनात् ५२ अर्चकापसदस्यागोमहदस्तिनः
संशयः अस्तुवायेनवाकेनदृग्रोगस्तेनशाम्यति ५३ यावत्तावन्नभोक्ष्येहंत्रातमस्त्यौषधंचमे इत्यरण्याद्रुपा
दायविशल्यकरणीरसम् ५४ असिंचन्नयनेशंभोःदृग्विकारस्तथैवसः व्याधोपिमूलिनश्चक्रेभैषज्यंविविधौ
षधैः ५५ नशशामयदातावदेवंचक्रेसनिश्चयं ममनेत्रार्पणेनास्यविकारःशांतिमेष्यति ५६ करिष्यामितथै-
वाहंनान्यत्सिद्धौषधंभवेत् इत्युत्कृत्यशरेणाक्षिनिदधेभगवद्दृशि ५७ विकारःशंभुनेत्रस्यशशाममुमुदेचसः उ
पाजहारपिशितंदक्षिणाद्रक्तमीक्षणात् ५८ धारात्तमपतच्छंभोःव्याधश्चिंतामवापह नतेरोगोमहादेवममभ
क्तिंनिरीक्ष्यसे ५९ अन्यदप्यक्षिदद्यांचेत्सपर्यास्वित्कथंभवेत् किंव्याधपूजयादेवदक्षिणाक्षिगृहाणमे ६० इ
त्यर्पयिष्यन्व्याधेंद्रोद्वितीयमपिलोचनम् क्षणंविचारमगमत्लक्ष्यज्ञानंकथंन्विति ६१ ततोबुद्धिःसमुत्पन्नाव्याधवंशशि

५३ ५४ ५५ ५६ ५७ ५८ ५९ अन्यदिति सपर्या पूजा कथंस्वित् न भवेत् केन प्रकारेण स्वित् प्रश्ने च विकल्पे चेत्यमरः ६० ६१ तत इति चर

णांगुष्टं तदपिदक्षिणंईशस्य दृग्पथे दृष्टिस्थाने स्वनेत्रस्थापनपरिचयायेत्यर्थः नेत्रद्वयापहरणे स्वस्यांध्यप्रसक्तेरितिभावः ६२ ६३ ६४
६५ ६६ ६७ नेतिप्रसादादिति त्वद्भक्तोपिपंचमीप्रसादंविहाय परमन्यत् किञ्चित् नचकमेनाचकांक्ष्ये ६८ ६९ इतिश्रीमानवल्लुपनाम्नः

उन्मूलयिष्यन्नयनंनिदधेशस्त्रमक्षिणि सः आविर्भूयतदादेवोभ्यनंदत्समहेश्वरः ६३ ववर्षुःकुसुमासारान्खेचं
राःशबरोपरि ददर्शवृषभारूढंसोमास्कंदंमहेश्वरम् ६४ सेव्यमानपदांभोजंगणेन्द्रैरष्टषष्ठिभिः प्रणम्यशं
भुंव्याधोभूत्त्रिनेत्रस्तदनुग्रहात् ६५ तमाश्लिष्यमहादेवःप्राहगंभीरयागिरा मद्भक्त्यापरिपूतस्यनजातिर्वि
घ्नसाधनम् ६६ भवेन्मद्भक्तिशून्यस्यसंन्यासोऽपिनसिद्धिदः इत्यास्थितिस्तेकैलासेकिमन्यदीप्सितंतव ६७
नकिंचिच्चकमेव्याधःप्रसादाच्चपरंविभोः सहतेनैवभगवान्ययौकैलासमीश्वरः ६८ दत्वास्वमासनयनेशबरो
पियस्मै दूरीचकारमहतीमयिकालभीतिं वन्देसमस्तसुलभार्चितपादपद्मंतंचंद्रशेखरमपारदयाम्बुराशिम्
६९ इतिश्रीस्कंदोपपुराणेपंचविंशोऽध्यायः २५॥ ॥ ॥श्रीअगस्त्यउवाच येनकेनापिनियमात्पूजयंतिमहे
श्वरं येधन्याःशंकरस्तेषामचिरेणप्रसीदति १ अस्मिन्नर्थेपुरावृत्तंइतिहासंब्रवीमिवः यस्यश्रवणमात्रेणशिवभ
क्तिःप्रजायते २ दक्षिणापथमध्येस्तिचोलभूमौविभूषणं कलशीपुरमित्याहुःयदिहब्राह्मणोत्तमाः ३ यत्रप्री
तोमहादेवोमृकंडुसुतपूजया निहत्यकालंपादेनचक्रेतंचिरजीविनम् ४ चतुर्वेदविदांस्थानंतदासीदग्रजन्मनां शि

कन्नसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांनीलोपाख्यानंनामपंचविंशोऽध्यायः २५॥ ॥ ॥भक्तिमेवोपो
द्बलयन् इतिहासान्तरमाह येनेति येनकेनापिपूजाद्रव्येणेत्यर्थः १ इतिहासमेवावतारयति अस्मिन्निति २ ३ यत्रेति मार्कण्डेयोपाख्या

नंपुराणान्तरादवगंतव्यं ४ ५ ६ सदिति कर्मब्रह्मणोः विवक्षया वक्तुमिच्छया अन्येभ्यः उपदेशतात्पर्येण सर्थः पुनर्भवः संसारः ७ अविधा



तत्रास्ति ब्राह्मणः कश्चित्कलानाथ इति श्रुतः वेदशास्त्रागमांभोधिपारदृश्वा गुरुः सताम् ६ स शास्त्रं सर्वमालोक्य कर्मब्रह्मविवक्षया कथंचिन्निश्चयं चक्रे यथा न स्यात्पुनर्भवः ७ अविधाय यथा पूजां न मे भक्तिर्भविष्यति शिवभक्त्या विना जंतुर्मृत्युं नातितरिष्यति ८ तस्माद् धनिवृत्त्यर्थं विधेयं गिरिशार्चनं नियमे द्रव्यसंपत्त्या कया पूज्यो मया शिवः ९ केन स्यातिशयं भूयाच्छिवार्चनमिति द्विजः परीक्ष्यागममर्माणि धूपे बुद्धिं दृढां दधौ १० तस्य भार्या च सुमतीनामे दोरिव चंद्रिका तया सह द्विजः शंभोः पूजाया नियमं दधौ ११ द्रोणगुग्गुलुधूलीभिः धूपं देवाय शंभवे कलानाथवितीर्णेन धूपजालेन भूयसा १२ पूजाकाले पुरारातेः सर्वाश्चामोदिता दिशः परीक्षितुमनास्तस्य भक्तिं परमपावनीम् १३ विघ्नं चकार सर्वेत्र तस्य द्रव्यागमो यतः धने ष्वलभ्यमानेषु कलानाथो महामतिः १४ स्वभूषणानि विक्रीय नियमं पर्यपालयत् कंठसूत्रस्थितं हेम विना भार्याविभूषणम् १५ विक्रीय पूजयामास शिवं गुग्गुलुधूपतः धान्यक्षेत्रगृहादीनां विक्रयादपि गुग्गुलुम् १६ संपाद्य धूपयामास सन्निधिं चंद्रशेखरीं भार्यायनशनात्पुत्राः कृशाङ्गास्तस्य जज्ञिरे १७ हसंति स्म जनाः शंभोः प्रसादः सुमहानिति तथापि नात्यजद्धूपदानं धीरः शिवाग्रतः १८ अथैकस्मिन्दिने नष्टः सुर्वे गुग्गुलुसंचयः नास्ति प्रसृतिमात्रं वा धान्यतंडुलमालये १९ यदा तदा कलानाथः प्राह भार्यां पतिव्रतां तवाहं साध्वि साहाय्याद् पूजयं महाप्रभुम् २० आसीत्तत्क्षणपर्यंतं केन स्याद्द्य पूजनम् इति भर्तुर्वचः श्रुत्वा

येति तमेव विदित्वातिमृत्युमेतीति श्रुतेः ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ॥

किमस्तिभवदज्ञातंभक्तिमीशःपरीक्षते नियमंपालयाद्यापिमांगल्यमणिविक्रयात् २२ इतिभर्तुर्देदोह्नः स्तेसूत्रमात्रधरासती वदादायकलानाथःप्रीतास्तुतवशंकरः २३ इत्युक्त्वापणमासाद्यगुग्गुलुद्रोणिकागतं विक्रीयतद्गृहीत्वाथसायंदेवार्चनंव्यधात् २४ कुबेरःशिवसंदिष्टःप्रदोषेतस्यवेश्मनि ववर्षकांचनींधारांमेरुतुल्यांसमंततः २५ प्रसदृश्यंतगोष्ठेषुभूयस्यःकामधेनवः महामूल्यानिपात्राणिदासीदासाःसहस्रशः २६ क्षौमाभरणकोशाश्चधान्यकोशाःपरःशतं पयःफेनोज्वलाःशय्याश्चोद्याननंदनोपमम् २७ आसीत्स्वप्नेतुतद्भार्यांतवैतानीतिशंकरः बोधयित्वास्वयंदेवःतत्रैवांतरधीयत २८ अथस्तुत्वाकलानाथोत्रियामाप्रहरावधि महेश्वरंप्रणम्याशुप्रतस्थेमंदिरंनिजम् २९ स्वमिंद्रभुवनप्रख्यंवेश्मदृष्ट्वातिविस्मितः किमेतदितिपप्रच्छदासीदासाभिनंदितः ३० प्रत्याहसाध्वीतसूजाप्रसन्नेनपिनाकिना भुंक्ष्वभोग्यानिदत्तानिदुर्लभान्यपिदैवतैः ३१ श्रीमांगल्यमणिक्रीतगुग्गुल्वर्पणतोषितात् शंभोःप्राप्तंत्वदैश्वर्यंपश्यशंभोरनुग्रहम् ३२ इतिभार्यांवदन्धीरःसोन्नदानपरोभवत् अर्चयामासहरवच्छिवभक्तान्समागतान् ३३ गृहक्षेत्रान्नवसनवाहनाभरणादिभिः द्विगुणंधूपमीशस्यचक्रेगुग्गुलुधूलिभिः ३४ अथचोलेश्वरःश्रीमान्नत्रदूरेलिंगमैश्वरं अंतराभुग्नमतनोत्ऋजुकर्तुंसमुद्यमम् ३५ तादृकापूजनमितिक्षेत्रंलोकेषुविश्रुतं बहवोमिलितास्तत्रनानादेशांतरागताः ३६ जनाराजान्वहंचक्रेलक्षब्राह्मणभोजनं आकृष्ययत्नान्मनु

 ३८ ३९ ४० ४१ ४२ ४३ ४४ इतीति तल्लिंगं जिह्मतां कुटिलतां जहौ तत्याज ऋजुबभूवेत्यर्थः ४५ ४६ ४७ ४८ ४९ 

यथा तथापरं यत्नं चोलेन्द्रः स चकार ह गजैर्द्वादशसाहस्रैर्हस्ताग्राकृष्टदामभिः ३८ अथाकृष्टं महालिंगं नर्जो सीत्समहीपतिः उपोषितश्चोलपतिः परां चिंतामवाप ह ३९ अथ द्विजा नृपं प्रोचुः कलानाथस्त्वयार्चितः यद्यागतस्त दा नूनमुपायं स विधास्यति ४० स्वयमागत्य चोलेन्द्रः प्रार्थयामास तं द्विजं स तथेति समाहूतः स्थानं तत्प्राप शांकरम् ४१ आभुग्नं लिंगमालोक्य बहुधा विहितस्तवः स्नातः कृतजपः शुद्धो भस्मरुद्राक्षभूषितः ४२ निवार्य लौकिकं कोपायान् उत्सार्य च बहिर्जनान् स्वकंठे शिवलिंगे च कृत्वैकं दामसांजलिः ४३ ऋजूकरिष्यन्नित्याह वक्रतेयं कुतस्तव ऋजूभव महादेव नो चेन्मे मरणं ध्रुवम् ४४ इत्युक्त्वा विचकर्षेशं लिंगं तज्जिह्मतां जहौ चोलेंद्रः प्रणमन्त्यादे लिंगं वीक्ष्य ऋजूकृतम् ४५ कांक्षितं किं वदेत्याह कलानाथं द्विजोत्तमं अभिषेकजलाधारघटानयनकिंकरान् ४६ गजान् द्वादशसाहस्रसंख्यातान्तस्य शासनात् विदधे देवदेवस्य चोलेंद्रश्चातिविस्मितः ४७ दिवि दुंदुभयो नेदुः पुष्पाणि ववृषुः सुराः प्रशशंसुश्च तत्कर्म खेचराः चारणैः सह ४८ यथापूर्वं कलानाथः स्वपदं प्राप्य पूजयन् शंभुं गुग्गुलुधूपेन देहांते मुक्तिमाप्तवान् ४९ श्रीमत्कलानाथचरित्रमेतत्पठंति शृण्वंति च ये मुनींद्राः आयुः श्रियं भक्तिमपीह शंभुर्मुक्तिं च तेषां भगवान्ददाति ५० इति श्रीस्कंदोपपुराणे षड्विंशोऽध्यायः २६॥ ॥ ७ ॥ संति लोका महाभागाः भक्तापेक्षितदानतः अवापुर्दुर्लभां मुक्तिं प्रसन्नात्सार्वतीपतेः १॥ ॥

फलस्तुतिमाह श्रीमदिति ५० इति श्रीमानवल्युपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां षड्

विंशोऽध्यायः २८॥ ॥ १ ॥ उपायान्तरेषु सत्स्वपि भक्त्यैवमुक्तिर्भवतीति द्योतयितुं पुरावृत्तमारभते सन्तीति १ माहेश्वराद्विति शैवादृत्य
र्थः आस्पदमिति २ ३ तदेवस्थानं वर्णयति बालेति बालानां षोडशवार्षिकीणां करांबुजैः करकमलैः आलूनानि आसमन्तात् छिन्ना
नि यानि कल्हाराणि सौगंधिकानि तैः वासितैः सुरभितैः समृद्धैः पूर्णैः स्रैः प्रवाहैः अभितः संवृतं कुसुमाकरैरिति उद्यानविशेषणं ४ ५
नृत्यदिति नृत्यतां जातितुरंगाणां जात्यश्वानाम् अंघ्रिभिः संक्षुण्णं चूर्णितं उदरं यस्याः तादृशीमंदुरा वाजिशाला यस्मिन् किञ्च कृशांगीजन

माहेश्वरा वदंतीममितिहासं महाद्भुतं श्रवणाद्यस्य पापानि विलयं यांति देहिनाम् २ आस्पदं संपदामस्ति श्रीम
संचनदेश्वरं षडंगवेदविदुषामास्पदं तद्द्विजन्मनाम् ३ बालाकरांबुजालूनाशेषकल्हारवासितैः स्रैः समृ
द्धैरभितः संवृत्तकुसुमाकरैः ४ उद्यानैस्संनिषण्णमत्तमधुव्रतकुलस्वनैः वीथीविहारविश्रांतदंतिदानाधिवा
सितम् ५ नृत्यज्जातितुरंगांघ्रिसंक्षुण्णोदरमंदुरं कृशांगीजनसंगीतहृतसोपानवापिकम् ६ यायजूकमखा
रब्धशालाशतसमुज्वलं प्रशांतहरिणोपांतमठार्चितमुनिव्रजम् ७ शिवभक्तद्विजाधीतशतरुद्रीयनादितं क
र्मकांडब्रह्मकांडवादिमंदिरशारिकं ८ दिवः प्रतिनिधीभूतं चतुर्वर्णनिषेवितं यत्र संपूजितो भक्तैः सन्निधत्ते
सदाशिवः ९ तत्रासीदुत्तमो राजा महेंद्रसमविक्रमः यस्यन्यायार्जितं द्रव्यं स्पर्द्धते मेरुणा समम् १० ॥ १ ॥

स्यकान्ताजनस्य सङ्गीतेन हृताभिद्रुवीभूतानि सोपानानि आरोहणानि यासां तादृश्यो वापिका यस्मिन् ६ यायजूकेति यायजूकाः इज्याशी
लाः यज्ञकर्त्तारः प्रशान्ताः हरिणाः येषु तादृशैः उपान्ते मठैः छात्रादिनिलयैः अर्चिताः मुनिव्रजाः यस्मिन् ७ शिवेति कर्मकाण्ड
ब्रह्मकाण्डवादिनः द्विजाध्ययनसंतानपरिचयेन स्वयमप्यधीयानाः मंदिरशारिकाः यस्मिन् ८ ९ १० १

११ १२ १३ १४ ऐश्वर्येति स्मयवर्जितः गर्वरहितः १५ १६ १७ १८ १९ २० कुटिलेति निटिलस्य भालस्य अन्ते समीपे ललं



निस्यान्नदाननिरतोविख्यातोदिक्षुसर्वतः मानविक्रमशालित्वान्मानविक्रमनामकः ११ प्रजास्सपालयामासः
पितापुत्रानिवौरसान् प्रतिजज्ञेसभूपालःशिवभक्तेष्टपूरणे १२ प्राणपर्यंतदानेऽपिभक्तानांतन्मतिस्थिरा सना
स्तिशिवभक्तोत्रराज्ञायस्तेननार्चितः १३ भार्याकलावतीतस्यभानोरिवसुवर्चला तयोर्बभूवदांपत्यंरतिमन्म
थयोरिव १४ ऐश्वर्येवर्त्तमानोऽपिमहतिस्मयवर्जितः नबभूवतयोःपुत्रःततश्चिंतापरोनृपः १५ भार्ययासहदे
वेशमपत्यार्थमहेश्वरं उपास्ततेनसंतुष्टोप्राहतंचंद्रशेखरः १६ नजन्मन्यत्रपुत्रस्तेकन्याकाचिद्भविष्यति इ
त्युक्त्वांतर्दधेशंभुर्मुदितौतौबभूवतुः १७ गतेनातिचिरेकालेकन्याकाचिदजायत नष्टेवदृष्टिरंधस्यजाताशंभो
रनुग्रहात् १८ जातकर्मचकारास्यामुदितोमानविक्रमः षोडशेदिवसेनामसुकेशीतिव्यधत्तसः १९ माणिक्यमंचम
ध्यस्थाशयनेचत्तमशायिनी दिनेदिनेसाववृधेचांद्रीलेखायथोदिता २० कुटिलालकसंवीतंनिटिलांतललंतिकं चटु
लेक्षणमुन्मीलद्दंतमालोक्यतन्मुखम् २१ अभ्यनंदन्महीपालोनिधिंदृष्ट्वेवनिर्धनः घनसाररजःसांद्रस्वांकणेकृतचंक्रमा
म् २२ जानुभ्यामपिबाहुभ्यांनिर्निमेषमुदैक्षत धूलिकेलिपराबालाधूसरालकजालका २३ स्फुरदेकावलीशिंजत्कां
चीनूपुरकिंकिणी तनुपट्टांबरधरातरुणायतलोचना २४ विस्मृताहारमवहद्विकाररसिकंमनः कुबेराक्षीभिरन्यासांपां

तिका लंबमानमुक्ताहारविशेषः यस्यतत् २१ अभ्यनंददिति घनसारःकर्पूरं २२ २३ स्फुरदिति एकावली एकयष्टिर्हारः २४ वि
स्मृतेति विस्मृताहारमिति क्रियाविशेषणं विकाररसिकंक्रीडासक्तं कुबेराक्ष्यःकरंजफलानि क्रीडासाधनानि कंदुकाःगेन्दुकाः

चिक्रीडेति सखीनांनयनाच्छादनादिना अन्योन्यनेत्रनिमीलनक्रीडया २६ क्रीडेति उद्भ्रान्तानि निर्गलितानि हल्लकानि सौगंधिककुसुमानियस्मात् २७ २८ २९ अतीतेति आसन्नः उपस्थितः कुसुमोदयः ऋतुप्रादुर्भावः यस्यास्तां ३० यथेति महामौल्यो मणिःशाणोपलनिघर्षणात् निकषोपलसंघर्षात् अतिरमणीयोभवति तथेत्यर्थः मरालानां हंसानां आवलिःपंक्तिरेव आवलिकाः तयाअध्येयं अध्येतुंयोग्यं

चिक्रीडसायंचसखीनयनाच्छादनादिना पुनःपुनश्चनिस्तीर्णकबरीसंवृताननम् २६ क्रीडांतरेषुबालायाःस्रस्तमुद्भ्रांतहल्लकं हिंतालस्तबकाकारंकुटिलंकबरीभरम् २७ जनोविलोक्यनगरेविस्मयंपरमंययौ चिकुरांतरमात्रंतदावृतोर्ध्वमुखाम्बुजम् २८ प्रवृद्धकबरीभारंचंद्रोपरितमोयथा वर्द्धमानागृहेतस्यमेरौहेमलतेवसा २९ अतीतबाल्यापदेशामासन्नकुसुमोदयां अलंचक्रेथतारुण्यबालामव्याजसुंदरी ३० यथामणिर्महामौल्यःशाणोपलनिघर्षणात् मरालावलिकाध्येयसौकुमार्यगतिश्रियम् ३१ नखप्रभासमासक्तपरभागांघ्रिपंकजां शालिगर्वधमांवृत्तजंघांनिस्तुलजानुकाम् ३२ रंभाप्रकांडस्निग्धोरुंपत्रावलिविभूषितां मेरुकांतारतटिनीपुलिनारोहमंथराम् ३३ मनोभवरथाकृष्टचक्रचारुनितंबिनीं सद्रससंशयाधारमध्यांवटदलोदरीम् ३४ स्तनाद्रिचरतारुण्यद्विपांदूरोमराजिकां वलित्रयप्रभाधूतनिकषस्वर्णरेखिकाम् ३५ अहिनिर्मोकधवलसव्यानस्थगितोरसं स्निग्धपल्लवक

सौकुमार्यंयस्याः तादृशीगतिश्रीःगमनशोभायस्यास्तां ३१ नखेतिनखप्रभयासमासक्तःसंलग्नःपरभागोगुणोत्कर्षोययोस्तेअंघ्रिपंकजेयस्यास्तां शालीनांधान्यविशेषाणांगर्वंधमतिनाशयति सावर्ण्यादितिभावः निस्तुलेवर्तुलेजानुनीयस्यास्तां ३२ रंभेति रंभाप्रकांडौ कदलीस्तंभाविव ऊरूयस्यास्तांपत्रावल्या मकरिकापत्ररचनयाविभूषितांमेरुकान्तारेयातटिनी तस्याःपुलिनंसैकतमिव आरोहःनितंबस्तेन

मंथरांमदगामिनीं ३३ ३४ स्तनेति स्तनावेवाद्री तयोश्चरनितादृशोयः तारुण्यमेववद्विपोगजः तस्यश्रृंखला निगडभूतारोमराजिःयस्यास्तां ३५ अहीति अहिनिर्मोकवत् सर्पत्वगिव धवलेन संव्यानेन उत्तरीयेणस्थगितमाच्छादितं उरोवक्षःयस्यास्तां ३६ ३७ लावण्येति ॥ लावण्यंनाममुक्ताफलेषुच्छायायास्तरलत्वमिवांतराप्रतिभातियदंगेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणंचारुत्वकं तदेवामृतंतस्य संदोहेन समुदायेनसमाना रदनानां दंतानांत्विट् कांतिर्यस्यास्तांकपोलयोः श्रियाजितं अनंगरत्योः विभ्रमदर्पणं विलासमुकुरः यस्या

कंठनालपराभूतपांचजन्योदराश्रियं बिंबाधरांतविश्रांतमंदस्मितमनोहराम् ३७ लावण्यामृतसंदोहसमान
रदनत्विषं कपोलश्रीजितानंगरतिविभ्रमदर्पणाम् ३८ उन्नमन्नासिकाधूतवज्रपुष्पसदोदयां लावण्यलह
रीचारुविहरन्मीनलोचनाम् ३९ विश्रांतयमुनावीचीभ्रूविभ्रमविमोहिनीम् ॥ चतुर्थीचन्द्रसश्रीकलला
टतिलकोज्वलाम् ४० कर्णाभरणमाणिक्यमयूखालंकृतालकां अंशुकाडंबराक्षिप्तकिंशुकप्रसभप्रभाम् ४१मं
जीरमेखलाहारग्रैवेयकटकांगदैः मासामौक्तिकताटंकचूडामणिविभूषणैः ४२ भूषितांमान्मथींमूर्तामिंदुजाल
कलामिव कलालापसुधाधूतगंधर्वोतोद्यतंत्रिकाम् ४३ तांदातुंचक्रमेतत्रोत्कलिकामापभूपतिः लग्नंश्रुभंवि
निश्चित्यनगरींसमभूषयत् ४४ आहूताबांधवास्तेनसमवेताःतदालये राजानश्चाययुःसर्वेनानोपायनपाणयः ४५

स्तां ३८ उन्नमदितिउन्नमंत्यानासिकयाआधूतंकंपितं यद्वज्रपुष्पंनासाभरणं हीरदलं तस्यसदोदयः सार्वकालिकप्रकाशोयस्यास्ताम् ३९
विश्रान्तायायमुना वीची तरंगःसेवयाभ्रूः तस्याविभ्रमेणविलासेन विमोहिनीं विशेषेणमोहनकर्त्रीं चतुर्थीचंद्रेणसश्रीकं समानकान्ति
यल्ललाटंतत्रतिलकेनउज्वलां ४० ४१ ४२ ४३ तामिति उक्तविशेषणविशिष्टांतांकन्यांदातुंचक्रमे व्ययेषतत्र कन्यादाने भूपतिःउत्क

लिकां उक्तंतांआप ४७ ४५

४६ तोरणैरिति सर्वा वीथ्यः तोरणैः पल्लवपुष्पादिरचितवंदनमालिकाभिः गांगैः गंगासंबंधिभिः ऊर्मिभिस्तरंगैरिव भूषिताः ४७ तत इति कलिकामः तन्नामकोवरः ४८ ४९ शंखेति कुलपालिकाः कुलस्त्रियः ताश्चताः सत्यः पतिव्रताः पुंवत्कर्मधारये त्यादिना पुंवद्भावः ताभिः मुक्तैः लाजैः पुष्पैश्च निरंतरां निबिडां अस्य विवाहवेदिकामित्यग्रिमेणान्वयः ५० ५१ ५२ ५३ केशेति केशदामनि केशपंक्तौ परि

ध्यानशेनगरं सर्वं धूपः कालागरूद्भवः दिशो मुखरयांचक्रुः वादित्राणि समंततः ४६ तोरणैर्भूषिता वीथ्यः सर्वा गांगैरिवोर्मिभिः अभ्यनंदन् परिजनाः तदुद्वाहमहोत्सवम् ४७ ततः सन्निहिते लग्ने कलिकामो विभूषितः स्व बंधुभिर्गजारूढो ययौ राजनिवेशनम् ४८ प्रत्युज्जगाम राजापि कन्यामादाय भूषितां भूषयामास कन्यां च वस्त्रा भरणचंदनैः ४९ शंखतूर्यमृदंगानां नादे व्योम्नि विसर्पति कुलपालिकसन्मुक्तलाजपुष्पनिरंतराम् ५० विवा हवेदिकां तत्र कलिकामो विवेश ह एकासनस्थितौ वीक्ष्य बांधवास्तौ वधूवरौ ५१ दांपत्यमेतयोरासीन्नरतिमन्म थयोरिव एवं संभाषमाणास्ते चक्षुः प्रीतिं परां दधुः ५२ तदा माहेश्वरः कश्चित् प्रत्यदृश्यत संसदि आपादमस्त कं शुद्धभस्मनालिप्तविग्रहः ५३ केशदामपरिष्वक्तवराटशतसंवृतः कर्णद्वितयसंस्यूतमहास्फटिककुंडलः॥ ५४ कपालपात्रं बिभ्राणः परश्शुं च करे परे किंचिदापूरणीयांतां बिभ्रत् संचवटीमयीम् ५५ भुजंगकटिसूत्रांतकं याकौपीनभूषणः आपीनांसो महाबाहुः मांसलो रक्तलोचनः ५६ भाषया भीषयन् सर्वान् उपागान्मानविक्रमं अथ संपूजि

ष्वक्तेन संसक्तेन वराटशतेन कपर्दिकाशतेन संवृतः एवं कर्णद्वितये संस्यूते महास्फटिककुंडले यस्य स तादृशः ५४ कपालेति किंचित् आपूरणीयः अंतः अंतभागो यस्याः तां पंचवटीमयीं पंचवटपत्रनिर्मितां द्रोणीमित्यर्थः बिभ्रत् दधानः ५५ भुजंगेति भुजंग एव कटिसूत्रं

तेनअंतरम्यं कंथाकौपीनरूपंभूषणंयस्यतादृशः ५६ भाषयेति मानविक्रमंतन्नामकंराजानं ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५

जनानांसंभ्रमःकोयमितिपप्रच्छभूपतिं संप्रीतश्चमहीपालःतापसंप्राहसांजलिः ५८ सुकेशीममकन्येयंकलिका
मायदीयते दिष्ट्यामुहूर्तसमयेप्राप्तस्त्वंकिमपेक्षितम् ५९ अथराजवचःश्रुत्वाकंपयन्मौलिमात्मनः माहेश्वरस्तं
प्रत्याहदीयतेयदिचोच्यते ६० प्रतिजज्ञेनृपतिनातथेत्याहसतापसः मह्यंकथंशृणुमाकार्षीरमर्षमानविक्रम
६१ असंपूर्णामिमांपश्यप्रियांपंचवटीमम विलूयकन्याकबरींदीयतांकिंविलंबसे ६२ तदाकार्ण्यजनाःसर्वे
कर्णेविन्यस्तपाणयः हतहतेतिजगदुःचुक्षुभेनमहीपतिः ६३ माहेश्वरःपुनःप्राहदीयतेचेन्नगम्यते इत्युत्था
तुंकृतोद्योगमुपवेश्यवरासने ६४ वंदस्वतापसमितिप्राहकन्यांनिजांनृपः वंदनंचापिभार्यायाःकथमित्यव
लोकयन् ६५ उत्तिष्ठंत्यानमस्कृत्यासुकेश्याःकबरीभरं विलूयामूलमुत्फुल्लहल्लकामोदवासितम् ६६ निज
श्छुरिकयाधीरोनिःशंकंशंकरप्रियः मायामाहेश्वरायादात्सकेशःसतिरोदधे ६७ कलिकामस्यवदनेयावत्कार्ष्ण्यं
विदृश्यते तावत्सएवधम्मिल्लोराजपुत्र्याव्यवर्धत ६८ देवोपिवृषभारूढोनृपतेरग्रतोभवत् शतशःप्रणनामेशं
भीतिमान्समहीपतिः ६९ कलिकामोपितांकन्यांउद्वाहेश्वरशासनात् प्रीतिमापपरामिंद्रःपुलोमतनयामिव ७०
परीक्षितोसिराजनस्त्वंदृढाभक्तिर्यतोमयि दत्तामुक्तिरितीशोपितेनापरजताचलम् ७१ स्वकालपाशेनसहावलूयभ

६६ ६७ कलिकामस्येतिकृष्णवर्णतावैवर्ण्यमित्यर्थः ६८ ६९ ७० परीक्षितइति ईशोपितेनराज्ञासह रजताचलंकैलासमापेत्यन्व
यः ७१ स्वेति स्वस्यकालपाशेनसहतनूजायाःकन्यायाःघनकेशपाशंविलूयभक्त्या केशपाशदानस्यकालपाशनाशकत्वात् तेनस

हकालपाशनाशइतिभावः वदान्यायदात्रे राज्ञे दत्ताभयः पिनाकपाणिः शिवः भवापदः संसारविपत्तेः सकाशात्‌नः पातु ७२ इतिश्रीम‌न्नवल्युपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां सप्तविंशोऽध्यायः २७॥ ॥ॐ॥ सम्प्रति मुक्त्युपायस्य सौलभ्यं दर्शयति मुक्तीति १ द्रव्येति द्रव्यादीनां होमसाधनीभूतघृतादीनां शुद्धयः संस्कारजन्याः पवित्रताः क कुत्र

राज्ञे वदान्याय पिनाकपाणिः दत्ताभयः पातु भवापदो नः ७२ इतिश्रीस्कंदोपपुराणे सप्तविंशोऽध्यायः २७॥ ॐ

श्रीअगस्त्य उवाच मुक्त्युपाये तिसुलभे विना यत्नेन देहिनः यतंते दुर्लभेप्यत्र साहसं किमतः परम् १ द्रव्यदेशक्रियाकालमंत्रकर्त्रादिशुद्धयः क्व पत्नहेतवः कार्यं विषयव्याप्टतो जनः २ क्वनु वैराग्यनिष्ठायाः सीमा ब्रह्मादिदुर्लभम् क्वनु वेदांतविज्ञानं तत्साध्यं क्वायमल्पधीः ३ तस्मादन्यत्परित्यज्य विशिष्य च कलौ युगे भक्तिरेव महादेवे कर्त्तव्या मुक्तिमिच्छता ४ पूजनीयः सदा शंभुः कालकर्मभयापहः अक्लेशशुद्धद्रव्येण प्रसीदत्यर्चितो विभुः ५ लिंगार्थे सुलभो नद्यां सिकतादिश्च निर्मलः जलदूर्वादि विपिने कर्त्तव्यः सत्कृतांजलिः ६ एतत्कर्तुमशक्तस्य ज्ञानं चेत्सुलभं भवेत् आकाशचंद्रग्रहणं शिशोश्च सुलभं तदा ७ अपि शाकं नियमतो भक्त्या शंभोः समर्पयेत् यो वा को वापि मुच्येत संसारात्स समुच्यते ८ अस्मिन्नर्थे पुरावृत्तमितिहासमिमं विदुः शृणुत श्रद्धया विप्राः भक्त्या माहात्म्यमुत्तमम्

अयं जनः क्वेति अननुरूपघटनात्मकविषमालंकारेण कर्ममार्गेण मुक्तिर्दुर्ल्लभेति दर्शितं २ ३ भक्तिमेव गुर्वीकुर्वन् उपसंहरति तस्मादिति ४ ५ शिवपूजायाः सौलभ्यं दर्शयति लिङ्गार्थे मिति ६ एतदिति अत्र मिथ्याध्यवसित्यलंकारेण आकाशचन्द्रग्रहणमिव शिशोः शिवपूजामकुर्वतः ज्ञानं दुर्लभमिति प्रतिपादितं ७ शिवपूजायां अल्पेन वा येन केनचित् द्रव्येण भक्त्या नियमतः समर्पितेन शिवः प्र

इतिहासमवतारयति अस्तीतिशालिभिःसहोद्भूतैः कान्तारमेवकान्तारकं तदुद्भवैः इक्षुजन्यैरपि इक्षुभेदश्चकान्तारइति अनेकार्थध्वनिम



अस्तिशालसहोद्भूतैरपिकांतारकोद्भवैः मौक्तिकैःसांद्रकेदारोदेशश्चोलेंद्रपालितः १० सूर्याश्वखुरनिर्भिन्ननारिकेलफलांभसा निष्यंदैर्यत्रविच्छिन्नैर्नदीमातृकतांगतः ११ कावेरीतीरपर्यंते तत्रास्तिचपुरंमहत् चतुर्वर्णाश्रमयुतंनामतःकणमंगलम् १२ अस्त्येकःशंकुलादायनामागांगेयवंशभूः हालिकोदिक्षुविख्यातःशिवभक्त्यर्चनेरतः १३ सक्रोशद्वयमात्रस्थेश्रीचिदंबरनामके बाल्यएवपरांभक्तिमुवाहानन्यदुर्लभाम् १४ तस्यभक्तिमतीनामभार्यातुल्यान्वयाभवत् तयासहप्रतिदिनंचिदम्बरमहेश्वरम् १५ नत्वानियमनैवेद्यंदत्वाभुंक्तेनिशामुखे ॥ श्रीऋषयऊचुः किंवानियमनैवेद्यंशंकुलादायकल्पितम् १६ वदैतत्कुंभयोनेनःप्रीतोयेनसभापतिः श्रीअगस्त्यउवाच नवीनशालिसंभूतंशुद्धतंदुलमक्षतम् १७ ससंपाद्यचशाकंचसहचूतशलाटुकं प्रयच्छतिनटेशायकृत्वासंकल्पितंव्रतम् १८ कारयत्यभिषेकंचविशेषदिवसेसति तस्यैवंवर्त्तमानस्यगताःषोडशवत्सराः १९ तस्यभक्तिपरीक्षार्थमासीत्कौतुकवान्हरः महामारीप्रकोपेननष्टंगोधनमुत्तमम् २० सस्यानितस्यनष्टानिह्यनावृष्ट्याथमंदिरं सधान्यधनकोशंचवन्हिर्दग्धंक्षणादभूत् २१ तथापिचुक्षुभेनैवसभक्तःसहभार्यया कृषिमानर्थमादायशंभोःपूजामचीकरत् २२ शकटंनिष्कुटेस्वीयेबहुधासमवर्धयत् तेनतौदंपतीकृत्वावृत्तिंतुष्टौचिरार्जितैः २३

न्त्वर्यां मौक्तिकैःताम्रपर्णीमिलितस्यसमुद्रस्यमुक्ताप्रभवत्वादितिभावः सान्द्राणिकेदाराणिक्षेत्राणियस्मिन् १० सूर्येति अनेन नारिकेलतरुणांताव दोल्लत्वंसूचितं ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ शकटमिति निष्कुटेगृहारामेशाक

२४ २५ २६ २७ २८ २९ इतीति ग्राविग्रापाषाणे ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कं

शालिभिःशंकरस्यैवनियमार्चांवितेनतुः कोद्रवैश्चापिगोधूमैःश्यामाकैश्चकुलत्थकैः २४ कुल्माषैर्जौवनोपा यंविधायसहभार्यया वर्त्तमानस्यभक्तस्यचित्तभेश्वरदर्शनात् २५ कर्त्तुंनियमनैवेद्यंसुलभाःशालयोभवन् सोमवारदिनेकापिशंकुलादायनामकः २६ कृत्वाभिषेकद्रव्याणिभार्याशिरसिचस्वयं शालितंडुलमुद्रक्त शाकंचूतशलाटुकम् २७ वहन्मूर्ध्निमहेशस्यपूजार्थंसायमाययौ गव्यानिपंचतैलंचनारिकेलफलानिच २८ वोढमत्यक्षमासाध्वीपश्चान्मंदमुपागमत् झटित्यायाहिहेभद्रेदृश्यतेगोपुरंविभोः २९ इतिकिंचिद्द्रुतंतास्यो भूत्वाहूयकुटुंबिनीं गंतुमैच्छत्तथाग्राविग्रापुरस्तादस्खलत्सदम् ३० क्वचिन्मूर्ध्निचतत्साऽन्यपतद्द्रुवितंडुलाः सुरक्तशाकंविविशुःसहचूतशलाटुकम् ३१ निदाघतपनाप्लुष्टभूगर्त्तेकापिभूसुराः खिन्नस्तदाविनिश्चित्यतत्र तभंगंविनिश्वसम् ३२ स्मृत्वासशंकुलादायःस्वयंनियममादधे ममास्तुमरणंश्रेयोनन्वस्मादूतभंगतः ३३ न्य धत्तचायुधंकंठेशंभुराविरभूत्तदा तावतस्तंडुलास्साज्यशाकचूतशलाटुकाः ३४ दर्शिताःशंभुनावक्त्रेतद्दलाद्द स्वचायुधं वृषभारूढमीशानंदंपत्योःसेवमानयोः ३५ असकृन्न्यपतद्भूमौदिव्याःकुसुमवृष्टयः तयोःसायुज्यमुक्तिं चदत्वादेवोमहेश्वरः ३६ पश्यतांसर्वदेवानांकैलासशिखरंययौ ३७ इतिश्रीस्कंदोपपुराणेऽष्टाविंशोऽध्यायः २८॥ ॥श्री अगस्त्यउवाच सपर्यांशांकरींकर्तुमशक्तायेमुमुक्षवः नामसंकीर्त्तनंशंभोस्तेषांमोक्षैकसाधनम् १ ॥

दोपपुराणव्याख्यायांभक्तिविलासप्रकाशिकायामष्टाविंशोऽध्यायः २८॥ ॥अथनियमेनयत्किंचिदपिद्रव्यंपूजायांसमर्पयितुमशक्तस्यशि

वनामसंकीर्त्तनादेवमुक्तिर्भविष्यतीत्याहसपर्यामिति १

२ इतिहासंदर्शयति अस्तीति ३ कबेरेति कबेरःशैलःतस्यकन्यकाकावेरी ४ ५ ६ ७ ८ ९ १०



अत्रैवोदाहरंतीमंसनकाद्यामहर्षयः इतिहासंमहापुण्यमयत्नान्मुक्तिसिद्धिदम् २ अस्तिश्रीचोलराजेंद्रकोशवृद्धिकरोमहान् श्रीमान्जनपदःशंभोःस्थानैर्दिक्षुविभूषितः ३ कबेरकन्यकायत्रबालकानिवपादपान् पुष्णातिपयसानित्यंपुष्पारामशतैस्सह ४ कदलीदलगर्भेषुवान्तंवारिबलाहकैः घनीभावंगतंयातिदिव्यकर्पूरसारताम् ५ यत्रक्रमुकराजद्रुस्तबकामोदवीचिषु क्रीडतांमत्तभृंगाणांझंकारैर्मुखरादिशः ६ स्वपंतिवापीनलिनीषुहंसाःचूतप्रवालेषुपिकाश्चयत्र विलासिनीकुंतलगर्भशय्यामध्यास्यमत्तभ्रमरारमंते ७ मंगलाख्यंपुरंयत्रपुंडरीकपुरांतिके अस्तितत्रसदैवास्तेदेवीमंगलदेवता ८ गोनाथइत्यभूत्कश्चिद्गोपालकुलसंभवः कुलक्रमागतंयस्यदेशगोकुलरक्षणम् ९ सबाल्यएवगारक्षन्ब्रह्मण्योविजितेंद्रियः घृतैःपयोभिर्दधिभिर्द्विजानभ्यभूषतेन्वहम् १० तस्यप्रीतोमुनिःकश्चित्संजातोभार्गवान्वये प्रार्थितःप्रददौतेनपंचाक्षरमनुत्तमम् ११ सद्वात्रिंशत्सहस्राणिजजापानुदिनंसुधीः महामंत्रजपस्तत्रमहिमानमवर्धयत् १२ पालकस्यगवामंतःसर्वंशिवमयंजगत् ब्रजन्तिष्ठन्शयानश्चभुंजानश्चपिबन्नपि १३ नविसस्मारतंमंत्रंतद्दातारंचदेशिकं शिवशंकरगौरीशनीलकंठत्रिलोचन १४ महेश्वरमहादेवत्रिपुरांतकधूर्जटे कालशासनकामारेबालचंद्रकलाधर १५ कारुण्यालयपाहीतिसदाभक्त्याप्रजल्पति जिह्वाजल्पतिनैवान्यत्गोनाथस्यमहात्मनः १६ प्रीतस्तस्यमहादेवोभारतींसमचोद

११ १२ १३ १४ १५ १६ १७ ८ ९ ६

१८ १९ व्यापारयन्निति अपदानं कर्मेवृत्तं २० भावेति भावस्य गानामृतजन्यशिवभक्तिभावस्य देवादिरतिर्भावइत्यालंकारिकाः आवे
शेनवशंस्वाधीनं २१ २२ २३ संचारयित्वेति तृणानां सौहित्येन तृप्त्या मंथराः अलसाः २४ दामेति दामनिरज्जौ आकलिताः बद्धाः चू

उत्थितः सहसादृष्टो वेणुमालोक्य गोपतिः गातुमेवसमारेभे पंचाक्षरमहामनुम् १८ प्रथमंचाष्टरंध्रस्य मणिवे
णोर्महायशाः आद्यरंध्रेधरंन्यस्यरंध्रेष्वन्येषुचांगुलीः १९ व्यापारयन्यथास्थानंजगौसप्तस्वरान्वितं अपदानंम
हेशस्य यूथं पुलकयन्गवाम् २० भावावेशावशं विश्वं कृत्वा स्थावरजंगमं तोषयामास देवेशं वेणुनादामृतेन सः
२१ दिनेदिने च गोनाथ वेणुगानरसादृताः ग्रावाणस्तनुतां याताः शुष्कवृक्षाश्च पुष्पिताः २२ अथैकस्मिन्दिने प्रा
तश्चारयित्वा सगोकुलं प्रातिष्ठत प्रति वनं गोपालशतसंवृतः २३ संचारयित्वा गास्तत्र तृणसौहित्यमंथराः छा
यांतरेषु वृक्षाणां शरीरं स्वं न्यधाद्भुवि २४ दामाकलितचूलीकः कटीकलितकम्बलः नमेरुतरुसंसक्तापरांगो भुग्न
कंधरः २५ सन्यस्त वेणुरधरे त्रिभंगिललिताकृतिः निषादर्षभगांधारषड्जमध्यमधैवतान् २६ त्रिषु त्रिषपि
रंध्रेषु चालयन्पंचमं पुनः पंचमे मूर्छयामास सक्षिपन्सकलं जगत् २७ अगायत्स्वरमीशानं ध्यालापं चाक्षरी
मनुं कलं जगौ कलालापान्मुद्रयन्नपि कोकिलान् २८ अमंदतारमच्छिद्रमविलंबितमद्रुतं पयोहीनास्त्रवद्दु
ग्धा गोर्गृष्टिर्गर्भवत्यपि २९ यथा दोग्ध्री भवेत्सद्यो गंगावत्सा तथा जगौ वेणुनादामृते विश्वं चराचरममज्जयत् ३०

त्यः गवां कर्णमूलानियेन नद्धृतश्चेति कप्रत्ययः नमेरुतरौ छायावृक्षे संसक्तं लग्नं अपरांगं पृष्ठं यस्य भुग्ना कुटिला कंधरा कंठो यस्य २५
२६ २७ २८ २९ तमेवार्थं पुनरप्याह यथेति अवत्सापि गंगा गंगाशब्देन लक्षितलक्षणया गौरुच्यते सद्यो दोग्ध्री भवेदित्वयः ३०

३१३२३३ नृत्यतइति हेमसभापतेः कर्णे आरात् नृत्यतः अनुपपातगीतमितिशेषः ३४ ३५ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांएकोनत्रिंशोऽध्यायः २९॥ ॥श्री॥सम्प्रति चन्दनादिद्रव्यैःशिवार्चनेन इहैवकेचनजीवन्मुक्ताबभूवुरितिवक्तुंउपक्रमते चन्द्रचूडेत्यादिना १ इतिहासमवतारयति अत्रेति २अस्तीति अगस्त्यदिक्दक्षिणा सैवाङ्गाक्षीकमल



तस्यगीतिरसाकृष्टैःविय हैमानिकैर्वृतं विस्मृतान्योन्यवैरैश्चमहीव्याघ्रगवादिभिः ३१ आसीत्सपदिनीरंध्रातस्मिन्गायतिवेणुना स्वरयोगःसमंवेणोःववृधेतस्यसप्तधा ३२ कपर्दीदिवनिर्यातिमहादेवस्यजान्हवी वशीकृत्यजगत्सर्वंगीतेनाब्रह्मकीटकम् ३३ नृत्यतोनुपपातारात्कर्णे हेमसभापतेः ३४ अथकनकसभेशःसोईमागत्य गौर्य्याश्रुतिमधुरमुदारंगीतमाकर्ण्यतस्य प्रमदभरितचेतामुक्तिमस्मैवितीर्यश्रुतिभिरभिनुतांघ्रिःस्वंपदंप्रापभ्यः ३५ इतिश्रीस्कंदोपपुराणेएकोनत्रिंशोऽध्यायः २९ श्रीअगस्त्यउ॰ चंद्रचूडार्चनेनित्यंचंदनादिप्रदानतः इहैवश्रियमासाद्यप्राप्तामुक्तिंचकेचन १ अत्रायमितिहासोऽस्तिशिवभक्तैरभिष्टुतः श्रीमत्सोमूर्त्तिनाथस्यचरितंयत्रगीयते २ अस्त्यगस्त्यदिगब्जाक्षीमुखश्रीतिलकायितं प्रथितंत्रिपुलोकेषुनगरंमधुराह्वयम् ३ यत्रमौक्तिकताटंकमंडिताशफरेक्षणा ममतासततंधत्तेमातात्रिजगतामपि ४ यत्रपांड्यमहाराजपूजितःपरमेश्वरः विराजतेचतुःषष्टिलीलारत्नाकरःसदा ५ यस्यलीलाश्रुकालापरसिकापरदेवता विरिंचिविष्णुवीशापदवदान्याया



नयनानायिकेति रूपकं तस्याःमुखश्रियो वदनशोभायाःतिलकायितंतिलकवदाचरितं ३ तदेवनगरंवर्णयति यत्रेति शफरेक्षणामीनाक्षीतन्नाम्नीभगवतीसर्थः त्रिजगतामपीतिपदद्वयं मध्यमणिन्यायेन उभयत्रान्वेति त्रिजगतामपिममतांधत्तइत्यर्थः ४ ५ यस्येति विरंच्या

हीनांपदस्यवदान्यंदात्त्रपांङ्गवीक्षणंयस्याद्त्यर्थः ६ कदम्बेति अच्युतस्य आद्यवतारोमत्स्यावतारः तस्यश्रियायुक्तेनेत्रेएवमीनोत्त
थोः उत्पलाकृतिं पद्माकारां ७ अंशुकेति वीणाकोरकितद्रुमामिति नादक्रियाभिप्रायेणसङ्गीतशास्त्रेनादक्रियया गानेक्रियमाणेशुष्काश्च
पितरवःपल्लविताभवन्तीतिप्रसिद्धिः ८ महानीलेति महानीलमणयःसिंहलद्वीपसंभूताःनीलमणिविशेषाःतद्वत्श्यामां सिंहलस्याक

कदम्बवनसंचाररणत्क्वणितनूपुरां अच्युताद्यवतारश्रीनेत्रमीनोत्पलाकृतिम् ७ अंशुकद्युतिनिर्धूतकिंशुक
स्तवकप्रभां नखनादितमाणिक्यवीणाकोरकितद्रुमाम् ८ महानीलमणिश्यामांमलयध्वजकन्यकां अर्चेति
ताम्रासंभूतैर्दिव्यैश्चनवमौक्तिकैः ९ नित्यमप्यमराधीशेनैवानमितमौलयः दक्षिणाशाधनाधीशाःपांड्यवंश
भवान्नृपाः १० सर्वसंपत्समृद्धासासमृद्धविपणापणा बभूवभूषणंभूमेर्द्यौरिवप्रतिबिंबितम् ११ तत्रास्तिमूर्तिनाथा
ख्योवैश्यवंशोमहाधनः किंकरःशिवभक्तानांशंकरेदृढभक्तिमान् १२ दृष्ट्वाभस्मचरुद्राक्षंप्रणमत्साहितांजलिः
नतदस्त्यन्यतःकापिरत्नाद्यस्यनयद्गृहे १३ सोंतर्द्वीपांतरानीतदिव्यचंदनलेपनं नित्यंहालास्यनाथस्यकारयामास
भक्तिमान् १४ एवंनियमशीलस्ययपुर्विंशतिवत्सराः तदापांड्यपतिस्त्रैणोनैवकिंचिद्विचारयन् १५ रंध्रान्वेषंधून्त
पतिर्मधुरामभ्यवर्तत सनिष्कास्यपुरात्पांड्यंराजाभूज्जिनसेवितः १६ तस्यप्राग्जन्मपापेनजैनतंत्रेभवन्मतिः वेदनापंचकं

रोद्भूतामहानीलास्तुतेमताः हृत्यगस्त्यशास्त्रेमलयध्वजोराजा ताम्रा ताम्रपर्णीनदी ९ १० ११ १२ दृष्ट्वेति रत्नादिवस्तु अस्यवणिजोगृहेय
न्नास्ति तदन्यतः कापिनास्तीत्यर्थः १३ १४ १५ १६ तस्येतिजैन तंत्रे बौद्ध शास्त्रे यत्रमूढैःअज्ञातवेदतत्वैः बौद्धैःवेदनापंचकं आलेति

गीयते रूपादिस्कंधपंचकमेव शरीरस्थमात्मा नातिरिक्त इति तेषां मतं १७ १८ १९ मूर्तिनाथमिति तन्मतानुगाः जैनमतानुयायिनः २० २१ स इति सः जैनः सप्तभंगीप्रपूजासु बौद्धावतारविष्णुपूजासु २२ अप्रत्यक्षमिति प्रत्यक्षातिरिक्तं न प्रमाणमिति चार्वाकमतानुसारेणेयमुक्तिः

अवतीर्णो मते तत्र वेदे विद्वेषवानभूत् ततोभूद्वैदिकद्वेषी वेदांताध्वरदूषकः १८ क्रमेण द्विजदेवानां सपूजां न्यरुण त्तदा स्वमतानुसृतानेव पूजयामास नेतरान् १९ मूर्तिनाथं विना तत्र बभूवुस्तन्मतानुगाः मधुरानगरे सर्वे यथा रा जा तथा प्रजाः २० मतानननुप्रवेशित्वान्मूर्तिनाथो विरोध्यभूत् आज्ञातिलंघने राज्ञां कोपः खलु सुदारुणः २१ सपंचप रमेष्ठिश्रीचरणांभोरुहार्चकः सप्तभंगीप्रपूजासु वंचयामास वैदिकान् २२ अप्रत्यक्षं कथं वास्यात्प्रमाणमिति चाल यन् खिलीचकार पाषंडो वैदिकं मार्गमुत्तमम् २३ हरिशंकरपूजायामनरायपरंपराम् आविष्कुर्वन् त्रयीबाह्यानर्चे यामास दुर्मतिः २४ यदा हालास्यनाथस्य सपर्या तेन विघ्निता मूर्तिनाथस्तदा स्वीयैः पूजां प्रावर्तयज्जनैः २५ पूजां हा लास्यनाथस्य मूर्तिनाथप्रवर्तितां निजाज्ञोल्लंघनं चापि द्रष्टुं न तु महीपतिः २६ विना मदनुमत्या यो विक्रेता चंदन स्य सः वध्यः स्यादित्यापणेषु घंटां नित्यमघोषयत् २७ मूर्तिनाथस्तदारभ्य संगृहीतैः सुचंदनैः नित्यालेपनमीशस्य निर्विघ्नमतनोच्चिरम् २८ यदा न लभ्यते क्वापि चंदनं वणिजां वरः विचारमगमद्धीरं हालास्येशं विचिंतयन् २९ अद्या स्ति चंदनं शंभो तवालेपनसाधनं श्वः करिष्यामि किं वाहं हालास्येश्वर रक्ष माम् ३० इत्युक्त्वा दत्तपाटीरो वणिक्काम नयन्निशां अथ प्रातः समुत्थाय यावदर्कोस्तमिच्छति ३१ पर्यटन्नगरे तावद्दुणिग्गेहे न चन्दनं अथ हेमाद्रिनीतो

खिलीचकार शिथिलीचकार २३ हरीति त्रयीबाह्यान् वेदबहिष्कृतान् २४ २५ २६ २७ २८ २९ ३० ३१ पर्यटन्निति हेमाद्रिनीतोये

अदत्वेति हस्तेन किंप्रयोजनं इत्यर्थः प्रकोष्ठं कूर्पराधोभागं ३३ ३४ ३५ ३६ आं अनाथोपीति एनं जैनं तत्कालागताः शत्रवः ३७ ३८

अदत्वचंदनस्याद्यममहस्तेनकिंभवेत् इतिप्रकोष्ठमापेषुंयावच्छाणोपलेपर्ययेत् ३३ तदातंवारयामासवाणी
काप्यशरीरिणी मैवंकुरुभवानंगभूत्वापांड्यमहीपतिः ३४ वेदबाह्यान्निराकृत्यवैदिकान्स्थापयिष्यति अ
यंवंशशत्रुणायुद्धेनिहतोमृत्युमेष्यति ३५ पश्येत्याकर्ण्यहालास्यनाथसन्निधिमापसः अथान्येमधुरामेत्यरुरु
धुर्जिनशत्रवः ३६ आंअनाथोपियुयुधेनिर्गतोनगरात्सतैः रणेप्येनंप्राहरंतसचनेविलयंययुः ३७ हतावशिष्ट
जैनास्तुदूरेदुद्रुविरेदिशः ततस्तुसचिवाःसर्वेसंभूयेश्वरशासनात् ३८ दुकूलबद्धनयनंनगरेचालयन्गजं॥
सोंतःशिवालयंगत्वागृहीत्वामूर्तिनायकम् ३९ निजस्कंधेतमास्थायप्रतस्थेवीथिकांतरे ववर्षुःपुष्पवर्षंचखेच
रानागरैःसह ४० अस्तुवन्वंदिनश्चापिदिविभेर्यश्चदध्वनुः सिंहासनेप्रतिष्ठाप्यमूर्तिनाथंगजेश्वरः ४१ अभि
षिंचत्स्वहस्ताग्रकलशामृतधारया अथाभिषिक्तःसाम्राज्येमूर्तिनाथोमहीपतिः ४२ वेदबाह्यान्सभूलाग्रे
चक्रेवैदिकसंमतः चंदनालेपनंशंभोःसांद्रंकालत्रयेप्यधात् ४३ वैदिकान्स्थापयामासपांड्यभूमिमवर्द्धयत् श
तसंवत्सरंराज्यंकृत्वावैदिकसंमतः ४४ मुक्तिंहालास्यनाथस्यप्रसादाद्गमत्ततः मूर्तिनाथस्यचरितंशृण्वंतिचपठंति
ये ४५ तेषांशिवप्रसादेनकैलासःसुलभोभवेत् ४६ इतिश्रीस्कंदोपपुराणेभक्तविलासेत्रिंशोऽध्यायः ३०॥ ॥अगस्त्यउ.

३९ ४० ४१ ४२ ४३ ४४ ४५ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांत्रिंशोऽ
ध्यायः ३०॥ ॥श्री॥ ॥अथपञ्चाक्षरादिभिःशिवपूजनंसुगंधिपुष्पैर्विरचितंमुक्तयेभवतीत्यगस्त्योवक्तुमुपक्रमतेपञ्चाक्षरेति १

भ·टी· इतिहासमवतारयति अत्रेति २ अस्तीति कावेरिकावारिणि कावेरीजले प्ररोहः प्रादुर्भावो यस्य सः अग्रहारविशेषणं संपदि संपद्रूपे दिव्यानि अ·२१

७९

अत्रैवोदाहरंतीदं नंदिकेशाच्युतादयः चरितं स्कंदनाथस्य शिवभक्तशिखामणेः २ अस्ति कावेरिकावारिप्ररोह स्तस्य संपदि देशे दिव्यपुरे रम्ये द्विजविभूषिते ३ अग्रहारो महानस्ति श्वेतद्वीप इवार्णवे आश्रयः सर्वभूताना मावासो ब्रह्मवादिनाम् ४ दीनांधपंगुबधिरमूकानाथरुजापहः शरण्यभूतः सर्वेषां प्रख्यातः शरणार्थिनाम् ५ अग्नि होत्राग्निसुहुतहविराज्यकुशेधसां धूमेनामोदसांद्रेण समाक्रांतदिगंतरः ६ बहुधीऋग्यजुःसामध्वनिध्वनितमं टपः पदवाक्यप्रमाणज्ञैः शोभितो ब्राह्मणोत्तमैः ७ तटाकोपवनोद्यानपुष्पगंधाधिवासितः यूपालंकृतपर्यंत वेदिकाशतसंवृतः ८ अष्टादशपुराणार्थवेदनानिकषोपलः तत्राभूद्ब्राह्मणः कश्चिच्छिवनाथान्वयो महान् ९ प्र तिग्रहे समर्थोपि प्रतिगृह्णाति न क्वचित् तत्रोञ्छवृत्तिर्निवसन् प्रत्यहं शिवमर्चति १० तस्यैवं वर्त्तमानस्य महादेवप्र सादतः पुत्रो वै स्कंदनाथाख्यः कश्चिदासीन्महामतिः ११ नित्यं पूजयितुः शंभुं स पितुः सविधे वसन् स्वयं स्निग्धो पलेक्वापि पत्रैरर्चयतीश्वरम् १२ पिता संवत्सरे षष्ठे दत्वोपव्रतमनुत्तमं वेदानध्यापयामास षट्शास्त्राण्यप्यपाठ यत् १३ व्याकरोद्धथ मीमांसापुराणार्थान बोधयत् पंचाक्षरं महामंत्रं ददौ लग्ने शुभे सुधीः १४ पूजाविधिं महेश स्य पाठयामास सूनवे १५ स परीक्षितसर्वशास्त्रतत्वस्सविकल्पं सकलं निरस्य दूरे गिरिशार्चनमेव निर्विकल्पं निरपा यार्थकरं स्म निश्चिनोति १६ अथ काले गते तस्मिन् शिवनाथे दिवं गते गतिं कालस्य महतीं स जानन् समशोचयत् १७

पुराणि यस्मिन् रम्ये इति देशस्य विशेषणम् ३ अग्रहार इति ब्रह्मवादिनां वेदांतिनां ४ ५ ६ बह्वेति बहुधियां पण्डितानां पदवाक्यप्रमाणज्ञैः व्याकरण

मीमांसान्यायशास्त्रज्ञैः ७ ८ ९ १० ११ १२ १३ १४ १५ सइति परीक्षितं परितोविमृष्टंसर्वशास्त्राणांतत्वंयेनतादृशः सःस्कंदनाथःसक लंविकल्पंसंदेहं दूरेनिरस्यनिरपायःनित्यःयोर्थःमोक्षः ततकर्मगिरिशार्चनमेवनिर्विकल्पमसंदिग्धंनिश्चिनोतिस्मेत्यन्वयः १६ १७ १८ १९ २० २१ २२ २३ २४ २५ सइति महामनुं पञ्चाक्षरीविद्यां आवृत्तिशून्यां पुनरावृत्तिरहितां गतिंमुक्तिं नसपुनरावर्त्ततइ

कृत्वौर्ध्वदेहिकंतस्यवेदोक्तेनैववर्त्मना दधारपरमांभक्तिंपरमात्मनिशंकरे १८ पुष्पारामंस्वयंकृत्वापुष्पाणिस मवर्धयत् तत्रत्यैरेवकुसुमैरर्चयामासधूर्जटिम् १९ जटावान्चीरवसनोभस्मरुद्राक्षभूषितः पंचाक्षरेणमह्- तामंत्रेणकुसुमैर्हरम् २० अर्चयन्गमयामाससमयंनवृथाक्वचित् जपन्द्वादशसाहस्रसंख्यंपंचाक्षरीमनु म् २१ पुष्पैर्द्वादशसाहस्रसंख्यैरानर्चशंकरं अवकाशेसतिक्वापिमहेशंहृदिभावयन् प्राग्जन्मसफलीकुर्व न्नभिष्टौतिस्मसादरं२२नमःशिवायत्रिगुणात्मकायनमःशिवायत्रिविधात्मनेते नमःशिवायत्रिजगद्विधात्रेन मःशिवायत्रिदशैकधाम्ने इतिस्तुवन्महादेवंशिवभक्तद्विजोत्तमैः पूजितश्चयथाशंभुःविरक्तःसर्वतोभ वत् गौरीस्तन्यामृतास्वादधन्योभक्ताग्रणीश्चसः यस्यसौहार्दलाभेनकृतार्थंस्वममन्यत२५सइत्थमभ्यर्च्यम हेश्वरंसदामहामनुंचप्रजपन्चितन्वन् स्तुतिंचदेवस्यविभोःप्रसादादावृत्तिशून्यांचगतिंप्रपेदे २६ इतिश्रीस्कं दोपपुराणेभक्तविलासेएकत्रिंशोऽध्यायः ३१॥ ॥श्रीअगस्त्यउ॰ वेदसारेणयेदेवंमहांतंसमुपासते नगर्भवाससंक्ले

तिश्रुतेः प्रपेदे प्रापेत्यर्थः २६ इतिश्रीमानवस्युपनामकनरसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांएक- त्रिंशोऽध्यायः ३१॥ ॥ॐ॥ अथरुद्राध्यायमाहात्म्यंवक्तुमारभमाणो महामुनिरगस्त्यः श्रोतॄन्ब्राह्मणानभिमुखीकरोति वेदेति येद्विजाः

वेदसारेण वेदानांश्रेष्ठेनरुद्राध्यायेनश्रेष्ठत्वंचास्य वेदमध्यघटितत्वेनतथाहित्रयोवेदाः ऋग्यजुःसामानितत्रमध्यमोयजुर्वेदःतस्यापिस
साष्टकेषुमध्यमेचतुर्थाष्टके मध्यमप्रश्नः रुद्राध्यायइत्युच्यते अतोस्यसारभूतत्वं तेनमहान्तंदेवंमहादेवंउपासते जपाभिषेकहोमा
मार्चनादिभिः तेषांइत्यन्वयः १ संप्रतिरुद्राध्यायपराङ्मुखान्निंदति दुर्लभमिति २ रुद्राध्यायजपंविनामुक्तिर्नभवति इत्याह अजस्त्वेति ३

दुर्लभंब्राह्मणकुलेजन्मप्राप्यापिकेचन नयंतीहवृथाकालंरुद्राध्यायपराङ्मुखाः २ अजस्त्वाशतरुद्रीयमन्यत्रा
पिकृतश्रमाः विंदंतियदिकैवल्यंतत्सिंस्यादप्यनश्नतः ३ दृष्ट्वापिहयमेधेनपुनरावर्त्ततेमुनिः शतरुद्रीयजप
कृन्नहिभूयोनिवर्त्तते ४ स्तेयंकृत्वासुरांपीत्वाहत्वापिगुरुदारिकां यदिप्रमाणमाम्नायोरुद्राध्यायीविमु
च्यते ५ श्रीरुद्रसूक्तंप्रजपन्नियमेनद्विजोत्तमः दर्शनाल्लोकपापानिहरत्यर्कोयथातमः ६ अपिगोघ्नःकृतः
घ्नोयःशतरुद्रीयमंत्रतः लिंगेशिवंसमभ्यर्च्यलिप्यतेनाब्जपत्रवत् ७ आद्यंतयोर्यःप्रणवेनयुक्तंश्रीरुद्रसूक्तं
प्रजपत्यघघ्नं तस्यांघ्रिरेणुंशिरसावहंतिब्रह्मादयःस्वाघविशुद्धिकामाः ८ यथासर्वेषुतेजस्सुज्योतिःसौरंमह
त्तरं तथैवमंत्रकोटीषुशतरुद्रीयमुत्तमम् ९ सद्योजातादिभिर्मंत्रैःधृत्वाभस्माभिमंत्रितं योजपेच्छतरुद्रीयं
धृतरुद्राक्षमालिकः १० अभिषिंचन्महालिंगेमहादेवंमहेश्वरं त्रिसप्तकुलमुद्धृत्यशिवलोकेमहीयते ११ य
तःकुत श्चिद्धिहितान्नभक्षणःयतःकुतश्चापिकृतप्रतिग्रहः श्रीरुद्रजापीदुरितानिसर्वशःविहायमुक्तःसभवे

४ स्तेयमिति स्तेयंचौर्यं आम्नायोवेदः ५ ६ ७ आद्यंतयोरिति स्वस्यात्मनो अघस्य पापस्य विशुद्धिं कामयंतेइति तादृशाः ८ ९ सद्योजाते
ति कालाग्निरुद्रोपनिषदुक्तप्रकारेणेत्यर्थः श्लोकद्वयमेकान्वयि त्रिसप्तकुलं दशपूर्वाणिदशापराणि आत्मनासहएकविंशतीत्यर्थः महो

एवंमाहात्म्यमुक्त्वासंप्रतिपुरावृत्तमाह इतिहासमिति १३ अस्तीति सह्यजाकावेरी यज्वभिः विधिनेष्टवद्भिः १४ तत्रेति षडंगःशिक्षा
व्याकरणादिषडंगवान् आम्नायोवेदः १५ कंठेति कंठदघ्ने कंठप्रमाणे प्रमाणेदघ्नच्प्रत्ययः १६ १७ १८ द्रोणपुष्पैरिति द्रोण

इतिहासंवदामीहश्रृणुतश्रद्धयाद्विजाः श्रुत्वायंशतरुद्रीयेपुमान्भवतिभक्तिमान् १३ अस्तिश्रीसह्यजातो
रेश्रीकालाख्यपुरंमहत् वेदशास्त्रार्थतत्वज्ञैःयज्वभिःसमलंकृतम् १४ तत्रकश्चिदभूद्विप्रःषडंगाम्नायतत्ववि
त् सनित्यंसह्यजातोयेस्नात्वाहुतहुताशनः १५ कंठदघ्नजलेस्थित्वारुद्राध्यायंजपत्यसौ पुष्पैःश्रीरुद्रमंत्रेण
समर्चयतिशंकरम् १६ जपतःशतरुद्रीयंतस्यश्रुत्वात्रियोजनं विमुक्तशापाश्चभवन्पैशाचीमास्थितस्तनुम्
१७ तस्यश्रीशतरुद्रीयजपमाहात्म्यवेदिभिः पशुपत्यभिधात्तावसिष्ठाद्यैर्मुनीश्वरैः १८ द्रोणपुष्पैःसनिर्दो
षैर्बिल्वपत्रैरखंडितैः तिलाक्षतैश्चदूर्वाभिःशम्याकैरुत्पलैरपि १९ शतरुद्रीयमंत्रेणशंकरार्चनतत्परः जिगा
यसकलान्लोकान्ब्रह्माद्यैरपिपूजितः २० अणिमादिविभूतीश्चतृणीचक्रेमहामतिः पशुपत्यर्पितंपुष्पं
सदाशंकरमूर्धनि २१ शैलादिप्रमुखास्सर्वेदृष्ट्वासंप्रशशंसिरे २२ श्रीरुद्रमाहात्म्यविदस्सपुत्राञ्शिष्यांश्चशं
कार्चनजागरूकान् सुविप्रतिष्ठाप्यशिवप्रसादात्द्विजोत्तमोधामजगामशंभोः २३ इतिश्रीस्कंदोपपुराणेभ
क्तविलासेद्वात्रिंशोऽध्यायः ३२॥ ॥श्रीअगस्त्यउ॰ सन्निधौप्रणतिंशंभोःनियमेनदिनेदिने कुर्वंतियेहरस्तेषां

पुष्पैः आरण्यकैःश्वेतपुष्पविशेषैः निर्दोषैःकीटवेधादिदोषरहितैःअखण्डितैःसंश्लिष्टत्रिदलैःशम्याकैःचतुरंगुलैःपीतपुष्पैः १९ २० २१
२२ उपसंहरतिश्रीरुद्रेति २३ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांद्वात्रिंशो

ऽध्यायः ३२॥ ॥श्रीः॥ संप्रतिनियमेनशिवंप्रणमतामासन्निकोदुःखनिवृत्तिर्भवतीत्याह सन्निधाविति १ इतिहासमवतारयति
अस्तासनाख्यमिति चोलविषयस्य चोलदेशस्य आभरणंपुरं अस्तीतिशेषः २ निष्ठेति निष्ठाविशेषेण धर्मासक्त्यतिशयेन निष्यूतः निका
सितः वसिष्ठादीनांयशोभरोयैः अतिथिषुसाधुआतिथ्यं तत्रसाधुरितियत्प्रत्ययः तत्कारिभिः शान्तैःशमप्रधानैः दान्तैःजितेन्द्रियैः अ

अस्तासनाख्यंश्रीचोलविषयाभरणंपुरं वेदवेदांगतत्त्वज्ञैःक्रतुप्रवरदीक्षितैः २ निष्ठाविशेषनिष्यूतवसि
ष्ठादियशोभरैः आतिथ्यकारिभिःशांतैर्दांतैरग्न्याहितैरपि ३ अधिष्ठितंसदासद्भिःब्रह्मघोषाभिनादितं त
स्यपर्यंतकेदारकुल्यारोधसिकाचन ४ क्षोण्यंत्यजानामहतोरुधिरैःपंकिलांतरा पुराणमांसखंडास्रग्वास
नाहूतवायसा ५ कुक्कुटानांमहारावसन्नादितदिगंतरा पर्यंतशुष्यद्गोचर्मपर्यस्तश्रोहिसंचया ६ मद्यास
स्वादमदोन्मत्तचंडालकुलसंकुला तत्रास्तिनगरेख्यातःकश्चिन्नंदाह्वयोंत्यजः ७ सदिक्षाबाल्यमारभ्य
दृढभक्तःशिवेभवत् सशिवालयवाद्यानांजीर्णानांमुखबंधनम् ८ विदधातिलचानित्यंदत्तेगोरोचनाम
पि कदाचिच्चर्मणावाद्यंकुलाचंडालसत्तमः ९ करंजीपुरनाथस्यसन्निधौन्यस्यदूरतः लिंगसंदर्शनाकां
क्षीमुहूर्तंतस्थिवानथ १० महावृषभसंछन्नंस्वामिनंद्रष्टुमक्षमः विषसादस्वकंजन्मनिंद्यजातोकिमागतम्
११ स्मरन्निति शिवंदध्यौभक्तिपूतमनाःक्षणं शशासदेवस्तद्भृत्यांप्रीतःशांकरसन्निधिम् १२ ॥ ७ ॥

ग्न्याहितैः आहिताग्निभिः वाहिताग्न्यादिष्विति परनिपातः एवंभूतैःसद्भिः अधिष्ठितमितिपरेणान्वयः ३ अधिष्ठितमिति ब्रह्मघोषो वे
दघोषः तस्यपुरस्यपर्यन्तकेदारस्य प्रान्तक्षेत्रस्य संबंधिनी याकुल्या कृत्रिमासरित् तस्यारोधसि तटे काचन अन्त्यजानाम् चाण्डा-

लानांक्षोणीनिवासभूमिः अस्तीतिशेषः ४ ५ ६ ७ ८ ९ १० महावृषभेति महान्स्थूलाकारः योवृषभः शिववाहनभूतः तेनसंछन्नं अन्तरितंस्वामि नंशिवंद्रष्टुमक्षमः निम्नजातोस्वकंजन्मकिमागतमितिविषसाद विषण्णोबभूव ११ स्मरन्निति तस्यभक्त्याप्रीतः देवःशांकरसन्निधिंशशासे

पार्श्वेगस्त्वंभवेत्याहसचदक्षिणतोभवत् ततोज्योतिर्मयंलिंगंदृष्ट्वादूरेस्थितोपिसः १३ प्रणनाममुहुःप्रीत्यान् नर्तकरतालवान् गर्तेदेवाग्रभागस्थंविदधेनलिनाकरम् १४ संस्मरन्सर्वदाशंभुंजातिनैच्यभयातुरः शिवमां रक्षरक्षेतिमनसाव्याजहारह १५ सेवांनटेश्वरस्याथकरिष्यन्यातुमुद्यतः यज्वसाद्रपुरंतत्वंनगच्छेतिस्वजा तिभिः १६ निवारितोपिश्वोगंतेत्याहभूयःपरेहनि प्रस्थितस्तैर्निरुद्धश्चतथैवाहानुवासरम् १७ पुंडरीकपुरे शानसेवासादरचेतसः वदतश्चैवमेवागात्मासेकोनश्चवत्सरः १८ अथैकस्मिन्दिनेप्रातःप्रस्थानपरिपंथि नःशपन्भार्यामपिखलांसमाश्वास्यनिरुंधतीम् १९ निमज्ज्यसह्यजातोयेधृतभस्मानिजालिके गव्यूतिमा त्रेसंवीक्ष्यगोपुरंतत्सभापतेः २० प्रणतिंविदधेहृष्टःप्रपेदेचपुरांतिकं प्राचीनगोपुरद्वारक्रोशमात्रेपुरस्थितः २१ शालाशतंद्विजेंद्राणांनानाध्वरविधायिनां नादितंब्रह्मघोषेणपुण्यधूमाचिताम्बरम् २२ दृष्ट्वाभीतोन मेयुक्ताजातिहीनस्यहिस्थितिः विधास्येचान्यतोयत्नमितिदक्षिणतोगमत् २३ ददर्शगोपुरस्याग्रेदक्षिणस्य मठायुतं सनकप्रख्यसंन्यासिवेदसाराभिनादितम् २४ महावाक्यपदव्याख्यापरकीलांकितद्रुमं पुरेके नपथागंतुंमेयुक्तमितिसोंत्यजः २५ क्रोशमात्रेगोपुरस्यपश्चिमभागस्थितस्यच स्थित्वाददर्शतत्रापियोगारूढा

त्यन्वयः १२ १३ १४ १५ सेवामिति यज्वभिः विधिनेष्टवद्भिः सान्द्रंपूर्णं पुरंनगरं त्वंनगच्छेतिस्वजातिभिः निवारितोपीत्यग्रिमेणान्वयः १६ १७

पुण्डरीकेतिमासेनएकेनऊनःवत्सरःएकादशमासात्मकःकालइत्यर्थः १८ १९ निमज्ज्येति सद्यजातोये कावेरीजले गव्यूतिमात्रेक्रोशद्वयप्रमाणे गव्यू
तिःस्त्रीक्रोशयुगंइत्यमरः २० २१ २२ २३ ददर्शेतिमठानांछात्रादिनिलयानां अयुतंदशसहस्रं २४ महेति महावाक्यानांतत्त्वमस्यादीनां पद्या

उदीच्यांगोपुरद्वारिराजर्षीनपरानपि शैवानसदाचारपरान्दृष्ट्वानिंदत्स्वकांजनिम् २७ हीनजातेःकथं
भाविदर्शनंमेसभापतेः अनिषेव्यसदानाथंनाहंगतेस्यवर्तत २८ ततस्तद्भक्तिमुदितःपुंडरीकपुरेश्वरः स्व
प्नेतमाहश्वोवन्हिंप्रविश्यायाहिमत्सभाम् २९ इत्यादिश्यतमेवैकंत्रिसहस्रद्विजोत्तमान् नंदस्यशुद्धयेव
न्हिर्दीयतामिसचोदयत् ३० प्रातःप्रबुद्धास्तेसर्वेस्वप्नसंवादविस्मिताः प्रार्थयंतश्चतंवन्हिमालोकैर्यथास्य
थानयन् ३१ वर्द्धयामासुरनलंदक्षिणद्वारसन्निधौ नंदःस्नात्वाथमध्यान्हेधृतभस्मानुलेपनः ३२ नत्वाद्वि
जान्विवेशाग्निंभृंगःपद्मवनंयथा वन्हिनादह्यमानात्तदेहात्कश्चिद्विजोत्तमः ३३ भस्मत्रिपुंड्ररुद्राक्षमाला
भूषितविग्रहः वामेदंडमथाऽवामेपाणौबिभ्रत्कमंडलुम् ३४ शिखाबंधोल्लसन्मौलिःदिव्यांबरपरिष्कृतः
उत्तस्थौपश्यतांतेषांवामदेवोयथामुनिः ३५ तदाववर्षुःकुसुमानिमौलौवैमानिकादुंदुभयश्चनेदुः तमस्तु
वन्चारणयूथमुख्याएहित्वमित्यूचुरिमंगणेंद्राः ३६ सयज्वभिस्तैरुपदिष्टमार्गश्चिदंबरेशस्यसभांप्रविश्य
देवंचिदाकाशमयंनिषेव्यपश्यत्सुसर्वेषुनदृश्यतेस्म ३७ श्रीसूतउ० इतिनंदस्यचरितंभक्त्यामुक्तस्यसंसदि

ख्याएवपराःकीलाःशंकवःतैःअंकिताःचिन्हिताःद्रुमाःयस्मिन् २५ २६ २७ २८ २९ ३० प्रातरिति तेसर्वेब्राह्मणाःस्वप्नसंवादेनविस्मिताःप्रार्थ
यन्तश्च वन्हिमालोकाएथांसिकाष्ठान्यानयन् ३१ ३२ नत्वेतिभृङ्गःपद्मवनंयथेत्युपमयानंदनामकस्यशिवेरतिभावस्योत्कर्षः प्रतीयते ३३ ३४

न्यादिस्वर्थः ३८ इतिश्रीमानवस्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायांत्रयस्त्रिंशोऽध्या
यः ३३॥ ॥ॐ॥ अथशिवस्यतद्भक्तानां वादास्यकरणेन ज्ञानयोगादिनिरपेक्षामुक्तिः सुलभेतिवक्तुमुपक्रमते शिवस्येति १ इतिहा
ससुपक्रमते अत्रेति यत्पुरावृत्तमाकर्ण्य क्षीणाः नष्टाः वासनाः अनाद्यविद्यासंस्कारायेषां २ अहमिति स्वस्य आवासेमहागिरौ कै
लासे अहंकुर्वेति सतिपरमशिवाधिष्ठानतया अहमेव सकलस्थानेषुश्रेष्ठइति अहंकारवति तस्यकैलासस्यनिग्रहाय अभिमान

इतिश्रीस्कंदोपपुराणेभक्तविलासेत्रयस्त्रिंशोऽध्यायः ३३॥ॐ॥ श्रीअगस्त्यउ० शिवस्यशिवभक्तानांकेंकर्ये
येनिलन्वते विनैवज्ञानयोगाभ्यांतेषांमुक्तिरदुर्लभा १ अत्रसिद्धैश्चयैर्गीतमितिहासंब्रवीमिवः विस्मयंलेय
दाकार्ण्येज्ञानिनःक्षीणवासनाः २ अहंकुर्वेतिकैलासेस्वावासेचमहागिरौ तन्निग्रहायदेवेशशंभुनासृष्ट
मद्भुतम् ३ दैनंदिनेलयेयस्यलयोनास्तिशिवाज्ञया यदवाङ्मुखनिक्षिप्तकुंभवत्प्रलयार्णवे ४ अनष्टमं
तःसलिलेविभातिशिवयोःपदं कामाक्ष्येकाम्रनाथांभः केलिमज्जनसंगतैः ५ भस्मकस्तूरिकालेपैर्यत्रगंगा
यतेसरित् अस्तितच्छांभवस्थानंत्रिषुलोकेषुविश्रुतम् ६ विंध्यस्यदक्षिणेदेशेस्वर्गस्यप्रतिबिंबवत् उपा
गतानांसमयेगौरीसेवार्थमन्वहम् ७ विमानैरिवसिद्धानांसंबाधंभवनोत्तमैः आक्रीडवाटीरंभाग्रसृष्टमंहाकि

निवृत्तये देवेशेन शंभुना अद्भुतंयथास्यात्तथासृष्टमित्यन्वयः ३ दैनंदिनेति दिनेदिनेभवः दैनंदिनः यस्यस्थानस्य अवाङ्मुखं अधोमुखं
यथातथा स्यात्अवाङ्मुखःअधोमुखः इत्यमरः निक्षिप्तोयःकुंभःतेनतुल्यं ४ अनष्टमितिपदंस्थानं कामाक्षीदेवी एकाम्रनाथःशिवःतयोःअं
भःकेलिभिःजलक्रीडाभिःमज्जनैःअवगाहनैश्चसङ्गतैःभस्मकस्तूरिकालेपैः इत्यग्रिमविशेषणं ५ ६ ७ विमानैरिति विमानैर्दे

वयानैरिवस्थितैः भवनोत्तमैः गृहश्रेष्ठैः संबाधंसंमर्द आक्रीडाः उद्यानानि ८ सुरेति सुरसिंधौ मंदाकिन्यांनिमग्नंयत् स्त्रैणं स्वर्गस्त्रीसमुदायः तस्यआभरणभृतःभूषणधारिणःद्रुमाःयस्मिन् उद्यानेनारिकेलाग्रेषु विश्रांतं अतिदूरआकाशमार्गखेदेन आश्वस्तं अर्काश्वानांसूर्यतुरगाणांमंडलंयस्मिन् द्वयोरन्यातिशयोक्तिः ९ क्रमुकेति पूर्वार्द्धंस्पष्टं कृशाङ्गीजनस्यकान्ताजनस्य सङ्गीतेनद्रुतानि द्रवीभूतानिनादक्रियायोगादितिभावः

सुरसिंधुनिमग्नस्वःस्त्रैणाभरणभृद्द्रुमं उद्याननारिकेलाग्रविश्रांतार्काश्वमंडलम् ९ क्रमुकस्तबकाहृत देवोद्यानमधुव्रतं कृशांगीजनसंगीतद्रुतरत्नाग्रगोपुरम् १० रमणीवेणिकामोदश्रेणिवासितवीथिकं तरुणीरत्नताटंकसूर्यपीततमोव्रजम् ११ मुग्धामंदस्मितज्योत्स्नातृप्तकेलिचकोरकं क्वचिन्मत्तेभदानांभोजंबालितनृपांगणम् १२ क्वचिदश्वखुरक्षुण्णक्ष्मारजस्स्थगितांबरं क्वचित्सुभटखड्गाग्रसहोत्कंपितभास्करम् १३ गौरीसेवागतोपेंद्रश्रीकटाक्षसमृद्धिमत् कूलेकंपामहानद्यामूलेचैकाम्रभूरुहः १४ द्वात्रिंशद्धर्मचारिण्याशिवोयत्रार्चितः पराकाशबिलंयत्रमुक्तिद्वारमपावृतम् १५ महाभैरवमुख्येनगणयूथेनपाल्यते सर्वैःसिद्धैश्चदेवैश्चसेवितंपरमाद्भुतम् १६ अद्यापियत्रकामाक्ष्यास्सन्निधौतिष्ठवांदिशः नज्ञायंतेचिरेणापिब्रह्मणापिमुनीश्वरैः १७ छायाग्राहिप्रतिस्पर्धैर्यत्रदिव्यसुधारसः कृतोपहारैःसिद्धेशैःसकोतूहलमीक्ष्यते १८ ॥ ७ ॥

रत्नानिअग्रेयेषांतादृशानिगोपुराणियस्मिन् १० ११ १२ क्वचिदिति अश्वखुरैःतुरंगशफैः क्षुण्णं चूर्णितं यत् क्ष्मारजः भूरेणुः तेनस्थगितं आच्छादितं अंबरंयस्मिन् १३ १४ द्वात्रिंशदिति द्वात्रिंशद्धर्माः पतिव्रतासंबंधिनः तांचरति तच्छीलयाउमया ब्रह्मविद्यारूपिण्या पार्वत्या यत्रस्थानेशिवः अर्चितः पराकाशबिलं दहराकाशरन्ध्रम् १५ १६ १७ छायेति यत्रस्थाने छायाग्राहिणा समु

दृश्यजंतुविशेषेण सदृप्रति स्पर्द्धा येषां ता दृशेः सिद्धेशैर्दिव्यसुधारसः सकौतूहलं ईक्ष्यते १८ वैतानेति वैतानानां ऋतुसंबन्धिनां वन्हिनां धूमेनवर्द्धितैः मेघैः पयोजलंसम्यक् अभिवर्ष्यते धूमज्योतिःसलिलमरुतांसन्निपातो मेघइतिप्रसिद्धेः अग्नौप्रास्ताहुतिःसम्यगादि

वैतानवन्हिधूमेनयज्वनामनुमंदिरं वर्द्धितैःसमयेमेघैःपयःसमभिवर्ष्यते १९ कामाक्षीकुंतलामोदिक ल्हारोत्तमवासितः सेवागतानांयत्रार्त्तिमनिलो हरतेन्वहम् २० कामाक्ष्यालिंगितोयत्रभगवान्परमेश्वरः कामीवालंकृतोद्यापिस्तनकंकणमुद्रया २१ देवीगर्भगृहेयत्रलिखितानिशिलांतरे लोकत्रयरहस्यानि नज्ञायंतेपियोगिभिः २२ आसीदेकाम्रनाथस्यतत्रवस्त्रावनेजकः ख्यातोविचारवान्नामभक्तिमान्प रमेश्वरे २३ सशिवानुग्रहादासीच्छैवानांवस्त्रशोधकः नैवादत्तेभृतिकापिस्जकान्वयसंभवः २४ वि भूतिरुद्राक्षभृतांकांचीपुरमुपेयुषां आसन्वासांसिशुद्धानिभक्त्यातस्यमनोयथा २५ आलोक्यवसनं दूरेशैवानांमलिनंस्वयं प्रार्थयन्सेयतान्नत्वाशोधयित्वातदंबरम् २६ आतपेशोषयित्वाचसायमेवप्र यच्छति ननिर्निजेऽन्यवसनंराज्ञोपिरजकोत्तमः २७ एवंनिवसतस्तस्यद्वात्रिंशद्वत्सराययुः एकाम्र नाथस्तद्भक्तिंपरीक्षितुमनाह्यभूत् २८ कस्यचिद्वृद्धविप्रस्यगृहीत्वावेषमीश्वरः कन्थामुद्वहन्कंथांरज कस्याग्रतोभवत् २९ सहस्ररुद्राक्षधरंभस्मोद्धूलितविग्रहं विचारवान्विप्रवृद्धंनत्वासांजलिरब्रवीत् ३०

त्समुपतिष्ठते आदित्याज्जायतेवृष्टिः वृष्टेरन्नंततःप्रजाः इतिस्मृतेश्च १९ २० २१ २२ आसीदिति वस्त्राणां अवनेजकः क्षालकः रजक इत्यर्थः २३ सइति भृतिं मौल्यं २४ २५ २६ २७ २८ कस्यचिदिति कन्थां मलदूषितां कंथां २९ ३० ॥

भ.टी. ८४ प्रवयाइतिप्रकृष्टंवयोयस्यसःप्रवयाःवृद्धः ३१ ३२ कालइतिहिमभूयिष्ठःहिमप्रचुरःमिहिकाहिमःपटच्चरंजीर्णवस्त्रं ३३ विशिष्येऽ अ.३४
तिशीतालुःशीतंनसहतेइतिसः ३४ ३५ ३६ ३७ वासइतिमातुःकामाक्षीदेव्याःआलये मंदिरेआस्वतिष्ठ ३८ ३९ ४० आदि

प्रवयास्त्वमसिब्रह्मन्महतामस्मिकिंकरः मालिन्यमंबरस्यंतेमाभूयान्मयितिष्ठति ३१ श्रीवृद्धउवाच॥
कामाक्षीदर्शनायाहंदूरादस्मिसमागतः पुरीनदृष्टपूर्वेयंनैवजानामिकिंचन ३२ कालोयंहिमभूयिष्ठो
भूयसीमिहिकानिशि नवस्त्रांतरमप्यस्तिकच्चरंचपटच्चरम् ३३ विशिष्यवृद्धःशीतालुःनजानेत्वांगृहंच
ते परकीयंनवसनंधार्यमाद्धर्मनीषिणः ३४ आचारःशीलमाचष्टेभक्तस्त्वंसाधुसंमतः कंथांसशोधयित्वे
मांशोषयित्वामहातपे ३५ सायंदातुंसमर्थश्चेतगृहाणनमृषावद इतिवृद्धोक्तिमाकर्ण्यभूयःप्राहविचा
रवान् ३६ नमेकार्यांतरंकिंचिद्वासःसंक्षालनादृते चंद्रिकाधवलंकृत्वाशोषितंचातपेनते ३७ वासःसा
यंप्रदास्यामिभगवन्मातुरालये आस्वेत्युक्त्वाऽग्रहीत्कंथांवृद्धस्यरजकोत्तमः ३८ सजन्मशतपापौघैःस
हतांसमशोधयत् बहिःप्रसारयामासपुलिनेतांद्रुतातपे ३९ रजकःसुमहत्यासोहृष्टिरीशाज्ञयानदा
कंथासाचंडवातेनक्वापिनीतादिगंतरे ४० आदिनांतमविच्छिन्नेचासारेसविचारवान् प्रतिज्ञाभंगतः
प्राणत्यागएवमहत्तरः ४१ इतिनिश्चित्यधीरःस्वंरुद्धेतस्मिन्कृतागसं त्यक्तुकामोऽतिकंशाप्यवस्त्रेनिर्नेजनाश्म
नः ४२ सिरोघातयितुंयावत्प्रवृत्तस्तावदीश्वरः तयेवकंथयासार्द्धमाविरासीद्वृषोपरि ४३ ॥ ७ ॥

नान्तमिति आदिनान्तं आसायं आसारेधारासंपाते ४१ ४२ ४३

४४ ४५ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांचतुस्त्रिंशोऽध्यायः
३४॥ ॥श्री॥ अथशिवस्यगोक्षीराभिषेकेणमहापापनिवृत्तिपूर्वकंमुक्तिरवश्यंभवतीत्याह क्षीरेति १ आख्यायिकामुपक्रमते इतिहास
मिति ब्रह्मवादिनः वेदवादिनः २ अस्तीति अभ्रसरितःमंदाकिन्याः तटेद्यौः अमरावतीव मणिनिर्झरिण्याः तन्नामिकायानद्याः ती

देवोद्यानप्रसूनानिववर्षुःखेचरस्त्रियः देवदुंदुभयोनेदुःसंवादश्चसतामभूत् ४४ निवार्यसहसोद्युक्तंस्त्रजकं
वृषभध्वजः नित्यंस्वसन्निधौवासंकैलासेतस्यदत्तवान् ४५ इतिश्रीस्कांदोपपुराणेभक्तविलासेचतुस्त्रिंशोऽ
ध्यायः ३४॥ ॥अगस्त्यउवाच क्षीराभिषेकमीशस्यगवांयत्रवितन्वते तेविमुक्तामहापापैर्मुक्तास्युस्सत्य
मुच्यते १ इतिहासमितिप्राहुःप्राचीनाब्रह्मवादिनः यस्यश्रवणमात्रेणब्रह्महत्याविनश्यति २ अस्तिस्कंद
पुरंनामख्यातंस्कंदप्रतिष्ठितं मणिनिर्झरिणीतीरेद्यौरिवाभ्रसरित्तटे ३ अप्रमत्तधियोधर्मेनित्यंहुतमखाग्न
यः अधीतचतुराम्नायाःसर्वेत्रब्रह्मवादिनः ४ षट्कर्मनिरतानित्यंसप्तर्षिसमतेजसः अष्टमूर्त्तिस्तुतिपराः
नवद्वयकलाधराः ५ दशेंद्रियनिरोद्धारःएकादशधृतेश्वराः द्वादशादित्यसंकाशाःयत्रब्राह्मणसत्तमाः ६
त्रयोदशस्वरार्थज्ञाःचतुर्दशसुदेशिकाः यत्रयज्ञविशेषेषुमरुतांयज्वनामपि ७ ॥ ७ ॥ ७ ॥

रेस्कंदपुरेऽस्तीतिअन्वयः ३ ४ षडिति षट्कर्माणियजनादीनि तेषुनिरताःनवानां द्वयं अष्टादशतादृश्यः कला विद्याः वेदवेदा
ङ्गादयः तासांधराःधारयितारः ५ दशेति दशेन्द्रियाणां पञ्चकर्मेन्द्रिय पंञ्चज्ञानेंद्रियाणांनिरोद्धारःदमनशीलाः एकादशे मनः
सिधृतः ईश्वरो यैः तादृशाः ६ त्रयोदश स्वराणां उदात्तादीनां अर्थज्ञाः चतुर्दशसु विद्यासुदेशिकागुरवः यज्ञविशेषेषु वाजपेयादि

सुमरुतां देवानां यज्वनां विधिनेष्टवतामपि व्योमयानानि रथाश्च राजवीथिषु दृश्यन्ते इत्यन्वयः ७ ८ तेज इति नारिकेलेषु तत्रत्य वृक्षेषु यत्रेति यूथगताः सजातीय समुदायगताः दुर्ग्रहाः ग्रहीतुमशक्या अपि ९ वटूनामिति वटूनां ब्रह्मचारिणां दोहेषु दोहन

रथाश्वव्योमयानानिदृश्यंतेराजवीथिषु यत्रश्रीशतरुद्रीयमहामंत्रजपोन्मुखान् ८ तेजोधिकान्विलोक्यार्कौ नारिकेलेषुलीयते यत्रयूथगतागावोदुर्ग्रहाअपियोषिताम् ९ वटूनांसामगानेनदोहेषसुकरग्रहाः तत्रा सीद्यज्ञदत्ताख्यःकश्चिद्ब्राह्मणसत्तमः १० विद्यासाम्राज्यलक्ष्मीर्यंवव्रेश्रीरिवकेशवं ११ सभापतेःशिवस्यापि तेनस्वदक्षिणाद्रव्यभरेणसत्तमः ॥ सगांवितेनेधृतहेमपट्टांयस्तस्यभार्याजनिसापवित्रा १२ तयोरर्चयतोः शंभुंनियमेनमहीयसा ॥ भाग्योदयेनपुत्रोभूत्सएमुखःशिवयोरिव ववृधेलालितोमात्राएकएवनिशा करः १३ सतांसंधानमासाद्यबाल्यएवद्विजार्भकः सपंचमाच्चप्रागब्दान्मुखादभ्यस्यताःकलाः १४ वि नैवदैवाज्ञग्राहसकृदाकर्ण्यतीक्ष्णधीः व्रतंददौचगायत्र्यंपंचमेब्देविधानतः १५ उपनीतःसगुरुणास कृदेवोपदेशतः अधीयायाखिलान्वेदान्साङ्गोपाङ्गपदक्रमान् १६ पठितानिचशास्त्राणिसर्वाण्यष्टम वर्षतः अष्टादशपुराणानांवेदानामपितत्वतः १७ तात्पर्यंशिवएवेतिनिश्चैषीत्सवृत्तिभिः परित्यज्या खिलंकार्यंभक्तिंचक्रेमहेश्वरे १८ नित्यंद्वादशसाहस्रंपंचार्णंप्रजपन्मनुं जजापैकादशावृत्तिरुद्राध्यायं

क्रियासु १० विद्येति श्रीःकेशवमिव विद्यासाम्राज्यलक्ष्मीः सकलविद्याधिपत्यसंपत् यंवव्रे वृतवती ११ सइति सभापतेःशिवस्यगां स्वद क्षिणाद्रव्यभरेण धृतहेमपट्टां वितेनेचकारेत्यर्थः १२ १३ सतामिति सतांसज्जनानांसंधानंसंसर्गं १४ विनेति गायत्रं व्रतं उपनयनमित्यर्थः

१५ १६ १७ तात्पर्यमिति वेदशास्त्रपुराणादीनां शिवएवतात्पर्यमिति निरचैषीत् निश्चितवान् १८ नित्यमिति पञ्चार्णपञ्चाक्षरंम
नुंमंत्रं १९ आदधे इति सायंप्रातः अग्नौसमिधः पालाश्यः आदधे चिक्षेप अग्निकार्यंचकारेत्यर्थः अतंद्रितः अप्रमत्तः सहस्रकृत्वः
सहस्रवारान् २० भस्मेति अवकुंठितोलिप्तः रक्षया भस्मना २१ २२ विचारेति विचारशर्मा तन्नामाद्विजपुत्रः समयंकालं २३ प्रती

आदधेसमिधोवन्हौसायंप्रातरतंद्रितः सहस्रकृत्वोगायत्रींजपत्यह्नोदितेरवौ २० भस्मावगुंठितोमौंजी
दंडकृष्णाजिनांचितः रक्षयालंकृतोभालेज्वलन्नग्निरिवाबभौ २१ आमध्यान्हंमठेस्थित्वाशिवलिंगार्चनं
व्यधात् भैक्ष्यंचपंचमेकालेभुंजानोगुर्वनुज्ञया २२ विचारशर्मासमयंगमयामासभूसुरः कदाचिल्लम्ब
मानेर्केकृतलिंगार्चनाजपः २३ प्रत्यग्रहारंभैक्षार्थंप्रातिष्ठतगृहंमठात् अजग्धयवसांधेनुंवत्सवात्स
ल्यतःपथि २४ घ्नंतमथदंडेनतद्ग्रामपशुपालकं तन्निरुध्यदुरात्मानंमहात्माधेनुसादिनम् २५ दर्शना
द्घृणिनोदस्युःपलायनमशिश्रियत् अथधेनोर्ददौग्रासंशाड्वलादाहृतैस्तृणैः २६ कमंडलुजलैस्तस्याःपि
पासामप्यपाकरोत् महिमानंचसंस्मारगवांवाचामगोचरम् २७ सर्वदेवमयीधेनुःसर्वतीर्थमयीतथा सर्वय
ज्ञमयीप्रोक्तासर्वस्यामृतसाधनम् २८ सकृदप्यग्निनिष्टप्तंयस्याभस्मप्रशस्यते पंचगव्यंयदुत्पन्नंमहापाप

तिपथिमार्गे वत्स वात्सल्यतः अजग्धयवसां अभक्षिततृणां धेनुं नवप्रसूतिकां दंडेन घ्नंतं तद्ग्रामपशुपालकं गोपालमित्यर्थः २४
अपश्यदिति शेषः महात्माद्विजः धेनुसादिनं गोपीडकम् तं दुरात्मानं निरुध्य रुध्वा अतिष्ठदितिशेषः २५ २६ २७
२८ शकृदिति शकृत् पुरीषं यदुत्पन्नं यस्याः धेनोः सकाशादुत्पन्नम् २९

३० यस्मादिति गोधूलिस्नानस्य पार्थिवस्नानत्वेन स्मरणादितिभावः ३१ ३२ ३३ ३४ स्वकर्मेति आसंगवं द्वितीयकालपर्यंतं ३५



यस्याःक्षीराभिषेकेणप्रीणातिपरमेश्वरःस्तुवंतियज्ञतत्त्वज्ञाःसर्वधर्मेषुयांचयाम् ३० यस्माद्धूलिर्गंगेवपु
नातिशिरसाधृता वृषभेंद्रोयदुत्पन्नोमहादेवस्यवाहनम् ३१ दर्शनादेवपापघ्नीसेयंधेनुर्जगत्प्रसूः ब्राह्म
ण्यसाधनंयस्याहोमेषुघृतमुच्यते ३२ दंडेनहंतितामेवदुरात्मापशुपालकः अद्यारभ्यकरिष्येहमग्निहोत्र
गवांसदा ३३ परिचर्याकिमन्येनकर्मणाभवितामम इतिनिश्चित्यगोपालंनिष्कास्यस्वयमेवसः ३४ स्वक
र्मसंगवंकृत्वाचारयामासतास्तृणं ररक्षशार्दूलैःसर्वाःपीतोदाः स्वछाययान्वितैः ३५ सुहितासुतृणैस्तासुशि
वमानर्चेनित्यशः स्निग्धशुश्रूषयातस्यपुष्टागावस्ताश्चधेनवः ३६ द्विगुणंदुदुहुःक्षीरंसमयोनातिवर्त्तते य
दाकंडूयतेतास्तुदुदुहुस्तावत्सयत्स्वयम् ३७ दुग्ध्वापयस्तुयद्दुग्धंवर्णीनिजकमंडलौ तेनाभिषिंचतिशिवंसि
कतालिंगपूजितम् ३८ एवंदिनेदिनेचक्रेश्लाघितःसकलैर्द्विजैः क्षीरबाहुल्यमुदिताःनैर्व्यातत्रवितन्वते
३९ प्रीतौचमातापितरौतन्निष्ठांवीक्ष्यतस्यतुः गवांशुश्रूषणंनित्यमेवमेववितन्वतः ४० विचारशर्मणस्त
स्ययगुःसंवत्सरास्त्रयः अथैकस्मिन्खलःकश्चित्दिनेकर्ममहात्मनः ४१ गत्वाग्रामद्विजान्सर्वान्श्रावया
मासदुर्मतिः विचारशर्मपितरावाहूयोचुश्चतेद्विजाः ४२ सुतस्तेपालनव्याजात्मध्याह्नेचारयन्पशून् निरु
ध्यशार्दूलेधूर्तोदुग्ध्वास्वैरंपयोगवाम् ४३ दोष्यासिंडीकृतेसिंचन्सैकतेविचरत्यसौ त्वत्सूनुःशिक्षणीयोसौत

सुहितास्विति तासुगोषु तृणैः घासैःसुहितासु तृप्तास्वित्यर्थः ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ॥

४५ ४६ समांसमीनामिति समांसमीनां प्रतिवर्षप्रसूयमानां गृष्टीः सकृत्प्रसूताः नैचिकीः गोषूत्तमाः वष्कयणीः चिरप्रसूताः ४७ प्रच्छायेति प्रकृष्टच्छायायुक्ते ऊधसः आपीनस्य अधस्तात्कमंडलुं कृत्वा मंदं कंडूयते स्मेत्यन्वयः ४८ ४९ वर्णीति वर्णी ब्रह्मचारी व

इति तस्योक्तिमाकर्ण्य पितरौ खेदमापतुः यज्ञदत्तः परेद्युस्तत्कृत्यं शोधयितुं क्वचित् ४५ तस्थौ निकुंजे संलीनो भूयो विप्रवचः स्मरन् अथोदिते दिवानाथे कृतकृत्यो हुतानलः ४६ समांसमीनां गृष्टीश्च नैचिकीश्च चिरप्रसूः अपि वष्कयणीः सो गाश्चारयित्वा तृणं बहु ४७ प्रच्छायेतरुमूले तां निरुध्यात्मकमंडलुं अधस्तादूधसः कृत्वा मंदं कंडुयते स्म सः ४८ पयःपूर्णं समादाय कमंडलुमथात्मनः कृत्वा सैकतलिंगस्य समीपे लिंगमर्चितुम् ४९ वर्णी प्रवर्तते तत्र पत्रपुष्पैरुपार्जितैः धातकीमूलमासाद्य तीर्थपत्रैः फलैरपि ५० भक्त्या समर्चयामास यथापूर्वं महावटुः अथागत्य पिता कोपात्पादेनास्य कमंडलुम् ५१ चिक्षेप किंकिं दुष्टात्मन्नित्युक्त्वा भर्त्सयत्सुतं पादप्रहारविध्वस्तं तस्य दुग्धं कमंडलोः ५२ विशीर्णमपतन्मूर्ध्नि शंभोः सैकतरूपिणः शिक्षादंडं गवां पाणौ गृहीत्वा द्रोहकारिणः जघान पादौ कोपेन परशुभूय सोच्छिनत् ५३ स कृत्तपादो निपपात भूमौ हाहेति मूर्छोस हसा प्रसन्नः ॥ तावत्प्रसन्नः पतिरंबिकायाः प्रादुर्बभूवास्य वृषाधिरूढः ५४ श्रीसूत उ० ॥ कैलासशिखराकारे वृषभे गिरिजासखम् अवलोक्य महादेवमस्तौषीद्ब्राह्मणिः प्रयसः ५५ अवरुह्य हरस्तदा वृषेंद्रात् दृढमाश्लिष्य सुताग्रतो जगाद मयि भक्तिमता जिता त्रिलोकी भव मुक्तः सततं भवांतिके मे ५६ निवेदितं मे यत्किंचिद्दत्तं तेऽस्तु फलप्रदं आधिपत्यं चम

र्णः प्रशस्तिः स्मरणाद्यष्टविधमैथुनाभावरूपः सोऽस्यास्तीति ब्रुवते ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७

५८ ५९ इतिश्रीमानवल्सुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपञ्चत्रिंशोऽध्यायः ३५ ॥ ७ ॥
सम्प्रतिशिवभक्त्यास्त्रियोपिमुच्यंते ताश्चस्वदर्शनमात्रेण अन्यानपि संसारसागरात्तारयंन्तीत्यध्यायचतुष्टयेनाह शिवेति १ इतिहास
मवतारयति अत्रेति २ अस्तीति हालिकानां लाङ्गलोपजीविनां केदारेषु क्षेत्रेषुसञ्चितः ब्रीहिसञ्चयः शालिसमुदायः ३ वर्द्धमानेति व



कैलासेत्वस्मितुभूयान्मुक्तिःसालोक्यरूपिणी इत्युक्त्वाभगवान्शंभुःसहतेनतिरोदधे ५८ प्रसादादस्यदेवस्य
यत्तदत्तोपितत्क्षणात् भवबंधाद्विनिर्मुक्तःकैलासपदमाप्तवान् ५९ इतिश्रीस्कांदोपपुराणेभक्तविलासेपंचत्रिं
शोऽध्यायः ३५॥ ॥श्रीअगस्त्यउ· शिवकैंकर्यमात्रेणमुच्यंतेयद्यपिस्त्रियः प्रणतंदर्शनादेवतारयंतिभवांबुधेः
१ अत्रैवोदाहरंतीममितिहासंपुरातनं स्थाणोःप्रसादःप्रत्यक्षोयद्यपिक्षियतेजनैः २ अस्तिकिञ्चित्पुरंरम्यम्
ध्वेपाटीतिविश्रुतं यत्रहालिककेदारसंचितोब्रीहिसंचयः ३ वर्द्धमानोन्नतिःस्पर्धांभजतेहिमभूभृता यत्रो
द्यानतरुस्तोमकोटरेषुद्विजन्मनाम् ४ अग्निहोत्राग्निधूमौघोधत्तेपारावतश्रियं तरुणीवदनांभोजसौरभो
र्मिषुमज्जताम् ५ मधुव्रतानांविरुतैर्दिशोयत्रनिरंतराः यदाहुर्यामुनंनामपुरंसुविपुराविदः ६ यत्रावतीर्णो
विख्यातोभक्तोवागीशसुंदरो तत्राभूत्कीर्त्तिमान्नामचतुरःकुलवल्लभः ७ हलसंभूतयाभक्तान्श्रियाय.
स्समपूजयत् धर्मश्चदेवतस्याभून्मानिनीनामवल्लभा ८ कुलसौंदर्यसौजन्यविनयादिगुणान्विता कौमुदीव

र्द्धमानाउन्नतिरौन्नत्यंयस्यहिमभूभृताहिमाचलेनसहस्पर्द्धां जिगीषांभजते तादृगौन्नत्यादितिभावः ४ ५ मध्विति मधुव्रतानांभ्रमराणां
विरुतैःनिरंतराःसान्द्राः ६ यत्रेति वागीशसुंदरो वक्ष्यमाणो कुलवल्लभः कुलपालकः ७ हलेति श्रियाधान्यरूपया ८ ९ ॥

१० ११ लक्षण्यः लक्षणेषु साधुः १२ विनीयमान इति शिक्ष्यमाणः अमोघश्रमान् सफलायासान् व्यधात् चकार शिष्यस्य विद्याप्राप्तिरेव गुरूणां अध्यापनश्रमसाफल्यमितिभावः १३ कुलेति कुलस्य स्थितिं मर्यादां द्वादशे वत्सरे सतीति शेषः १४ १५ कलीति उद्वोढुकामः

कालेनाथ तयोरासीत् कन्यैका तिलकावती सा वर्धमाना बालापि मनोनयनहर्षिणी १० शारदीव शशाङ्कस्य कलाप्रासनवोदया अथ पुत्रार्थिनस्तस्य जातः कीर्त्तिमत स्सुतः ११ लक्षण्यो बोधवान्नाम निशाकर इवांबुधेः कृतनामादिसंस्कारो बोधवान् पंचवार्षिकः १२ विनीयमानो गुरुभिस्तानमोघश्रमान्व्यधात् स्वातंत्र्यं सर्वविद्यासु दृष्ट्वा तस्याखिला जनाः १३ कुलस्थितिं कीर्त्तिमतो मेनिरे सुप्रतिष्ठितां कीर्त्तिमानपि कन्याया वयसि द्वादशे सति १४ वरमन्वेषयामास समानकुलसंपदं एतस्मिन् समये तस्य पूर्वसंबंधिवंशजः १५ कलिशत्रुरिति ख्यातः मंत्री राज्ञः शिवार्चकः उद्वोढुकामः स्वान् बंधून् प्राहिणोत् कन्यकार्थिनः १६ कीर्त्तिमंतं च ते प्रोचुर्मानिताः स्वजनांतरे कलिशत्रोरियं भार्या कन्या ते तिलकावती १७ भूयादनन्यसामान्यं तयोर्दांपत्यमद्भुतं इत्युक्तः कीर्त्तिमानाह तथास्त्विति स बांधवः १८ अतीत्य चैत्रवैशाखे मुहूर्त्तोस्त्विति मानिताः कलिशत्रुपुनः प्राप्ताः बांधवास्तदचक्षत १९ कलिशत्रुरभूत्प्रीतो वार्त्तामाकर्ण्य मंगलां अप्यभूत्तिलकावत्या मनः प्रीतिमहीयसी २० अथ राजाज्ञया शत्रून्विजेतुं समरं प्रति कलिशत्रुर्बलैः साकं वरमान्यो रणस्य तीम् २१ प्राप्तो विद्विषतां सैन्यैर्हन्यमाने र्हृतो निशि मारयित्वा बहून्योधानभवद्वैरिणा हतः २२ दिवसैः पंचषैरेव कीर्त्तिमान्ज्वररोगतः पीडितो विजहौ

विवाहं कर्त्तुकामः १६ १७ १८ अतीत्येति तत्कीर्त्तिमत प्रियं वचनं अचक्षत अकथयन् १९ २० २१ २२ दिवसै

रिति मानिन्यपि कीर्त्तिमतः कान्तापि तं कीर्त्तिमंतं अन्वगात् सतीधर्मेण अनुगमनं चकार २३ २४ २५ २६ प्रवेक्ष्यामीति जन्मनि भविष्यत् जन्मनि प्रत्यषेधन् निवारितवन्तः २७ अनूढानामिति अनूढानां अविवाहितानां कन्यकानामित्यर्थः तेद्विजातयः २८ २९



चकार पित्रोः सकलं बोधवानौर्ध्वदेहिकं कलिशत्रुं हतं श्रुत्वा शुशोच परमातुरा २४ प्रदातुकाममन्यस्मै बोधवंतं निवार्य सा वचः पित्रोः करिष्यंती दधार व्रतमुत्तमम् २५ पितृभ्यां मनसा दत्ता पुराहं कलिशत्रवे स चेद्विनिहतो युद्धे मम भाग्यविपर्ययात् २६ प्रवेक्ष्याम्यग्निमस्त्वेष पतिर्जन्मनि मामिति इति तां विहितोद्योगां प्रत्यषेधन् द्विजातयः २७ अनूढानां मृतिः शास्त्रे विहिता नेति ते गताः ततस्सा त्यक्तभोगैव स्थापितानुजरक्षणे २८ काषायवासिनी नित्यं पंचाक्षरजपान्विता भस्मोद्धूलितसर्वांगी धृतरुद्राक्षमालिका २९ वीरदेशालयं गत्वा मार्जनालेपनादिकं कुर्वती शिवनामानि कीर्त्तयंती जितेंद्रिया ३० ददाना शिवभक्तेभ्यो वासश्चान्नं यदीप्सितं मितभुग्मौनवत्यासीत् लोकवार्तासु मूकवत् ३१ अचिरात्तिलकावत्याः सदा शिवकथाश्रुतेः प्रसादमनःशंभोः प्रसादेन गुरावपि ३२ शिक्षितोग्रजया बालो द्विजशुश्रूषणेरतः अष्टादशपुराणार्थान् आग्रणीाद्गुरुसन्निधौ ३३ चकारोच्चावचान्धर्मान्मत्वा सर्वं विनश्वरं वापीकूपतडागांश्च पुण्यभूरुहवाटिकाः ३४ प्रतिश्रयांश्च गोशालाः पुष्पारामाननेकशः आर्त्तौषधप्रदानं च दीनानाथपरिपालनम् ३५ क्षीरं तैलं शि

वीरेति वीरदेशालयं शिवालयं ३० ३१ ३२ ३३ चकारेति उच्चावचान् अनेकविधान् सर्वं दृश्यं विनश्वरं अस्थिरं मत्वा यद्दृश्यं तन्नश्यमिति न्यायादिति भावः ३४ प्रतिश्रयानिति प्रतिश्रयान् पांथनिवासान् ३५ क्षीरमिति घर्मे ग्रीष्मे अस्य बालस्य बोधवतः नास्ती

तिवाक् नाभूत् यस्ययदीप्सितं तद्ददामीत्यर्थः ३६ तस्येति मूर्त्तिमद्भिः पापैः तत्स्वरूपैः जिनैः आर्हतैःपाषंडापसदैरितितेषांवि- शेषणं पाशब्देनत्रयीप्रोक्ता पालनाज्जगतःसदा तांखण्डयंतियेते वैपाखण्डावेदनिन्दकाः इतिपाखण्डशब्दनिरुक्तिः अतए- वअपसदाःनीचाः ३७ एकदेति प्राधान्यं स्वमतस्येतिशेषः अहिंसापरमोधर्मइतितेषां मतंतयानिमित्तेन अन्यत्रवैदिकमतेहिं- सया यागीयपशुहिंसया निमित्तेन दुष्टतां पापजनकताम्ऊचुः उक्तवंतइत्यर्थः ३८ अप्रमाणमिति यद्वस्तु अप्रत्यक्षंसन्नि-

चक्रेकिंबहुनोक्तेननास्यनास्तीतिवागभूत् ३६ तस्यैवंवर्त्तमानस्यपापैःप्राग्जन्मसंचितैः मूर्त्तिमद्भिरभूत्सं- गःपाषंडापसदैर्जिनैः ३७ एकदातेसमागत्यवेदबाह्यमतेस्थिताः अहिंसयोचुःप्राधान्यंहिंसयान्यत्रदुष्- ताम् ३८ अप्रमाणमुपादिष्टमप्रत्यक्षंश्रुतंचयत् विहितःक्षणिकःशब्दैःधर्मःकिंसाधयिष्यति ३९ नष्टेक- र्त्तरिनान्वेतिस्वर्गादिर्यत्फलंभवेत् उपचारश्चबिंबेषुपूर्णस्यज्योतिषःकथम् ४० ऐक्यंजीवात्मनोर्नस्या- त्सुखादेःकिंविचित्रता कर्मणाचेत्समुत्कर्षोनकोपिब्रह्मविद्भवेत् ४१ देवालयेविहारस्यात्तस्मात्तत्रनभे- दबुधः नवर्णेचाश्रमेभेदोदृश्यतेक्वचिदात्मनः ४२ बुधस्त्वमसिकिंवाचांविस्तरेणानुचिंत्य युक्तंचेदार्हतमतं

कर्णगोचरंश्रुतंशब्दप्रमाणलब्धंच उपादिष्टंतदप्रमाणमित्यर्थः शब्दैःवैदिकशब्दैःविहितःप्रतिपादितःक्षणिकःअनित्योधर्मःकिं साधयिष्यति स्वर्गादिकं कथंसाधयिष्यति धर्मस्यक्षणिकत्वेननष्टत्वादितिभावः ३९ नष्टइति नान्वेति धर्मोनानुगच्छतीत्य- र्थः यस्यधर्मस्यफलं स्वर्गादिर्भवेत् बिम्बेषु परिच्छिन्नेषुप्रतिमादिषुपूर्णस्यज्योतिषःअपरिच्छिन्नब्रह्मचैतन्यस्य उपचारः कथं भवेत् ४० ऐक्यइतिजीवेश्वरयोरैक्यंसुखादेःकिंविचित्रता किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माध्यासादितिभावः कर्मणा या

गादिनासमुत्कर्षः आससंस्काररूपः चेद्यदि नकोपि ब्रह्मविद्भवेत् कर्मणोजन्मारंभकत्वादितिभावः ४१ ४२ ४३ ४४ ४५ ४६ चैत्येति चैत्यस्यस्वसंकेतकल्पितस्य स्थंडिलस्य कटं तृणादिनिर्मितं अंबरं वस्त्रं वस्ते स्म आच्छादयतिस्म ४७ सद्भेति आर्हतमतेजिनमते

इत्यादिवचसांगुंफैराहेतानांसवंचितः वैदिकाध्वस्थितोश्रद्धामत्यजद्दुष्टसंगतः ४४ किमत्रेतिप्रलोभ्येनश्रन यन्स्वपदंजिनाः समंततःप्रवेशेनजनान्सर्वानतोषयत् ४५ बोधवानेषतत्याजस्नानंदानंद्विजार्चनं वर्णा निदायधर्मंचवेदबाह्योचिरादभूत् ४६ चैत्यप्रणामंविदधेवस्तेस्मकटमंबरं सपाटलिपुरेसर्वैरभिषिक्तोजि नैरभूत् ४७ सद्भक्ताप्राङ्नामनामान्यद्धर्मसेनाहूयोभवत् तमार्हतमताध्वन्यास्तस्थुराव्रत्यसर्वदा ४८ दर्शयंः सःपदंनेमुःसंध्ययोरार्हतस्त्रियः दृष्टतच्चित्तसाहस्रःसोभवत्पुरुषार्थवान् ४९ कटवासोमताचार्यसमतो वव्रधेसच जिनतंत्राध्वगंश्रुत्वाभ्रातरंतिलकावती ५० विदीर्णहृदयाशोकाच्छरणंप्रापशंकरं सात्ताह्न्येसरि तिस्नात्वासायंप्रातर्दिनेदिने ५१ जलार्द्रवसनादेवंभेजेभस्मावगुंठिता स्वहस्तापचितैःपुष्पैःनिर्माय विविधास्त्र जः॥ ददानाप्रस्यहंभेजेविंदुमाधीश्वरंविभुं ५२ नमःशिवायनिर्दग्धार्चितायनमःशिवायत्रिपुरान्तकाय॥ नमः शिवायाधिविमोचनायनमःशिवायप्रणतार्त्तिहंत्रे ५३ पतितंदुर्मतेबोधे भ्रातरंकरुणानिधे॥ स्वामिन्नुद्ध रदेवेशदयामयिविधीयतां ५४ एवंसंप्रार्थयन्तीसाकृत्तिवाससमीश्वरम् उपवासपराकार्श्येजगामतिलका

अध्वन्याः पांथाः तत्रप्रविष्टाइत्यर्थः ४८ ४९ ५० ५१ ५२ नमइति आधिविमोचनायमनोव्यथानाशनाय ५३ पतितमिति अबोधेज्ञानभूत्ये दुर्मतेजैने ५४ ५५ इतिश्रीमानवल्युपनामकनरसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांषट्त्रिंशोऽध्यायः ३६

संप्रतितिलकावत्याःशिवप्रसादंवर्णयति तपसेति १ तिलकावतीतिशोकंमाकृथाइत्यन्वयः नशोचति भिद्यतेहृदयग्रन्थिःछिद्यन्तेसर्वसं शयाः क्षीयन्तेचास्यकर्माणितस्मिन्दृष्टेपरावरेइतिश्रुतेः २ शृणिवति तथागतमतंजैनमतम् अस्मिन्नर्थे पुरावृत्तंवर्णयति आर्यावर्त्तइति

श्रीअगस्त्यउवाच तपसातिलकावत्याःप्रसन्नःपरमेश्वरः इदंस्वप्नेसमागत्यजगादहृदयंगमम् १ श्रीमहेश्वरउवाच तिलकावतिमाशोकंकृथामनसितेन्नतेः प्रीतोस्मिमयिसुप्रीतेसतिजंतुर्नशोचति २ शृणुचाप्यपरंवाक्यंतिलकावतियेनते तथाऽऽगतमतंप्राप्तोभ्रातायदनुशोचसि ३ आर्यावर्त्तेभवत्कश्चित्सुतपानामसर्ववित् मुनिरासीन्महाप्राज्ञःसर्वशास्त्रविशारदः ४ भक्तिमान्मयिधर्मार्थंविद्यामुपदिदेशच अज्ञानिनोयेन पुराबहवःसुधियोभवन् ५ तदाकश्चित्समागत्यशांतिमान्नाममस्करी ब्राह्मणोविहितातिथ्योशिष्याणांनमेदातदे ६ व्याकरोद्वेदसारार्थंजीवात्मेक्यंयतोभवेत् तदातस्यपरीक्षायैप्रवृत्तःसुतपामुनिः ७ तथागतमतालंबीव्याजहारात्मनोभिदां नैषवेदांतसमयःत्वंयदात्थेतिसोब्रवीत् ८ प्रामाण्यंनैववेदानामित्याहसुतपाः पुनः शशापशांतिमानेनंतदानींवेदनिंदया ९ कुपितोवेदबाह्यानामस्त्वकोयंकुलेष्विति पुनर्नत्वाक्षमस्वेतिशापांतंतमयाचत १० दययासपुनःप्राहशिवभक्तिस्तदास्त्विति मद्भक्तस्यवचोभूयान्नमिथ्यामद्वचोयथा ११ तवभ्राताऽर्हतमतं तस्मादेषप्रवेशितः पश्यमेशक्तिमतुलांत्याजयिष्यामितन्मतम् १२ ॥ ७ ॥ ७ ॥

४ ५ तदेति मस्करीयतिः ६ व्याकरोदिति वेदसारस्यउपनिषदःप्रणवस्यवा ७ तथेति भिदांईश्वरादेदं आत्मनःजीवस्य त्वंयदात्थ ब्रवीषि ब्रुवः पञ्चानामित्याहादेशः ८ प्रामाण्यमिति शान्तिमान्नामएनं यतिनं कुपितइति वेदबाह्यानांजैनानां १० ११ १२

द्वतीति तस्मैतिलकावतीश्चात्रेधर्मसेनायेत्यर्थः शूलगदं उदरशूलरोगं १३ १४ १५ १६ निपतन्निति विनेष्यंतः दूरीकरिष्यन्तः कटवा
ससः जैनाः संभूय संघीभूय १७ प्रायुंजत प्रयोजितवन्तः १८ सर्वाणीति महामयो महारोगः १९ २० आपादेति पिच्छाग्रैः मयूरबर्हा

इत्युक्त्वांतर्द्दितः शंभुः तस्मैशूलगदं ददौ प्रीतातदद्भुतंस्वप्नं दृष्ट्वासीत्तिलकावती १३ अथैकदापि बद्धुग्धं
धर्मसेनोनिशांतरे अजीर्णमभवत्क्षीरं ततश्चासीद्दुदो महान् १४ उदरे वर्द्धते व्याधिः कालकूटाग्निसंनि
भः दावाग्निरिवजज्वाल तेन मूर्छामवन्मुहुः १५ स्वच्छं दपीतमशितं यदल्पमपि तद्दुहु विव्हलः शूलरोगे
ण धर्मसेनोजिनालये १६ निपतन्नुत्सनन्निद्रां नान्च भूत्नमृतिंययौ तस्यरोगविनेष्यंतः संभूयकटवासः
सः १७ प्रायुंजन्नाऽमयघ्नास्ते विधानानाविधाः पृथक् औषधानि च दत्तानि सिद्धानि स्थलकोटिषु १८ सर्वा
णितानिनष्टानिरोगेवन्ध्योयथात्तृणं व्यजृंभतोदरे तस्यभूयः शूलोमहामयः १९ धर्मसेनः प्रवृत्तस्याः प्राणत्यागे
यथास्वयं अथ देशांतरात्केचिद्विषजोजिनसंमताः २० आपादकेशं पिच्छाग्रैरामृशंतोजपन्मनुं द्विगुणः स
चतन्मंत्रैः समुद्भवद्वर्धत २१ निराशाश्चार्हताः सर्वेमत्वातं निशिनिर्ययुः धर्मसेनोऽसहायस्सन् रुरोदभृश
मातुरः २२ नान्नंकिंचित्क्वचिल्लेभेपीड्यमानः क्षुधातृषा प्रसुप्तश्चामतिस्तस्य द्वित्रैरथदिनैः स्वसा २३ रक्षांवि
धास्यतीः स्वैकांतस्यैधात्रीमचोदयत् जिनालयप्रवेशोमेधात्रियुक्तोनचेत्स्वयम् २४ अत्रागतेस्वयंरक्षांकरिष्यामीतिसा

ग्रैः मनुंमंत्रं २१ निराशाइति आर्हताः जैनाः आतुरो रुग्णः २२ नेति द्वित्रैः दिनैः स्वसा ज्येष्ठभगिनी रक्षां विधास्यतीति मत्वेतिशेषः धा
त्रीं उपमातरं जिनालये विहारे प्रवेशो न युक्त इति हस्तिना धाव्यमानोपि न गच्छेज्जैनमंदिरं इति निषेधादिति भावः २३ २४ २५

२६ पादयोरिति रुग्णं रोगाक्रान्तं कटंतृणमयंवस्त्रं पिंडिका कुण्डिकाधरंतन्मते तद्धारणस्यविहितत्वादितिभावः २७ २८ २९ अध्वेति

विधूयजैनसमयंदीनदीनस्तथातुरः स्नात्वासपादयोःप्रापशरणंतिलकावतीम् २६ पादयोःप्रणतंरुग्णांचि
बुकश्मश्रुधारिणं कटंवसानंकरयोःपिंडिकाकुंडिकाधरम् २७ महोदरंजीर्णकंठंस्वसाज्ञात्वैवसानुजं ज्ञा
त्वाप्रसादमीशस्यस्मरंतीचविसिस्मिये २८ किमेतदितिपृष्टस्तांधर्मसेनोब्रवीत्सतीं आर्येदुष्टाहंतैरस्मिवं
चितोवेददूषकैः २९ व्यध्वभाजंजिनाश्चक्रुःमांनिवर्त्यागमाध्वनः यदामेशूलरोगोभूत्तदातेकटवाससः ३०
रोगापनयनेकर्तुमशक्तादुद्रुवुःखलाः त्वामस्मिशरणंप्राप्तःरक्षमामात्मजंयथा ३१ नास्त्यौषधमेरोगस्यन
प्रयास्यसवोमम निद्रानैवक्षुधाबह्वीभुक्तंकिंचिन्नजीर्यते ३२ कुक्षौशूलामयःसोयंहालाहलइवैधते
स्पृशत्वमुदरंकिंचित्कृतार्थःस्यांनसंशयः ३३ अथाहभ्रातरंसाध्वीदयालुस्तिलकावती कृतस्यसहतेका
लेकर्मणःफलमात्मनः ३४ अकृत्वाकोप्यविहितंनदुःखीस्यात्कदाचन प्राग्जन्मनिकृतंतावत्त्वयावेदांतदू
षणम् ३५ फलंतस्यैवपापस्यप्रवेशोजिनवर्त्मनि दूरेतथागतंदृष्ट्वाधीमांश्चक्षुर्निमीलयेत् ३६ सदृष्टश्चेत्स
मादेनपश्यन्नर्कंशिवंस्मरेत् असंभाष्यस्यतेतस्मात्त्वंनस्पृशाम्युदरंनमे ३७ बंधुस्त्वमसिजीवन्त्यामृतोवापि
जिनोह्यसि इत्युक्त्वागंतुमिच्छंतींसरुदन्तिलकावतीम् ३८ उच्चैःस्वरेणचुक्रोशपाहिपाहीतिदीनवाक् दयाव
तीतमाहात्म्यनिवृत्याऽस्तंजिनानुगम् ३९ यदिरक्षाविधेयातेमयातावत्तथागत जिनचिन्हानिसंत्यज्यस्नाहितार्थ्यं

व्यध्वभाजंकुमार्गगामिनंआगमाध्वनःवेदमार्गात् ३० ३१ ३२ कुक्षाविति अहंकृतार्थःस्यांइत्यन्वयः ३३ अथेतिसाध्वीपतिव्रता कृतस्येतिजनद्

तिशेषः ३४ ३५ ३६ ३७ ३८ ३९ यदीति हेतथागतहेजिनेति धर्मसेनसंबोधनं ४० इतीति सस्नौस्नानंचकार नवांशुकं नूतनवस्त्रम्
४१ दधाविति अलिके भाले ४२ प्रणतइति गुरुः तस्याएव तस्मैतदनुजायपंचाक्षरं शैवंमंत्रं वीरदेश्वरस्य तन्नामकस्यशिवस्यसन्निधौ
४३ जठरादिति समुड्डीय उत्पत्य अगच्छत् जगामेत्यर्थः ४४ नीरोगइति निर्मुक्तोमुक्तकंचुकः पन्नगःसर्पइव ४५ ४६ ४७ अनुपदवक्ष्य



इत्युक्तःसतयासर्वंसंत्यज्यार्हतलक्षणं सस्नौताम्रपर्णितोयेसाऽदाच्चस्मैनवांशुकम् ४१ ददौचविमलंभस्म
दधौभक्त्यालिकेचसः अथनत्वागुरुंशांतंसंस्कृततंपुनर्व्यधात् ४२ प्रणतस्तिलकावत्यातस्मैपंचाक्षरंगुरुः
उपदिश्यददौभस्मवीरदेश्वरसन्निधौ ४३ जठरात्तस्यरोगोपिकाकरूपेणनिर्गतः समुड्डीयांबरेगच्छत्सद्यः
सर्वैतिविस्मिताः ४४ निरोगोबोधवानासीन्निर्मुक्तइवपन्नगः भस्मालेपनमात्रेणदिव्यंरूपंपुनर्दधे ४५ रो
गापनयनात्सद्यःतस्यभक्तिःशिवेभवत् नपरंमन्यतेदेवंमहादेवान्महेश्वरात् ४६ स्नात्वाभस्मांकितःकुर्व
न्पंचाक्षरजपंसदा व्यतनोत्तिलकावत्याशिवेकैंकर्यमुत्तमम् ४७ तदाम्लेच्छाधिपःकश्चित्सल्लवोनामभू
पतिः तद्देशस्यविजित्यासौदग्धेबधरणीपतिः ४८ बोधवानपिकैंकर्येशंभोरामाससप्तकं कृत्वारात्रौपुरःशं
भोःस्तोत्रंकर्तुंमनोदधे ४९ अथमहेश्वरशासनचोदिताभगवतीवचसामधिदेवता व्यथितबोधवतोरसः
नाग्रसंस्थितिमभूत्स्वयतोरसनापतिः ५० इतिश्रीस्कंदोपपुराणेभक्तविलासेसप्तत्रिंशोऽध्यायः ३७ ॥ छ ॥

माणकथासंदर्भाय अवान्तरवृत्तमुपक्षिपति तदेति तद्देशस्य वीरदेशाधिष्ठितस्यअशेषधरणीपतिः आसीदित्यन्वयः ४८ ४९ संप्रति
शिवप्रसादे तस्यसारस्वतंप्रसादमेकेन वदन्नुपसंहरति अथेति वचसां अधिदेवतावाणीबोधवतः रसनाग्रे संस्थितिं व्यधित च

कार यतः सः रसनापतिः उत्तमकविः अभूदित्यर्थः ५० इति मानवल्युपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलास प्रकाशिकायां सप्तत्रिंशोऽध्यायः ३७॥ ॥ श्री ॥ अथ शिवप्रसादेन प्राप्तकवित्वातिशयः जिह्वाराज इति नाम्ना लोके प्रसिद्धो बोधवान् प्राक् संकल्पानुरूपं परं शिवं तुष्टावेत्याह महादेवेति प्राप्तं सारस्वतं वाङ्मयमेवामृतं येन सः वाच एव पुष्पाणीति रूपकं द्वयंतैः १ स्तुतिप्रः

श्रीअगस्त्य उवाच महादेवप्रसादेन प्राप्तसारस्वतामृतः जिह्वाराजः स्ववाक्पुष्पैरानर्च परमेश्वरम् १ जिह्वाराज उवाच तार्क्ष्योपगात दक्षाय विद्रुमाद्रिनिवासिने ॥ वीक्षणध्वस्तरोगाय वीरदेशाय ते नमः २ अचिकित्सामयव्यूहध्वांतविध्वंसभानवे अनाथजननाथाय नमस्ते कृत्तिवाससे ३ अज्ञानरोगवैद्याय विज्ञानामृतदायिने विश्वाधिकाय विश्वाधीरस्तु वैद्याय ते नमः ४ जगन्मंगलमूलाय जन्ममृत्युभयच्छिदे जटामंडलसंरुद्धजाह्नवीकाय ते नमः ५ दुर्मतेः सन्मतिं दत्त्वा विनीय च रुजं मम स्वभक्तं विदधे यो मां नमस्तस्मै दयाब्धये ६ समुन्नतिं नाणुरवैति मेरोः खद्योतपोतश्च न सूर्यतेजः गांभीर्यमब्धेर्न तुषारलेशः तथा विभूतिं तव वेद्मि नाहम् ७ मंदस्मितप्लुष्टपुरत्रयाय मनोभवाऽऽसंभवघस्मराय महाभयत्रस्तकृताभयाय महानुभावाय नमः शिवाय ८ यन्मेप्राग्जन्मकोटौ किंचिद्दपि न मया पादपद्मं स्मृतं ते।

कारमेवाह तार्क्ष्येति वीक्षणेन कटाक्षमात्रेण ध्वस्ता नाशिताः रोगा येन २ ३ ४ जगदिति जटामण्डले संरुद्धा जाह्नवी गंगा येन नद्युतश्चेति कप् तस्मै ५ ६ समुन्नतमिति यथेति शेषः अणुः परमाणुः मेरोः समुन्नतिं यथा नावैति न जानाति इत्यादिः ७ मंदेति मन्दस्मितेन ईषद्धासेन प्लुष्टं दग्धं पुरत्रयं येन मनोभवस्य कामस्य यः आ समंतात् संभवः प्रादुर्भावः तस्य घस्मराय नाशकायेत्यर्थः भक्त

कोधस्मरोद्धरइत्यमरः महाभयंमरणंतस्मात् येत्रस्ताःभीताःतेभ्यःकृतंअभयंयेन इदंचमार्कण्डेयोपाख्यानेस्पष्टम् ८ यदिति जुष्टं सेवितंयत्रजिनमतेजातःउत्पन्नः अहितःआधिःशूलरोगोयस्यकिञ्च जिनतायाः जिनस्यभावो जिनता नास्तिकता तस्याःअनुन्नति रत्नुदयोयस्य तादृशोहंयद्यतःकारणात् त्वान्नौमिततः भूयः ममजन्मनास्तु अपुनर्भवोभवत्वित्यर्थः मुक्तेरपिभक्तिर्गरीयसीतिमतम

तेनाभूत्जन्मजुष्टंममजिनमतभाग्यत्रजाताहिताधिः भक्त्यायास्तेप्रसादात्त्वसुरपिजिनतानुन्नतिर्नौमि यत्वां भूयःशंभोनजन्मास्त्वथयदिवदतस्त्वत्पदेभक्तिरस्तु ९ इतिस्तुत्वामहादेवंभक्त्याप्रणानमग्रतः ब भाषेभारतीदिव्याविनातन्वात्तमोरिपुम् १० तमोरिपोकृतार्थोसिभक्तिमानसियन्मयि पूतोसिजिनसंघा तात्स्तुहिमांसर्वतःकृती ११ जन्मनःफलमेतद्धियन्ममस्तोत्रसुक्तिभिः दिवानिशंचजिह्वाग्रेवर्त्तेनांत वभारती १२ वागीशइतितेनामवर्त्ततस्यथतांभुवि यदास्मरसिमांतत्वांरक्षितास्मिनसंशयः १३ इत्यु क्त्वाविरताबाणीमुमुदेथतमोरिपुः अथस्वसारमामंत्र्यवागीशस्तिलकावतीम् १४ प्रातिष्ठतस्यांव तन्नामलोकेषुववृधे स्वभ्रातरंप्रतिष्ठासुमुवाचतिलकावती १५ निवृत्तःशूलरोगस्तेशंभोरत्रैवस न्निधौ सिद्धिक्षेत्रेत्वमत्रैवस्थित्वार्केकर्यमीशितुः १६ स्वस्त्राकुर्विति सप्रोक्तःतृणखंडनिकाधरः तत्रदे वालयस्यानेचक्रेदूरेतृणानिसः १७

वतंब्याह अथेति यदिजन्मभवति तर्हिवदतः त्वांस्तुवतः ममत्वत् पदे तवचरणे भक्तिरस्तुइत्यन्वयः ९ इतीति विनातन्वा शरीरेणविना भारती अशरीरा शैवी वाणी तमोरिपुं बोधवंतं १० ११ १२ १३ १४ १५ १६ १७

१८ आब्रह्मेति ब्रह्मलोकपर्यंतं शंभुंयथाशिवमिव १९ व्याकरोदिति औपनिषदीं उपनिषत्संबंधिनीं विद्यां ब्रह्मविद्यां वेदांतशास्त्रमि

सायंप्रातश्चतुष्टावयदाशंभुंतदासुराः वर्षंतिपुष्पवर्षाणिलोकस्तद्वीक्ष्यविस्मितः १८ आब्रह्मभवनंतस्यव
वृधेकीर्त्तिरुज्वला ब्राह्मणायतयश्चैनंयथाशंभुमपूजयन् १९ व्याकरोदौपनिषदींविद्यामेषमहामतिः प्रसादं
शांकरंतस्मिनश्चथाकार्याऽर्हतोगणाः २० ईर्ष्यावंतोनृपद्वारंप्रापुस्तच्छासनोद्यताः दृष्टाःपल्लवभूपेनपूजि
ताश्चोपनिष्ठिताः २१ ईर्ष्यानिर्दग्धहृदयादुर्बुद्धिंतमबोधयन् प्रविष्टःकुत्रनास्माकंधर्मसेनोमतंमहत् २२ गृ
हीतमतसर्वस्वोव्यपदिश्यमृषामयं व्याधेर्निरोधेचाशक्तिमारोप्यास्मासुवैदिकैः २३ दूषितास्मन्मतैःसार्द्धंशैव
पाषंडतागतः सर्वथाशिक्षणीयोयंनचेस्याद्दूषितंमतम् २४ गृहीत्वाऽऽयांतुयोधास्तेमालयाच्छैवकिंकरं
इत्युक्तःप्रेषयामासभटानार्हतभूपतिः २५ वीरद्वैशालयस्थंतंबबंधुर्जगृहुश्चते निबध्यनीयमानंतमा
लोक्यतिलकावती २६ शोकार्त्ताशरणंप्रापशरणंशंकरंसता नानाविधायुधैस्तत्रछिंधिभिंधीतिवादिभिः
२७ नीतोभटैर्नृपद्वारंभस्मरुद्राक्षभूषितः तमानीतंभटैःश्रुत्वाजगादार्हतदेशिकान् २८ राजास्यदण्डः
कोवेतितेचूर्णमरणंजगुः जिनदासःसभूपालःकुरुतेनमपिस्वकान् २९ जगादकर्णेतेचूर्णपूर्णेचास्याप्य
सद्मनि वागीशंतंप्रणालीभिःसिषिंचुश्चूर्णमंडलम् ३० बद्धारेकाथचूर्णेवागीशस्तद्गृहेस्थितः घनकर्पूर
पाटीरपंकमध्येप्रतिष्ठितम् ३१

त्यर्थः व्याकरोत् व्याख्यातवान् २० ईर्ष्येति ईर्ष्यावंतःअक्षमावंतः तस्यपल्लवस्यशासनेउद्यताः उद्युक्ताः उपसमीपेनिष्ठिताःस्थिताः
२१ २२ २३ २४ २५ २६ २७ नीतइति आर्हतदेशिकान्जैनगुरून् २८ राजेति चूर्णंसुधाद्रव्यचूर्णं २९ जगा

देति प्रणालीभिः जलनिर्गममार्गैः चूर्णमंडलं सुधाचूर्णसमुदायं ३० बद्धेति बद्धं अररं कपाटं यस्य क्वथन् पचमानः चूर्णो यस्मिन् तद्गेहे स्थितः आत्मानं भावयामास इत्यग्रिमेणान्वयः तमेव विशिनष्टि घनेत्यादि घनः सान्द्रः कर्पूरपाटीरयोः घनसारचूर्णचंदनयोः यः पंकः तस्य मध्ये ३१ ३२ आत्मानमिति क्वथितः पक्वः ३३ ३४ ३५ ३६ किमिति संस्थितिं मृतिहिंसासंस्थानिमीलनं इत्यमरः ३७ अ

मौलौ च चंद्रबिंबांतः स्रुतामृतरसाप्लुतं अजरामरमक्षोभ्यमाकाशमिव निश्चलम् ३२ आत्मानं भावयामास शिवोहमिति वाक्पतिः क्वथितश्चूर्णराशिस्तं वबाधे न शिलामिव ३३ अतीते सप्तरात्रे तद्दृष्ट्वा गोशामक्षतं आनंदामृतकल्लोलमालाशीतलविग्रहम् ३४ अम्लानवदनांभोजं विजितक्षुत्तृषं नृपः बभूव सपरीवारस्त्रस्तः चित्रार्पितो यथा ३५ बभाषे चार्हतगुरून् अधृष्य दूनान् सपल्लवः मारणे सुमहानेष योगो यच्चूर्णसंहृतिः ३६ किं विद्ययौषधैर्वायं न तत्र प्राप संस्थितिं अथाहुरार्हता भूयः संभूय वचनं नृपम् ३७ अस्मद्राद्धांत शिक्षायां अत्रस्याम मनवो द्भुताः अनेन तेषां महिमा यत् संस्थाप्यो न चूर्णतः ३८ संस्थास्यते यमन्नं च देयमस्मै गरान्वितं इत्युक्तो भोजयद्भूयः पायसं गरलान्वितम् ३९ क्षुधितोसि चिरं भुंक्ष्व विघ्नयात्वं महानिति आपश्च पृथिवी चान्नमत्तारौ वन्हिमारुतौ ४० अवकाशोयमाकाशो भुज्यते किं पिनाकिना स एवायमिति ध्यायन् अन्नं

स्मदिति अस्माकं राद्धांतस्य सिद्धान्तस्य शिक्षायां मनवः मन्त्राः चूर्णतः चूर्णसमम्यास्तसिः ३८ समिति अयं बोधवान् संस्थास्यते मरिष्यति गरेण विषेण अन्वितं युक्तं ३९ क्षुधित इति आपो जलं पृथ्वी भूश्च इदं द्वयमेव अन्नं अन्नपदवाच्यं कार्यकारणयोरभेदात् अत्तारौ भक्षितारौ वन्हिमारुतौ अग्निसमीरणौ अन्नपाचकत्वात्तयोरिति भावः ४० अवकाश इति आकाशः प्रसिद्धः एतेन अष्टमूर्तेः

शिवस्यपञ्चभूतात्मकत्वात् ममतन्नबाधकमितिभावः ४१ ४२ अथेति तेन ॥ पल्लवेनतस्यबोधवतःजिघांसया हन्तुमिच्छया प्रहितः प्रेषितः भीषाभयेन ४३ ४४ ४५ नवेतितीर्थीकृतः पवित्रीकृतः ४६ समुद्रकृतां स्तुतिमाह भिन्दंतीति शिवभक्ताइतिशे

यथाहालाहलंभुक्तंजीर्णमासीद्द्विजोत्तमाः अथतत्प्रहितोहस्तीचागतस्तज्जिघांसया ४२ भीषावलोकितस्तेनभग्नदन्तःपतन्मृतः तथागतगिराभूयोनिबद्धाश्मनितंनृपः ४३ नौभिःसंप्रापयामासवार्यगाधेमहांबुधेः तमंबुधिर्यथारामंसंत्रस्तःशरणंगतः ४४ शिवाज्ञयाशिलासापिप्लवतेस्मतटंप्रति नवरत्नैःसमभ्यर्च्यसागरःसरितांपतिः ४५ पूतोस्मिचरणस्पर्शाद्हतीर्थीकृतस्त्वया ४६ भिंदंतिशैलानुदधीन्पिबंतिव्यत्यासयंतिक्षितिमंतरिक्षं तृणीकृतब्रह्मपुरंदराणांकिंदुष्करंशंकरकिंकराणाम् ४७ इतिस्तुत्वाज्ञयातस्यप्रायादब्धिर्यथागतं वीरदेश्वरमासाद्यस्वस्त्रासमुपलालितः ४८ अभितुष्टावमुदितःसुधाभिरिवसूक्तिभिः तन्माहात्म्यमवेक्ष्याथस्वयमागत्यपल्लवः ४९ भूपतिःप्रणनामास्यपद्योःरक्षमामिति अथतस्माद्दुयार्तस्यज्वरोभूज्जिनभूपतेः ५० तत्पादस्पर्शमात्रेणप्रशशामपुनर्ज्वरः तवदास्येनधन्योस्मिकर्तव्यंकिंमयाधुना ५१ इतिपृष्टोब्रवीद्वीधवान्सर्वानशिक्षयाधुना इत्युक्तःसजिनान्सर्वान्स्वदेशान्निरकासयत् ५२ देशस्थितस्यशाक्यस्यभूलारोपोभविष्यति इतितद्घोषितंश्रुत्वासौगतास्तेपलायिताः ५३ ॥ ७ ॥ ७ ॥

ष: ४७ इतीति यथागतं आगतमनतिक्रम्य प्रायात् जगामेत्यर्थः ४८ ४९ भूपतिरिति रक्षतांरक्षांकुरु भवानितिशेषः जिनभूपतेः पल्लवस्य ५० ५१ इतीति निरकासयत् निष्कासयामास ५२ देशेति शाक्यस्य जैनस्य सौगताः जैनाः ५३

पल्लवइति आर्हतानां जैनानां दुर्मतं दुष्टमतं त्यक्त्वा वैदिकं मतमास्थाय शिवार्चनाद्धेतोः श्रियं ऐहिकामुष्मिकसंपत्तिं आपेत्यन्वयः ५४ इति श्रीमानवल्लुपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां अष्टत्रिंशोऽध्यायः ३८॥ ॥ छ ॥ अथ शिवाज्ञया वागीशपदं प्राप्तस्य जिव्हाराजस्य मध्यार्जुनादिशिवक्षेत्रेषु यात्रां वर्णयति अथेति स्थलेषु शिवक्षेत्रेषु वासेच्छया १ मध्येति मध्यार्जु



पल्लवोपि महीपालः संत्यक्त्वार्हतदुर्मतं वैदिकं मतमास्थाय श्रियमाप शिवार्चनात् ५४ इति श्रीस्कंदोपपुराणे भक्तविलासे अष्टत्रिंशोऽध्यायः ३८॥ ॥ श्रीअगस्त्य उवाच अथाज्ञया महेशस्य स्थलवासेच्छया स्वयं शिवभक्ताग्रणीः श्रीमान् वागीशो निर्जगाम ह १ मध्यार्जुने च मायूरे कुंभकोणे घृतिस्थले छायावने श्वेतवने वदारण्ये घनाशने २ श्रीमहूदवने दिव्ये श्रीवाक्यपि महास्थले स्तुवन्महेश्वरं वाग्भिः तत्र तत्रैश्वसमर्चितः ३ चचार सह्यजातीरे यथा घनपथे रविः अथैकस्मिन् दिने भानौ लंबमाने स वाक्पतिः ४ प्रार्थितो द्विजवर्येण ह्यग्रहारं ययौ मुदा तत्र तद्गृहमाविश्य स्थिते तस्मिन् द्विजः सुतम् ५ अमत्रमानयेत्याह सोपि रंभावनं ययौ गृहीतेसति तत्पत्रे संदष्टोभूत्स भोगिना ६ ज्ञातत द्वैमवो विप्रः सुतप्रच्छाद्य तं मृतं भोजयामास वागीशमिंगितैरधिगम्य तत् ७ ज्ञानदृष्ट्या स्वयं तत्र गत्वास्पृष्ट्वा च तं हृदि नीलकंठ क्षणं दध्यौ उत्तस्थौ च द्विजात्मजः ८ सर्वोश्चर्यमयेतस्मिन् एतच्चित्रं विदुर्जनाः श्रीकाषानगरं प्राप्य

नादीनि क्षेत्राणि वदारण्ये अघनाशने इति च्छेदः २ ३ चचारेति सह्यजातीरे कावेरीतटे ४ ५ अमत्रेति अमत्रं भोजनपात्रं रंभावनं कदलीवनं भोगिना सर्पेण ६ ज्ञानेति इंगितैः चेष्टितैः ७ ८ सर्वेति काषानगरं तन्नामकम् ९ ॥ ७ ॥ ७ ॥

अभ्युद्गतइति कविनातत्रसेन दीनारशकलं स्वर्णमुद्राखंडं १० ११ १२ १३ विभिदेइति स्वयंविदीर्णमभूत् १४ १५ मध्येइति

अभ्युद्गतोभूत्कविनापार्वतीस्तन्यपायिना ययोर्दुर्भिक्षरक्षायैदीनारशकलंहरः १० प्रायच्छदन्वहंताभ्यांवागीशःपूजितोययौ गत्वाचिदंबरस्थानंस्तुत्वातत्रनटेश्वरम् ११ अनेकैःस्नापितोदेवैःसप्रापकमलालयं तत्रवल्मीकनाथंचत्यागेशंचमहाप्रभुम् १२ वाग्भिरम्याभिरस्तोषीत्सस्थलस्थैरपूज्यत वेदारण्यस्थलेतस्यपरीक्षार्थमुमापतेः १३ विभिदेपिहितद्वारमालयेतद्गिरास्वयं श्रीपुराणसरिन्नाम्निनगरेचेश्वरद्विषः १४ विजित्यसौगतान्राज्ञावागीशोनिरकासयत् कांतनीलीपुरेशानंस्तोतुंगच्छन्सवाक्पतिः॥ १५ मध्येमार्गपरिश्रांतःक्षुधार्त्तःशिवमस्मरत् तदानीमीश्वरस्तत्रवहन्पाथेयमुत्तमम् १६ आगत्यभोजयित्वातंविप्रवेषस्तिरोदधे स्तुत्वानीलीपुरेशानंचास्तोषीदरुणाचले १७ सेवितंविधिविष्णुभ्यांवागीशोवृषकेतनं अथकांचीपुरेदेवंकामाक्षीरमणंविभुम् १८ स्तुत्वास्थलानिवागीशश्चान्यान्यपिचकोदिशः वृद्धाचलेवेदगिरौकालहस्तीपुरेतथा १९ महेश्वरमभिष्टूयश्रीशैलंचसवाक्पतिः मल्लिकार्जुननाथंचसिद्धसंघनिषेवितम् २० अभिष्टूयपुरारातिंततोवाराणसींययौ नित्यंगंगांभसिस्नातःविशालाक्षीपतिंविभुम् २१ अभिष्टुवन्वर्षमात्रमतिष्ठत्तत्रवाक्पतिः केदारेचमहाक्षेत्रेस्तुत्वादेवंत्रियंबकम् २२ अथकैलासशैलाग्रेसोमास्कंदमवस्थितं द्रष्टुकामोययौकाष्ठामुत्तरामेकएवसः २३ पाषाणैरिवनीहारैःपिंडीभूतैरुपद्रुतः

पथिसाधुपाथेयं अन्नं १६ १७ १८ १९ २० २१ २२ अथेति उत्तरांकाष्ठां उत्तरदिशं २३ पाषाणैरिति अषीदत् विषण्णोभू

सोयंपादद्वयेशीर्णेपाणिभ्यामपिवक्षसा गच्छन्नध्वनिनोत्कंठांविजहौहरदर्शने २५ यदागंतुमशाः
क्तोभूत्तदापिपथिवाक्पतिः उच्चैस्स्वरेणचुक्रोशपाहिशंकरमामिति २६ तदातापसवेषेणभगवान्पर
मेश्वरः आगतोवाक्पतिंप्राह कस्त्वयासिद्धवेतितम् २७ कैलासेदृष्टुमीशानंप्रस्थितोस्मीतितद्गिरं श्रु
त्वाप्राहहसन्रुद्रःतवासाध्योमनोरथः २८ भवेत्कैलासशैलस्तुदुर्दर्शो विबुधैरपि वितरामिकरौपादौनिवृ
त्यपदिगच्छसि २९ नयास्यामीतितेनोक्तोमहादेवोघृणानिधिः योगिनामपिदुर्दर्शःतस्मैरूपमदर्शयत्
३० भीतःप्रणम्यपाहीतियदोवाचसवाक्पतिः तदाजगादतंदेवःप्रविशेतिसरोजले ३१ मग्नस्तत्रोन्मम
ज्जाम्बुश्रीमसंचनदीपतेः सन्निधौसद्यजातोयेविस्मयाविष्टमानसः ३२ शिवालयंविशन्नेवददर्शरजता
चलं क्षीरसागरकल्लोलमालाशिखरभासुरम् ३३ सिद्धचारणगंधर्वमुनींद्रगणसेवितं कल्पद्रुमशतोद्या
नंनदत्सिकशतोज्वलम् ३४ परितश्चाष्टदिङ्नागैःध्रियमाणंप्रयत्नतः चंद्रकोटिप्रतीकाशंजान्हवीनिर्म
रोज्वलम् ३५ तत्रसर्वोन्नतेश्रृंगेनानारत्नप्रपंचिते दिव्यसिंहासनेदेवंसोमास्कंदमवस्थितम् ३६ चतु
र्भिस्तुतमाम्नायैःचंद्रार्द्धकृतशेखरं चतुर्भुजमुदारांगंसच्चिदानंदविग्रहम् ३७ कपालमालिकाबद्धकप
र्दोज्वलमस्तकम् व्याघ्रचर्मपरीधानंव्यालराजविभूषणम् ३८ विलोक्यविस्मयाविष्टःप्रणनामपुनःपुनः उम

र्भिरिति आम्नायैः वेदैः ३७ कपालेति कपालमालिकया बद्धोयः कपर्दःजटाजूटः तेनउज्वलःमस्तकोयस्यतं व्यालराजाः सर्पश्रेष्ठाःवि

भूषणानियस्यतं ३८ ३९ ४० ४१ ४२ ४३ प्रविश्येति अगस्त्यदिग्देशं दक्षिणदेशं मधुरादिषुस्थलेषु ४४ यथेति सम्यगित्यर्थः ४५
४६ द्विजेति वेदान्तार्थान् उपनिषदर्थान् जगतां जीवभूते परमेश्वरे ४७ अणिमेति अणिमामहिमेत्यादि विभूतीः योगसिद्धीः किंपु

अवहत्प्रीतिमतुलामानंदाश्रुकलान्वितः भगवन्पाहिपाहीतिबद्धांजलिरभूत्सुरः ४० अथ तस्मै महादेवः
स्वांमूर्त्तिंसुमनोहरां प्रसन्नवदनांभोजांभूषितांभूषणोत्तमैः ४१ प्रवहत्करुणासारशीतलापांगविभ्रमां चि
दानंदमयीं दिव्यांदर्शयित्वाजगद्गुरुः ४२ सद्यस्तिरोदधेश्रीमानवाङ्मनसगोचरः तिरोहितेमहादेवेवागी
शश्चतदाज्ञया ४३ प्रविश्यागस्त्यदिग्देशंमधुरादिषुशंकरं स्तुत्वास्थलेष्वगाद्भूयः शराण्यनगरंपुनः ४४ य
थाचकारकैंकर्यमिंदुमौलेर्महात्मनः तिलकाव्यस्यपितदाशिवकैंकर्यवैभवात् ४५ त्यक्त्वाभूतमयींमूर्त्ति
मवापगतिमुत्तमां अथस्वसुर्वियोगेनखिन्नंवागीशमीश्वरः ४६ द्विजरूपीसमागत्यवेदांतार्थानबोध
यत् विदितेशजगज्जीवेशिवभक्त्याचवाक्पतिः ४७ अणिमादीस्तृणीचक्रेविभूतीः किंपुनश्श्रियं देवास्त
स्यपरीक्षार्थमुद्युक्ताविस्मयंजगुः ४८ पदेपदेचमाणिक्यंवैडूर्यंमौक्तिकंधनं चचारोल्लंघ्यवागीशोदृष्ट्वा
चाप्सरसःपुरः ४९ तृणप्रालीतिमन्वानोनाभ्युदैक्षतशुद्धधीः ॥ शिवाकारंजगत्सर्वपश्यतस्तस्यशंकरः ५०
प्रीतःप्रादात्स्वसायुज्यंदुर्लभंयोगिनामपि ५१ इतिश्रीस्कांदोपपुराणेभक्तविलासेएकोनचत्वारिंशोऽध्यायः ३९॥ ॥

नः श्रियंलक्ष्मीमिति वाक्यार्थोपपत्तिः ४८ ४९ ५० इतिश्रीमानवल्लुपनामकरुद्रसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलास
प्रकाशिकायांएकोनचत्वारिंशोऽध्यायः ३९॥ ॥श्री॥ एवंशिवभक्तसङ्गतिप्रभावंवर्णयित्वा सम्प्रति वेदशास्त्रपुराणानां अद्वैतब्रह्म

स्वरूप परमशिवपरतयास्थापनं कुर्वतामपि ज्ञानोत्पत्तिद्वारा मुक्तिरवश्यं भवतीत्याह अशक्तइति स्वयं असमर्थोपि सिद्धान्तं स्थापयि तुमिति शेषः १ कालकर्मभ्यां यदुक्तं मरणजननादिकं तेन उन्मुक्तः त्यक्तः कैवल्यं मोक्षं २. ३ पुरा वृत्तं प्रस्तौति अस्तीति विषयांतरं देशांतरं इन्द्रेण सह स्पर्द्धां जिगीषां जुषंति सेवन्ते इति तादृशाः ४ रजतेति रजतादीनां आकरः खनिः तीरं यस्यास्तया ५ कान्तेति सिंधुः समुद्रः



वेदागमपुराणानां सिद्धांतं स्थापयत्यसौ १ निर्मुक्तसकलाघौघः प्रसादात्सोपि शांकरात् कालकर्मभयोन्मुक्तः कैवल्यं ध्रुवमश्नुते २ इतिहासमिमं प्राहुरस्मिन्नर्थे महत्तमाः यस्य श्रवणमात्रेण सद्बुद्धिरुपजायते ३ अस्ति त्रैलोक्यविख्यातं विषयांतरमुत्तमं इंद्रस्पर्द्धाजुषो यत्र राजानः पाड्यवंशजाः ४ रजतस्वर्णनीलाश्मवैडूर्याकारतीरया ताम्रपर्णी महानद्या श्रीमद्दक्षिणगंगया ५ कांताधररसस्वादुस्वच्छशीतलपूरया सिंधुर्भवति संभिन्नो यत्र मुक्ताकरोत्तमः ६ यत्र क्रमुकहिंतालकुंदमाकंदचंदनैः निरंतरां महीं भानोरातपार्त्तिर्न विंदति ७ मितंपचानां गेहेपि कालागरुतरुद्रुवाः सुरभीकुर्वते काष्ठाः पाकार्थे चेधनीकृताः ८ यत्र निश्रेणिकारूढैः आतिथेयैर्महात्मभिः पत्राणि राजरंभाणां आह्रियंते जनांतरे ९ तत्र पुष्पाकरं नाम पुरमस्ति महत्तरं कर्मठद्विजवेश्मस्थशुकाध्यापितबालकम् १० राजा पुष्पध्वजो नाम तत्राभूज्जितशत्रुकः देविका नाम तस्याभून्महिषी गुणशालिनी ११ अमात्यः कुलयक्षाख्यो शिवभक्ताग्रणीरभूत् क्रतुस्पर्द्धा

संभिन्नः संगतः सम्भेदः सिन्धुसङ्गमः इत्यमरः ६ ७ मितमिति मितंपचानां दरिद्राणां ८ यत्रेति निश्रेणिरेव निश्रेणिका अधिरोहिणी तां अधिरूढैः निश्रेणिस्त्वधिरोहिणी इत्यमरः आतिथेयैः अतिथिषु साधुभिः ९ तत्रेति कर्मठानां कर्मशूराणां द्विजानां वेश्म

ये: शुकैः अध्यापिताः बालकाः यस्मिन् तत् १० ११ अमात्येति अमा सह तिष्ठतीति अमात्यः अमेत्यव्ययं अमा सह समीपे चेत्यमरः बु
द्धिसचिवः क्रतुभिः अश्वमेधादिभिः स्पर्द्धोजुषा वज्रपाणिना इन्द्रेण १२ १३ अथेति वशंवदान् स्वाधीनान् मेघान् अन्वशासत् आ

अभ्युद्धापसन्नद्धश्च तुरंगबलान्वितः निवारितश्चागस्त्येन मुनेः शासनमन्वगात् १३ अथेन्द्रः कुपितो मे
घान् अन्वशासद्वशंवदान् पांड्यमा वर्षयं त्वेतेतथा चक्रुर्बलाहकाः १४ अनावृष्टौ प्रवृत्तायां पांड्यदेशस्थि
ताजनाः दृष्टिमसह्यजातीरमवापुर्वेदवित्तमाः १५ ज्वरेणेन्द्रप्रयुक्तेन सैन्यं राज्ञो विनाशितं तदा रंध्रविदः शा
क्या बहवः सेनयान्विताः १६ पुष्पकेतनमागम्य वितेनुः कदनं स्वयं देशेथ सौगताक्रांते भस्मरुद्राक्षधारिणः
१७ पचाक्षरीजपपरान्ब्राह्मणान्वेदवादिनः प्रणम्य देविका दत्तैः स्वकीयैर्द्रविणैरपि १८ तत्र तत्र स्थिता
न्दीनान्कुलपक्षोह्यपालयत् निरुध्य सचिवं शाक्या राज्ञीमपि च सौगताः १९ बाधंते स्म स्वसिद्धांतप्रवेशे तो
जगद्गुरुः कुलपक्षश्च शरणं हालास्येश्वरमापसः २० स्वप्ने भगवता दिष्टमाकर्ण्योपायमादरात् अन्येद्यु
र्षसि प्रासेयूयं दुष्टमताइति २१ अथभीताश्च तं प्रोचुर्वादं कुर्मो द्विजोत्तमैः जये स्माकं मतं सत्यास्त्वे शो
स्तु तथाध्वनि २२ कुलपक्षोथ दूतैस्तैर्बौधवंतं समाहूयत सर्वोपचारैरभ्यर्च्य कदंबस्जयोत्सुकः २३
सर्वं विज्ञापयामास तस्मै प्रत्यक्षशंभवे सर्वमस्तु श्वदुक्तं हालास्येश्वरमादरात् २४ ॥ ७ ॥

ज्ञापयामास १४ १५ ज्वरेणेति रंध्रं छिद्रं आक्रमणसमयमित्यर्थः विन्दन्ति लभन्ते इति तादृशाः शाक्याः सौगताः १६ पुष्पेति पुष्पकेत
नं नगरं कदनं कलहं १७ पञ्चेति देविका राज्ञी तया दत्तैः स्वकीयैरपि द्रविणैः धनैः १८ १९ २० २१ २२ कुलेति कदंबराणां सौगता

नांजयेउत्सुकः उत्कंठितः २३ २४ २५ वैदिकाइति कृशाःदशपञ्चदशसंख्याकाःवैदिकाःअभीताःभयरहिताः २६ २७ पराजि
तस्येति अत्रवादेपणःद्यूतोत्सृष्टधनं २८ २९ ३० ३१ ३२ ३३ ३४ इतिश्रीमानवल्लुपनामकन्दसिंहविरचितायांस्कंदोपपुराणव्या



अथापरेद्युःप्रत्यूषेवैदिकाःसौगताअपि विवादायोद्यमंचक्रुर्हालास्येश्वरसंनिधौ २५ वैदिकास्तुदशा
भीताःकृशाःपंचदशाभवन् एकश्चबोधवानासीत्तेषांमध्येयथारविः २६ अथप्रसंगस्यारंभेबोधवाना
हसौगतान् षट्त्रिंशद्दशसाहस्रसंख्यातान्राजसंनिधौ २७ पराजितस्यशूलाग्रेस्थितिरत्रपणोस्त्वितः त
येतितैरनुज्ञातेवादःप्रववृतेमहान् २८ सर्वशक्तिःपरंज्योतिर्हालास्यपतिरीश्वरः बोधवद्वदनेस्थित्वा
जिगायसकलार्हतान् २९ शूलेष्वारोपिताःसर्वेवेदबाह्याःसहानुगाः ववर्षमुदितःशक्रःसुभिक्षास्सर्वे
तोदिशः ३० अथाऽऽगताद्विजाःसर्वेवेदोक्तंकर्मचक्रिरे राजाचकुलपक्षश्चबोधवंतंमहेश्वरम् ३१ सिं
हासनंप्रदायास्मैनेमतुस्तस्यपादयोः राज्येभिषिच्यराजानंययौस्वंबोधवान्पुरम् ३२ पुष्पध्वजोयथापूर्वं
शशासवलयंभुवः कुलपक्षोमहेशानपादाब्जदृढभक्तिमान् ३३ शिवप्रसादात्कालेनकैलासपदभागभूत्
३४ इतिश्रीस्कांदोपपुराणेभक्तविलासेचत्वारिंशोऽध्यायः ४०॥ ॥श्रीअगस्त्यउ· यस्तुपंचाक्षराचार्यपादाब्ज
ध्यानतत्परःप्रीतस्तस्मैमहादेवःप्रयच्छतिनिजंपदम् १ प्रथितात्रकथाकाचिच्छ्रूयतांवार्यतेमया यस्याःश्रवणमा

ख्यायांभक्तविलासप्रकाशिकायांचत्वारिंशोऽध्यायः ४०॥ ॥श्री॥ अथगुरुभक्त्यामहादेवःप्रसन्नोनिजपदंददातीत्याह यइति पञ्चा
क्षरस्यचआचार्यःव्याख्याकृत् तस्यपादाब्जयोः ध्यानेतत्परः आसक्तः १ इतिहासंअवतारयति प्रथितेति उत्तमा पराभक्तिः २ ॥ ९८ ॥

२ ४ ५ ६ ७ गुरुलक्षणमाह अन्यूनेति सुमुखः सुन्दरः शान्त इत्यादितंत्रोक्तलक्षणलक्षितः ८ वेदेति आचार्यो गुरुः यदि लभ्येत तस्य पु

मिथिलानगरे कश्चिद्विद्याभूराभिधो द्विजः सर्वविद्यास्वनौपम्याद्विद्याभूरिति स्मृतः ३ सपर्यालोच्य सकलान्वेदान्शास्त्राणि बुद्धिमान् विरक्तः सर्वभोगेभ्यो प्रवृत्तो मुक्तिसाधने ४ अधीतान्त्र मया वेदाः शास्त्राणि पठितान्यपि कलहं कंठशोषं च गर्वं चापि फलं त्वमी ५ शब्दब्रह्मार्णवे तावत् अगाधे चरतो मम पंचाक्षरमहामंत्रः सारवानितरद्वृथा ६ इंद्रजालकृतेवान्यत् मिथ्याफलदमीरितं आचार्येणोपदिष्टोऽयं मुक्तिदः स्यान्महामनुः ७ अन्यूनाधिकगात्रश्च दृष्टलोकपरावरः शिवभक्ताग्रणीः क्षांतः सर्वसंशयभेदनः ८ वेदोक्तसमयाचारसंपन्नो ब्रह्मविद्द्विजः आचार्यो यदि लभ्येत तस्य किं बहुसेवया ९ उदिते दिवसाधीशे दीपयत्नो निरर्थकः यथोक्ताचरणं तस्य शिष्यो न विसृजेद्यदि १० त्रयो भवंति तस्यापि दासा ब्रह्महरीश्वराः तथाविधो मे कुत्र स्यादाचार्य इति बुद्धिमान् ११ प्रदक्षिणीकृत्य भुवं प्रतस्थे द्विजसत्तमः स ब्राह्मणेषु बहुशः संचरन्नासंमतम् १२ नोपलेभे गुरुं कंचित्सदृशं सर्वतो गुणैः तत्र क्रमेणाभ्यगमन्नगरं कमलालयम् १३ रुद्रपादमहातीर्थे स्नात्वा त्यागेश्वरं विभुं सेवमानस्त्रिसंध्यं च मासत्रयमवर्त्तत १४ प्रार्थयामास देवेशं सर्वलक्षणलक्षितः भवानिव गुरुः कश्चिद्भूयादित्यन्वहं हरम् १५ अथार्द्धरात्रे भक्तो मे कश्चिदत्रागमिष्यति संप्रार्थितस्ते भविता गुरुः सुंदरनामभाक् १६ वेदभूरमिति प्राह स्वप्ने त्यागेश्वरो विभुः उत्थितः स तु देवायनत्यागादीशसं

रुषस्य बहूनां सेवया किं प्रयोजनं आचार्यवान्पुरुषो वेदेति श्रुतेरिति भावः ९ तत्र दृष्टान्तमाह उदित इति १० ११ १२ नेति नोपलेभे न लब्धः

१८ १९ २० २१ २२ २३ २४ २५ २६ सइति मे सख्युः मित्रस्य शिवस्येत्यर्थः शिवसुन्दरयोः सख्यं प्राक्

घातरुद्रीयमंत्रेण तुष्टाव परमेश्वरं अथाद्वितीये परांबोधौ निमग्ने नागरे जने १८ संसुप्ते त्यागराजस्य धन्यमे
कांतसेवया प्रेयसीशयनोल्लासवेषधारिणमागतम् १९ प्रतिबिंबं महेशस्य दिव्यलक्षणलक्षितं सुंदरं
वीक्ष्य सहसा विद्याभूरिति विस्मितः २० गृहीत्वा पादयोस्तस्य प्रणामशतमातनोत् कस्त्वं किं ते कुत इति पृ
ष्टस्तेनात्मनोखिलम् २१ तस्मै निवेद्य वृत्तांतं ययाचे मनुमुत्तमं प्रयांतं प्रेयसीवेश्माप्यनुक्त्वा किंचिदुत्तर
म् २२ अन्वीयात्सुंदरं धीमान् छायेव सह देहिनं सुंदरे तत्र गते वेश्म बहिः कक्षांतरे स्थितः २३ पृष्टः कस्त्वं कि
मत्रेति विद्याभूस्तदाश्रयः ऊचे सुंदरदासस्त्वं मुमुक्षुं शरणागतम् २४ ते च तस्यै वदंति स्म तद्वृत्तांतमशेष
तः सुंदरं प्राह वेश्या सा हसंती शयनांतरे २५ कथं गुरुस्त्वं धूर्तोसि मुमुक्षोरग्रजन्मनः त्वयोपदिष्टं किं वास्यान्मु
क्तं बंधो व्रजेन्नु सः २६ स सुंदरः प्रियामाह परिहासोत्र नोचितः निदेशादुपदेक्ष्यामि सख्युर्मे मनुमुत्तमम्
२७ न पुनर्जन्म तस्यास्ति न मे चाऽऽवां हसंति ये तेषामेव महाघोरे संसारे भ्रमणं भवेत् २८ इत्युक्त्वा तां स
माश्लिष्य सुष्वाप निशि सुंदरः अथ स्वप्ने समागत्य तमाह त्यागनायकः २९ हे सुंदर सखे वाचं मदीयां श्रो
तुमर्हसि भक्तश्चैव विरक्तश्च पात्रभूतो द्विजोत्तमः ३० पंचाक्षरोपदेशेन कृतार्थः क्रियतामिति ॥ अथ प्रातः
समुत्थाय गच्छंतं सुंदरं द्विजः ३१ नमस्कृत्वानुवव्राज भावयन् भवमेव तं प्रीतश्च सुंदरस्तस्मै स्नातायकमला

बहुधा वर्णितं मनुं मंत्रं २७ २८ २९ ३० अथेति स्वप्ने शिवनिदेशानंतरं ३१ ३२ ३३ ॥

पंञ्चाक्षरार्थमाह मलेति कायिकवाचिकमानसिकभेदेन त्रिविधं मलं तस्य नाशः अर्थो वाच्यो यस्य शिवशब्दार्थः पशुपाशनिवृत्तिप्र
योजनकः किंच पशुशब्दस्य वर्णमर्यादया कादिनवेत्यादिरीत्या पकारस्य एकत्वसंख्यार्थः पादिपंचेति वररुचिसूत्रात् शुकार
स्य पंचत्वसंख्यार्थः तथाच तयोर्मेलने अंकानां वामतो गतिरिति न्यायेन एकपंचाशद्भवति तस्य च लक्षणया हि पंचाशदर्थः तान्
पाशान्मोचयतीत्यर्थः  तदुक्तं शिवरहस्ये पंचक्लेशैर्द्विपंचाशत्पाशैर्बद्धा अतियः पशून् स एव मोचकस्तेषां भक्त्या सम्यगुपा
सितः इति पौराणिकरीत्या निष्कर्षः अथवा अणुर्भेदः कर्म्म चेति त्रयः पाशास्तत्राज्ञानमणुः तच्च चैतन्यस्वरूपे आत्मन्यात्मताभा
वो देहादावनात्मन्यात्मत्वज्ञानं चेति द्विविधं द्विविधमप्येतत्संभूयाणवं मलमित्युच्यते अणुपदवाच्यत्वं चास्यापरिच्छिन्नस्याप्या

उपादिक्षन्महामन्त्रं पञ्चार्णं पापनाशनं तदर्थं बोधयामास भक्त्या प्रातः स सुंदरः ३३

मलत्रितयनाशार्थो नमःशब्दोस्य वाचकः तस्यार्थः शिवशब्दश्च पशुपाशनिवृत्तये ३४

त्मनः परिच्छेदकत्वात् तदुक्तं सौरसंहितायां आत्मनोणुत्वहेतुत्वाद्णुमालिन्यतो मलमिति एकस्यैवात्मनो नानात्वं तु भेदः तत्र मूलका
रणं मायाख्यं तत्त्वेषु षष्ठमेकं तज्जन्यं सप्तमादिषट्त्रिंशांततत्त्ववृन्दमपरमिति द्विविधमपि मायीयं मलमित्युच्यते विहितनिषिद्धक्रिया
जन्यं शरीरदानक्षममदृष्टं तु कर्म तदपि पुण्यपापभेदेन द्विविधमपि संभूय कार्मणं मलमित्युच्यते एतेषु त्रिषु कर्मभेदेषु उत्तरोत्तरं
पूर्वपूर्वव्याप्यं सर्वमिदमभिहितं प्रत्यभिज्ञाशास्त्रे स्वातंत्र्यहानिर्बोधस्य स्वातंत्र्यस्याप्यबोधता द्विधाणवं मलमिदं स्वस्वरूपाप
हारतः भिन्नवेद्यप्रथात्मात्र मायीयं जन्मभोगदं कर्तर्यबोधे कार्म्मं तु मायाशक्त्यैव तत्त्रयमिति स्पष्टतरमुक्तं शैवसूत्रवार्तिके नन्वेवं
विधविश्वस्य चैतन्यं चेद्वपुस्तदा कथं बंधस्य संबंध इति शंकां व्यपोहितुं अश्लेषाश्लेषपाठाभ्यां सूत्रमाह महेश्वरः अज्ञानं बंधः अ
ज्ञानमिति तत्राद्यं चैतन्यस्फाररूपिणि आत्मन्यनात्मताज्ञानं ज्ञानं पुनरनात्मनि देहादावात्ममानित्वं द्वयमप्येतदाणवम् मलं

स्वकल्पितंस्वस्मिन्बंधःस्वेच्छाविभावितःकिमाणवमलास्तैवबंधोयत्नेषुदीर्यते योनिर्वेगैः कलाशरीरंयोनिभेदप्रथाहेतुःमायाव
गैस्तदुत्थितःकलादिक्षितिपर्यंतस्तत्वराशिस्तदात्मकः मायीयाख्यंमलंतत्तद्भिन्नवेद्यप्रथामयं कलेतिकायमालिन्यपरिच्छेदकरीन्द
णां व्यावृत्तिःपुण्यपापात्मशरीरंयस्यतस्तुनः कार्मणंमलमेतस्मिन्द्वयेबंधोनुवर्त्ततइतिएवंभूतेषुत्रिषुपाशेष्वेकेनद्वाभ्यांत्रिभिरपिबंध
प्रयुक्ताजीवाअपित्रिविधाःपशुपदेनोच्यन्तेयद्यपित्रयाणांप्रस्तारेष्वेकएकस्त्रयोद्विकास्त्रयस्त्रिकएकइतिसप्तविधाजीवाःसंपद्य
न्तेतथाप्यणुकर्मभेदानामुत्तरोत्तरस्यपूर्वपूर्वव्याप्यत्वनियमात्त्रिस्त्र एवपशोर्विधाः तेचपशवोनिसाहृदये शुद्धमिश्राःशुद्धपदैर्व्य
वह्रियंते स्वच्छन्दतंत्रादौतुविज्ञानकेवलाःप्रलयाकलाःसकलाइतिव्यवहृताः तथाचोक्तम् पशवस्त्रिप्रकाराःस्युस्तेष्वेकेसक=
लामताः प्रलयाकलनामानस्तेषांकेचिन्महेश्वरि विज्ञानकेवलास्त्वन्येतेषांरूपंक्रमाच्छृणु इति तेषुत्रिभिरपिपाशैर्बद्धः सकलःत
दुक्तं अनादिमलसंछन्नोमायाकर्मावृतोविभुः [illegible]रैरशिवतत्त्वज्ञोभेदैकरसिकोलघुः सर्वदाकर्मकर्ताचस्वकर्मफलभाजकः नि
त्यंविषयसंसक्तःसकलःपशुरुच्यते अत्रमल[illegible]शब्दावणुभेदपरौ एतेचसकलाख्याःपशवोमलपाकापाकाभ्यांद्विविधाः तत्रये
पक्वमलत्रयास्तेषांमध्येअष्टादशोत्तरशतसंख्याक[illegible]ःपरिपूर्णशिवानुग्रहवशान्मंत्रेश्वरत्वंआसादयंत्तेतेचशतंरुद्राख्याअष्टौशतमंड
लिनो अष्टौक्रोधभट्टारकादयो वीरेश्वरःश्रीकं[illegible]तिद्वाविति अन्यानप्याचार्यरूपेणशिवएवानुगृह्णाति अपरिपक्वमलत्रयांस्तु=
भोगेनमलपाकायनानायोनिषुनियुंक्तेसोपिच[illegible]हएव तदुक्तं मलादीनामपाकेतुसामान्यानुग्रहोभवेत् आधिकारिकमैश्वर्यंशिवानु
ग्रहमात्रतः पशवस्त्रिप्रकारास्तुप्राप्नुयुःपरमेश्वरा[illegible] नानायोनिषुपाकायनियुंक्तेनुजिघृक्षयेति अणुकर्माख्यपाशद्वयबंधास्तुप्रलयाक
लाः तेपितयोःपरिपाकतदभावाभ्यांद्विविधाःतेष्वन्याःकर्मवशाद्दुत्तमयोनिषुजायंते आद्येषुयत्रेश्वरानुग्रहस्तेभुवनेश्वराभवंति त
दुक्तंस्वच्छंदसंग्रहे मिश्राःप्रमातृरूपाःस्युः प्रलयाकलसंज्ञिकाः पुर्यष्टकशरीराश्च पृथक्कर्मवशास्त्रियेसर्वयोनिषुसंप्राप्यभोगाढ्याः

स्वस्वकर्मणा भुक्त्वा भोगानितेषांतुकर्म्मसाम्येशिवः स्वयं सुपक्वमलकर्मोणस्तान् किंचिदनुगृह्यच जलादिजडतत्वानांमध्यलोकेश्वरा
स्त्रियेति अणवोमलमात्रबद्धाविज्ञानकेवलाः तदुक्तं मलमात्रेणसंबंधःपशुर्विज्ञानकेवल ःसपक्वमलविज्ञानकेवलःसस्वयंप्रियेइ
ति तेपिसमाप्तकलुषाअसमाप्तकलुषाश्चेतिद्विविधाः तत्राद्याविद्येश्वराः अंत्यास्तुसप्तकोटिमहामंत्रात्मकाः नचतेषांजडत्वमिति
शंक्यं शब्दरूपशरीराणांजडत्वेपिशरीराणामस्माकमिवचेतनत्वोपपत्तेः अतएव मृगेंद्रसंहितायां आधानादिमलोपेतःसर्वकृत्स
र्वदृक्शिवः पूर्वव्यत्यास्थितस्याणोःपाशजालमपोहतीति आगमिकाअप्याहुः भुक्तिंमुक्तिमथाणूनांस्वव्यापारेसमर्थानांजडवर्गस्य

मंत्रेणानेनसततंसमुपास्वमहेश्वरं तस्यैक्यसंप्रदानार्थंसंप्रदायोऽयएषते ३५ वर्णितस्त्वंकृतार्थोसिकामक्रो
धौसदात्यज समुद्रःस्वविकारेषुयथासततमन्वितः ३६ तथास्यकरणंकार्येदृश्येभातिमहेश्वरः मंत्रोयं
गुर्वभक्तानांनैवसिध्यतिकर्हिचित् ३७ गुरौमाहेश्वरीबुद्धिर्वेदबुद्धिस्तदुक्तिषु तस्यधन्यस्ययस्यास्तिक
र्मणीश्वरकृत्यधीः ३८ तस्यायंमुक्तिदस्सद्योनात्रकार्याविचारणा शिववत्पूजनीयास्तेशिवभक्तास्तुसर्व
तः ३९ गुरुर्यथातथापूज्याःसर्वत्रब्रह्मवादिनः दिव्यंचक्षुश्चदत्तंतेस्वैरंसंचरमाभयम् ४० ॥ ७ ॥

विधत्तेसर्वानुग्राहकः शंभुरिति अपक्वमलजीवत्वादेवमंत्राणामणुसञ्ज्ञापि एवंषड्विधानामपिपशूनांमलपाकतारतम्यादनंताभेदाः
तेषांच तत्तत्तारतम्यार्थंयोनिप्रापणेश्वर्यदानान्यपिभोगेनमलपाकार्थत्वात्पाशविमोचनरूपाण्येव तथाचपशूनांमुक्तरूपाणां पा
शान्मलान् विशेषेणतत्तद्योग्यतानुसारेणमोचयतीतिपशुपाशविमोचकः ३४ मन्त्रेणेति समुपास्वसम्यक्उपासनांकुरु ३५ वर्णि
तइति समुद्रःस्वविकारेषुजलमयेषु यथा अन्वितः अनुस्यूतः समुद्रस्यजलस्यैव मेघद्वारा वृष्ट्यासर्वत्रानुगमादितिभावः ३६ तथा

स्वकल्पितंस्वस्मिन्बंधःस्वेच्छाविभावितःकिमाणवमलास्तैवबंधोयत्नेसुदीयेतेयोनिर्वेगैःकलाशरीरंयोनिर्भेदप्रथाहेतुःमायाव
र्गस्तदुत्थितःकलादिक्षितिपर्यंतस्तत्त्वराशिस्तदात्मकःमायीयाख्यंमलंतत्तद्भिन्नवेद्यप्रथामयं कलेतिकायमालिन्यपरिच्छेदकरीन्द्र
णां व्यावृत्तिःपुण्यपापात्मशरीरंयस्यतस्यपुनःकार्मणंमलमेतस्मिन्द्वयेबंधोनुवर्त्ततइति एवंभूतेषुत्रिषुपाशेष्वेकेनद्वाभ्यांत्रिभिरपिबंध
प्रयुक्ताजीवाअपित्रिविधाःपशुपदेनोच्यन्तेयद्यपित्रयाणांप्रस्तारेष्वेकएकस्त्रयोद्विकास्त्रयस्त्रिकएकइतिसप्तविधाजीवाःसंपद्य
न्ते तथाप्यणुकर्मभेदानामुत्तरोत्तरस्यपूर्वपूर्वव्याप्यत्वनियमात्त्रिस्र एवपशोर्विधाः तेचपशवोनिस्वाहृदये शुद्धमिश्राःशुद्धपदैर्व्य
वह्रियंते स्वच्छन्दतंत्रादौतुविज्ञानकेवलाःप्रलयाकलाःसकलाइतिव्यवहृताः तथाचोक्तम् पशवस्त्रिप्रकाराःस्युस्तेष्वेकेसक=
लामताः प्रलयाकलनामानस्तेषांकेचिन्महेश्वरि विज्ञानकेवलास्त्वन्येतेषांरूपंक्रमाच्छृणुविति तेषुत्रिभिरपिपाशैर्बद्धःसकलःत
दुक्तं अनादिमलसंछन्नोमायाकर्मोदृतोविभुः [illegible]रेशिवतत्त्वज्ञोभेदैकरसिकोलघुःसर्वदाकर्मकर्त्ताचस्वकर्मफलभाजकः नि
त्यंविषयसंसक्तःसकलःपशुरुच्यते अत्रमल[illegible]शब्दावणुभेदपरौ एतेचसकलाख्याःपशवोमलपाकापाकाभ्यांद्विविधाः तत्रये
पक्वमलत्रयास्तेषांमध्येअष्टादशोत्तरशतसंख्याकाः[illegible]परिपूर्णशिवानुग्रहवशान्मंत्रेश्वरतांआसादयंतितेचशतरुद्राख्याअष्टौशतमंड
लिनो अष्टौक्रोधभट्टारकादयो वीरेश्वरःश्रीकं[illegible]तिद्वाविति अन्यानप्याचार्यरूपेणशिवएवानुगृह्णाति अपरिपक्वमलत्रयांस्तु=
भोगेनमलपाकायनानायोनिषुनियुंक्तेसोपिचानु[illegible]हएव तदुक्तं मलादीनामपाकेतुसामान्यानुग्रहोभवेत् आधिकारिकमैश्वर्यशिवानु
ग्रहमात्रतःपशवस्त्रिप्रकारास्तुप्राप्नुयुःपरमेश्वरी[illegible] नानायोनिषुपाकार्थनियुंक्तेनुजिघृक्षयेति अणुकर्माख्यपाशद्वयबंधास्तुप्रलयाक
लाः तेपितयोःपरिपाकतदभावाभ्यांद्विविधाःतेष्वन्याःकर्मवशादुत्तमयोनिषुजायंते आद्येषुयत्रेश्वरानुग्रहस्तेभुवनेश्वराभवंति त
दुक्तंस्वच्छंदसंग्रहे मिश्राःप्रमात्तरूपाःस्युःप्रलयाकलसंज्ञिकाः पुर्यष्टकशरीराश्च पृथक्कर्मवशास्त्रियेसर्वयोनिषुसंप्राप्यभोगाद्याः

स्वस्वकर्मणा भुक्त्वा भोगानितेषांतु कर्म्मसाम्ये शिवः स्वयं सुपक्वमलकर्मणस्तान्किंचिदनुगृह्य च जलादिजडतत्वानांमध्यलोकेश्वर
त्रियेति अणवो मलमात्रबद्धा विज्ञानकेवलाः तदुक्तं मलमात्रेणसंबंधः पशुर्विज्ञानकेवल :सपक्वमलविज्ञानकेवलः सस्वयंप्रियेद्
ति तेपिसमाप्तकलुषाश्च असमाप्तकलुषाश्चेतिद्विविधाः तत्राद्याविद्येश्वराः अंत्यास्तु सप्तकोटिमहामंत्रात्मकाः नचतेषांजडत्वमिति
शंक्यं शब्दरूपशरीराणांजडत्वेपिशरीराणामस्माकमिवचेतनत्वोपपत्तेः अतएव मृगेंद्रसंहितायां आधानादिमलोपेतः सर्वकृत्स
र्वदृक्शिवः पूर्वव्यत्यास्थितस्याणोःपाशजालमपोहतीति आगमिकाअप्याहुः भुक्तिंमुक्तिमथाणूनांस्वव्यापारेसमर्थानां जडवर्गस्य

मंत्रेणानेनसततंतमुपास्वमहेश्वरं तस्यैक्यसंप्रदानार्थंसंप्रदायोऽयमुच्यते ३५ वर्णितस्त्वंकृतार्थोसिकामक्रो
धौसदात्यज समुद्रःस्वविकारेषु यथासततमन्वितः ३६ तथास्यकरणंकार्येदृश्येभातिमहेश्वरः मंत्रोयं
गुर्वभक्तानांनैवसिध्यतिकर्हिचित् ३७ गुरौमाहेश्वरीबुद्धिर्वेदबुद्धिस्तदुक्तिषु तस्यधन्यस्ययस्यास्तिक
र्मणीश्वरकृत्यधीः ३८ तस्यायंमुक्तिदस्सद्योनात्रकार्याविचारणा शिववत्पूजनीयास्तेशिवभक्तास्तुसर्व
तः ३९ गुरुर्यथातथापूज्याःसर्वत्रब्रह्मवादिनः दिव्यंचक्षुश्चदत्तंतेस्वैरंसंचरमाभयम् ४० ॥ ७ ॥

विधत्तेसर्वानुग्राहकः शंभुरिति अपक्वमलजीवत्वादेवमंत्राणामणुसञ्ज्ञापि एवंषड्विधानामपिपशूनांमलपाकतारतम्यादनंताभेदाः
तेषांच तत्तत्तारतम्यार्थयोनिप्रापणैश्वर्यदानान्यपिभोगेनमलपाकार्थत्वात्पाशविमोचनरूपाण्येव तथाचपशूनामुक्तरूपाणां पा
शान्मलान्विशेषेणतत्तद्योग्यतानुसारेणमोचयतीतिपशुपाशविमोचकः ३४ मन्त्रेणेति समुपास्वसम्यक्उपासनांकुरु ३५ वर्णि
तइति समुद्रःस्वविकारेषुजलमयेषु यथा अन्वितः अनुस्यूतः समुद्रस्थजलस्यैव मेघद्वारा वृष्ट्यासर्वत्रानुगमादितिभावः ३६ तथा

अस्यशिवस्यकरणंकृतिः कार्येदृश्येजगतिभाति ३७ ३८ ३९ ४० इतीति सुतादिषु आदिनाजन्मादिपरिग्रहः ४१ ४२ ४३ ४४ गते
इति भवितासे भविष्यामि ४५ ४६ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायां



इत्यादिष्टःस्वगुरुणास्वपदंप्राप्यभूसुरः ध्यायन्सुंदरपादाब्जनामचास्यसुतादिषु ४१ वस्त्रान्नगंधपुष्पाद्यैःशि
वभक्तान्समर्चयन् नित्यंद्वादशसाहस्रंजपन्पंचाक्षरीमनुम् ४२ मलत्रयविनिर्मुक्तोजीवन्मुक्तोबभूवह क
दाचिद्दंजुलपुरेनिवसन्ज्ञानचक्षुषा ४३ परेद्युरपिकैलासयात्रांस्वगुरुवांछितां विज्ञायमनसाद्ध्योकर्त्तव्यं
भूसुरोत्तमः ४४ गतेप्राणेशरीरस्यज्योतिषश्चापिचक्षुषः विज्ञानदेतिरोभूतेभवितासेतथास्त्विति ४५ इतिनि
श्चित्यमनसाप्राणानायम्ययोगतः कलांभूतमयींत्यक्त्वाशिवसायुज्यमासवान् ४६ इतिश्रीस्कंदोपपुराणे
भक्तविलासेएकचत्वारिंशोऽध्यायः ४१॥ ॥श्रीअगस्त्यउ· अन्नंक्षीरंफलंवापियोदद्यात्शिवयोगिने भ
वानीशंकराभ्यांचपूजितोमुक्तिमेतिसः १ इतिहासोस्तिलोकेषुप्रथितःपूजितःसुरैः उच्यतेश्रवणाद्यस्यज्ञा
यतेभक्तिवैभवम् २ कवेरतनयापूरसदावर्द्धितसंपदि शाल्मलीवननामास्तिपुरंसुरपुरोपमम् ३ यत्रहर्म्ये
षुरम्येषुपूजितारत्नराशयः स्पर्द्धंतेमेरुणानित्यंवर्द्धमानादिनेदिने ४ तत्राभूद्धनदत्ताख्योवणिजांप्रवरोव=
णिक् नित्यान्नदानाद्भक्तानांकिंकरीकृतशंकरः ५ अनपत्यतयासर्वमपूतंस्वममन्यत उपास्तेस्मव्रतैःशंभुंअप
त्यार्थमहाधनः ६

एकचत्वारिंशोऽध्यायः ४१॥ ॥ॐ॥ अथशिवभक्तेभ्योऽन्नपानादिदातुःभवानीशंकरप्रीतिपूर्वकंमुक्तिर्भवतीत्याह अन्नमिति १ २ कवेरे
ति कवेरतनयाकावेरी तस्याःपूरेणप्रवाहेणवर्धिता संपत्यस्यतादृशि दक्षिणदेशेइत्यर्थः ३ ४ ५ अनपत्येति अनपत्यतयासन्तानर
हितेनस्वमात्मानं अपूतं अपवित्रं अमन्यत अपुत्रस्यगतिर्नास्ती
ति स्मृतेरिति भावः ६ ॥

७ ८ कन्यायाःनामसहेतुकंनिर्वक्तितयेति ९ सेति मुदेति सहार्थे तृतीया तथाच मातापित्रोःहर्षेण साकं ववृधे गतवतीत्यर्थः १० आपादेतिनि

तस्यशंभुप्रसादेनकन्याकाचिदजायत यथाहिमवतोगंगालक्ष्मीर्दुग्धांबुधेरिव ७ वणिग्विलोक्यतांकन्यांक
लामिवकलानिधेः मुमुदेचात्मनोवंशंतयापूतममन्यत ८ तथायतःकुलंपूतंधनदत्तस्ततःपिता चक्रेपूत
वतीनामतनयांतांमहाधनः ९ सापिपित्रोर्मुदाबालाववृधेरूपशालिनी धनदत्तगृहेयद्वन्नंदतेकल्प
वल्लरी १० आपादकेशंविविधरत्नाभरणजालकैः भूषितामोहयामासबाल्यएवनिधिश्रियम् ११ शिवभ
क्तवितीर्णेनभस्मनावणिजांपतिः दीर्घायुष्याभिवृध्यर्थमलंचक्रेसुतामपि १२ कालेसमानंनिश्चित्यरूप
द्रविणसंपदा सुतंपरमदत्ताख्यंनागपूर्वेणिजंवणिक् १३ आहूयप्रददौकन्यांधनदत्तःसबंधुमान् वणि
ग्वधूवरौयुक्तौरतिपंचशराविव १४ वितेरतुर्मनःप्रीतिंबंधूनांपश्यतांपुरः प्रार्थयित्वाथपितरौवरस्यनिज
मंदिरे १५ स्थापयामाससुतयासार्द्धंपरमदत्तकं नित्यंपरमदत्तोपिशिवभक्तसहस्रकम् १६ भोजयित्वा
स्वयंभुंक्तेपूतवत्यागृहांतरे अर्द्धंविभज्यस्वधनंजामात्रेसददौमुदा १७ निर्मायहर्म्यमपरंवणिक्परमदत्त
कं तत्रप्रवेशयामासकन्यांजामातरंतथा १८ सर्वसंपत्समृद्धंतद्दंपत्योर्मंदिरंतयोः अंतःपुरोत्तमंसिद्धंलक्ष्मी
माधवयोरिव १९ त्वयान्नंशिवभक्तेभ्योदीयतामनिवारितं इतिपूतवतींभार्यांशिवभक्तःसमन्वशात् २०
आबाल्यंशिवभक्तासाभक्तानभ्यागतान्गृहे सक्षीराज्येनचान्नेनतर्पयामाससर्वदा २१ ॥ ७ ॥

धेःपद्मादेःश्रियंमोहयामास निधिभ्रान्तिमुत्सारयामासेत्यर्थः ११ १२ १३ १४ वितेरतुर्ददतुरित्यर्थः १५ १६ १७ १८ १९ २० २१ ॥ ॥

भक्तान्ररक्षमातेवबांछितान्नप्रदानतः बुभुजेयुवतिःकालेभोगान्शच्याश्चदुर्लभान् २१ पयःफेननिभा शय्यानवरत्नमयंगृहं अनुकूलश्चभर्त्तास्याःपुपुषुर्मुदमुत्तमाम् २२ उपचारेषुभक्तानांनालस्यंक्वचिदाश्र यत् गमयामाससमयंभक्तिर्मूर्त्तेववशंकरी २४ अथैकस्मिन्दिनेकश्चिद्भक्तःशंभोरुपायनं ददौपरमदत्ता यसहकारफलद्वयम् २५ एकनालंतदादायपूतवस्यै ददौचसः अथापरेद्युस्तद्गेहंगिरीशोभक्तवेषधृक्॥ २६ आगत्यक्षुधितोस्मीतित्वरयामासतांसती पूतवस्यपितंनत्वाजगादविनयान्विता २७ भवितासमयेऽः पाकःकिंचिदन्नमिहाधुना भुज्यतामितिसक्षीरंफलमेकंतयोरपि २८ तद्दत्वाभोजयामासतृप्तःसोपितिरो दधे सिद्धानांमहिमागोप्यइतिसाहृदितद्दधे २९ प्राग्भुक्तवद्भिःस्वगृहेविहिताशीस्तपस्विभिः सायंपरमद त्तोपिभोक्तुमंतर्गृहंययौ ३० भर्त्रेपरमदत्तायहितमन्नंपयोघृतं दत्वातंभोजयामासददावाम्रफलंचतत् ३१ अमृतास्वादसरसंतत्फलंप्राश्यहृष्टधीः अन्यत्क्वेतिमुखंतस्यावीक्षतेस्मवणिग्वरः ३२ अथसास्वकृ तंवक्तुमशक्ताभयपीडिता महानसमनुप्राप्यविधूतकरपल्लवा ३३ रक्षेतिमनसाशंभुंशरणंपूतवत्यगा त् शिवाज्ञयानस्सदृशंफलंतस्याःपुरोऽपतत् ३४ मुदितातद्ददौभर्त्रेबुभुजेसोपितत्फलं पूर्वभुक्तफला स्वादुतरंफलमवेत्यतत् ३५ इदंकुतःस इत्याहभार्याकरुणयाविभोः इतिसापूतवत्याहप्रहसन्नाहतांवणि

२२ ३३ ३४ ३५ ३६

३७ ३८ ३९ शिवेति यद्यस्मात् दास्यकारिणी केङ्कर्यकर्त्री पार्वती तस्या दास्यमनुचितमिति शिवद्रोह इतिभावः ४० त्यागे इति धर्मपत्नी त्यागे अहं पापः पापिष्ठो भविष्यामि त्रिषु द्वन्द्वेषु पापपुण्यसुखादिषु चेत्समरः सहवासे महद्दुःखं देवतापराधसंभवादितिभावः ४१ वाणि

कारुण्यं त्वयि चेच्छंभोरन्यदानीयतां फलं इत्युक्त्वांतः प्रविश्येषा चतुर्वर्गफलप्रदम् ३७ पूतवत्यस्मरत्ताद्दक्फलमन्यद्ददौ शिवः भर्त्रे तदपि सा दत्वा प्रहर्षमतुलं ययौ ३८ भीतः परमदत्तोभूत् पूतवत्याः सवैभवात् वशीकृतो नयाशंभुः ब्रह्मादीनामगोचरः ३९ शिवद्रोहो मया प्राप्तः यदियं दास्यकारिणि पार्वती नूनमेषास्यान्नो चेच्छक्तिः क्व चेदृशी ४० त्यागे तु पापी भविता सहवासे महद्दुःखं कथं नु खलु कर्तव्यमिति चिंतां ददौ हृदि ४१ वाणिज्यव्यपदेशेन गच्छाम्यहमितोन्यतः इतिनिश्चित्य मनसा महत्यां नाव्यसौ वणिक् ४२ वस्तून्यारोप्य विविधान्यनु द्वीपांतरं प्रति ययौ पूतवती शक्तिमद्भुतां मनसा स्मरन् ४३ द्वीपांतरं गते नाथे पूतवत्यपि सान्वहं दत्वान्नं शिवभक्तानामेकभुक्त्या व्यतिष्ठत ४४ ततः परमदत्तोपि गृहीतधनसंग्रहः देशं समुद्रमार्गेण प्राप्य पांड्यस्य भूसुराः ४५ अन्यां वणिग्वरसुतामुद्वाह्यन्यवसच्चिरं तस्यां काचिदभूत्कन्या नाम्ना स वणिजां वरः ४६ चक्रे पूतवतीं तस्याः स्वापराधविशुद्धये धनदत्तश्चिरगतमथ जामातृजनैः ४७ आसेः पांड्ये स्थितं ज्ञात्वा तत्राप्रेरयदाशु सजां सा बंधुभिः परिवृता स्वतापरिजनैरपि ४८ जगाम भर्तुर्निकटमारूढशिबिकोत्तमा श्रुत्वा परमदत्तस्तामागतामंतिके ततः ४९ ननाम पादयोस्तस्याः सह पुत्र्या च भार्यया अभिप्रायमशेषेण पूतवत्यै न्यवेदयत् ५०॥

ज्येति महत्यां नाविनौकायां ४२ ४३ द्वीपेति एकभुक्त्या एकवाराशनेन प्रोषिते मलिना कृशेति स्मरणादितिभावः ४४ ४५ ४६ ४७ ४८

५१ ५२ ५३ इतीति अंगात् निजशरीरात् सर्वमांसानियोगतः योगशक्त्यादुधावकंपयामास ५४ पैशाचमिति तेतवशिवस्यभूतपतेः से
वार्थेसेवार्थंभूतरूपेणैवभूतपतेःसेवांसुकरेतिभावः भजेमभवदंतिकं प्रकृतिमेत्यपैशाचिकींकिमिस्यमर संपदः प्रमथनाथनाथा



तवापराधमुध्यर्थंकन्यांत्वन्नामचिन्हिता त्वामहंदेवताबुध्याशरणंपूतवत्यगाम् ५१ यद्यत्राप्यागता
सात्वमहंगच्छामिचान्यतः इतितेनोदितासाध्वीपूतवत्याह्वनायकम् ५२ त्वदर्थेरक्षितमिदंवपुर्मेना
थनान्यथा यदित्वयापरित्यक्तागच्छाम्येषाशिवांतिकम् ५३ इतिसाब्राह्मणांस्तत्रमेलयित्वामहाध
नैःपूजयित्वादुधावगात्सर्वमांसानियोगतः ५४ पैशाचंरूपमस्मार्षीत्सेवार्थेतेभवत्विति तस्यारूपंत
थैवासीद्ययुर्लोकाश्चविस्मयम् ५५ तदानींप्रमथैर्नीतंविमानंचंद्रपांडुरं पूतवत्यधिरुह्यागात्कैलासाद्रे
रुपत्यकाम् ५६ अयुक्तश्चरणस्पर्शःकैलासस्येतिमौलिना तपसारुह्यशैलेंद्रमागच्छंतींहरांतिकम् ५७
दृष्ट्वादेवीगिरिसुतापप्रच्छतदुदंतकं पिशाचीकेयमायातिचरंतीमौलिनांतिकम् ५८ अस्यास्तुविकृतंरू
पंतपःशक्तिर्महत्तरा योजनानांचतुर्विंशत्सहस्राणिमहीतलात् ५९ मूर्ध्नातीत्योपरिगिरेर्येत्यासातवचांति
कं अथगौरींजगादेशःस्मयमानमुखांबुजः ६० मातामम्येयंकल्याणीभक्तामेयोषितामया पूजनीयातवेत्युक्त्वा
सतांगिरिजयासह ६१ प्रत्युद्गम्यजगादेशोमातस्तेकिमनामयं इतएहीत्युवाचार्यांप्रणमेतिशशासच ६२ ॥

महे इतिप्राचीन प्रयोगोपि ५५ तदानीमिति उपत्यकां समीपभूमिं उपाधिभ्यामिति त्यकन्प्रत्ययः ५६ ५७ दृष्ट्वेतितस्याः
पिशाचिकायाः उदंतकं वृत्तान्तम् ५८ ५९ ६० ६१ प्रत्युद्गम्यते अनामयंकिं आरोग्यं किमिति प्रश्नः ६२ ॥

६३ ६४ ६५ ६६ ६७ ६८ सभामिति यत्रसभायां नंदीवेत्रधरः मायागुणत्रयसाम्यावस्थापन्नाप्रकृतिरेवयवनिकांशुकः तिर स्करिणीपटः ६९ ७० चत्वारइति छंदसांवेदानांप्रसवित्रीमातागायत्रीत्यर्थः साचत्रिपदासैवकक्षात्रयंकोष्ठत्रयम् ७१ विताने

नमस्त्वार्यैदेवायसर्वांतर्यामिनेत्वयि गौरीमाभाष्यजरतीजगादपरमेश्वरम् ६३ कैलासशृंगेगिरिजासमेतो दृष्टोमयात्वंयऽदृतोसिधन्या त्वद्वांछितंकिन्नुमयेतिपृष्टातेनाहसापूतवतीमहेशम् ६४ आनंदनृत्यंभव तोद्रष्टुकामास्मिशंकर स्ववांछितंकिंनाथेतिसम्पादास्यामि वांछितम् ६५ दर्शयिष्येवटारण्येनृत्यंतत्रैवग म्यतां इत्युक्तानहिमेशक्तिर्गंतुमस्तीतितत्रसा ६६ पदंगृहीतुमीशस्यप्रवृत्तांतर्दधेहरः अथतामाज्ञयाशं भोःहस्ताग्रेणविनायकः ६७ स्थापयामासस दसिवटारण्येहरालये आसोन्मील्यदृशौवृद्धापरितस्तमवै क्षत ६८ सभांददर्शमहतीनवरत्नविभूषितां यत्रवेत्रधरोनंदीमायायवनिकांशुकः ६९ वल्लकीवादि नीवाणीवंशगानपरेंदिरा मर्दलाघातकोविष्णुःतालहस्तश्चतुर्मुखः ७० चत्वारोदीपिकावेदाःसनका द्याःसदस्थिताः कक्षात्रयंभगवतीप्रसवित्रीचछंदसाम् ७१ वितानंक्षौमवलयोदर्शनान्यखिलान्यपि स सकोटिमहामंत्राःकीर्णानिकुसुमानिच ७२ पंचाक्षरीभद्रपीठंचद्वादित्योचदर्पणे साक्षिणीचपराशक्तिःशां करीपरदेवता ७३ सभांपूतवतीदृष्ट्वाकैलासंलोककौतुकं संत्यज्यसहसोद्याथकिमेतदितिविस्मिता ७४ अथतस्यैमहादेवःदर्शयित्वास्वतांडवं सदेहमुक्तांतांकृत्वास्थापयामासचांतिके ७५ इतिश्रीस्कांदोपपुराणे भक्तविलासे द्विचत्वारिंशोऽध्यायः ४२॥

ति वितानंउल्लोचः तस्यक्षौमवलयो गौरपट्टवस्त्रमंडलं दर्शनानिशास्त्राणि ७२ पंचेति भद्रपीठंसिंहासनंशांकरीशक्तिः उमा

७३ ७४ ७५ इतिश्रीमानवल्लुपनामकनरसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांद्विचत्वारिंशोऽध्यायः॥ ४२॥ ॥शिवभक्तसेवानामकीर्त्तनपूजान्यतरेणापिमृत्युरपसरतीत्याह सेवयेत्यादि १ २ अस्तीति प्रासादैः देवानांराज्ञांवा गृहैःप्रासा

श्रीअगस्त्यउवाच सेवयाशिवभक्तानांनामसंकीर्त्तनेनच सपर्ययावास्यपुनरपमृत्योर्निवारणम् १ इतिहासोमहानत्रमहद्भिःसमुदाहृतः यमाकर्ण्यनरोभक्त्यामुच्यतेमृत्युबंधनात् २ अस्तिचंद्रपुरंनामचंद्रमंडलपांडुरैः महाधनानांप्रासादैःपरितःपरिमंडितम् ३ स्वधर्मनिरतैर्वर्णैःसर्वतःसमलंकृत आभूतिचरणाख्योभूत्तत्रकश्चिद्द्विजोत्तमः ४ इष्टापूर्त्तैर्यशोयस्यविमलीकुरुतेजगत् अग्रणीर्वेदविदुषांशिवभक्तोजितेंद्रियः ५ येनवैदिकसिद्धांतोजिनान्जित्वाप्रतिष्ठितः वागीशस्यपदेतस्यसद्धीभक्तिमुत्तमाम् ६ स्वनालयेषुसर्वत्रनिर्मितेषुपिनाकिनः वापीकूपतडाकानामंतिकेचशिलांतरे ७ धर्मःस्वकीयःसर्वोपिवागीशस्यस्यघोषयन् विलिख्यस्थापयामासप्रपासुचविशेषतः ८ वागीशोपितदाशंभोःस्थानेषुभुविपर्यटन् घर्मेकदाचिन्मध्यान्हेस्वेच्छयाप्रापतत्प्रपाम् ९ पयःसुरभिलंतत्रपीतंशीतंगतश्रमः निर्मितामुपलस्तंभेददर्शाक्षरमालिकाम् १० जिताईतस्यधर्मोयंवागीशस्येतिनिर्मलं विस्मितःप्रोतिमानाहतस्यकृत्याधिकारिणः ११ प्रपाधर्मोत्रकस्यायमितितेप्रावदन्मुदा आभूतिचरणोनामकश्चिद्वागीश

देदेवभूभुजामितिअमरः ३ ४ इष्टेति इष्टंयागादिकर्म पूर्त्तंखातादिकर्म इमेद्वेकर्मणी अग्रणीः अग्रग्रामाभ्यां नयतेर्णइतिणः ५ ६ स्वेनेति स्वेननिर्मितेष्वित्यन्वयः ७ धर्मइति प्रपासुपानीयशालासु ८ ९ १० जितेति जिताःआर्हता बौद्धायेन ११ १२ १३ १४ १५ ॥

१३ १४ नासेति नासया द्वारोपरिकाष्ठेन हतं ताडितं नासादारूपरिस्थितमित्यमरः १५ १६ १७ कर्त्तुमिति आतिथ्यं अतिथिसत्कारं अ

द्विजस्तेन कृतासेयं प्रपातस्सेवकावयं तेन पृष्टाः सकुत्रेतितेत द्वृहमदर्शयन् १३ वागीशस्त द्गृहद्वारं स दाप्रापद्विजोपिसः कर्त्तुमाध्यान्हिकस्नानंनिर्जगामगृहात्स्वयम् १४ नासाहतंशिरस्तस्यतदावेगेननि र्यतः वागीशोमेश्वरएषः सद्गुरुवाचबहिस्थितम् १५ साक्षादिवमहादेवंगृहद्वारमुपागतं भस्मावगुं ठितनत्तुंमुदितः प्रणनामसः १६ दर्शनात्तेकृतार्थोस्मिदेवस्येवपिनाकिनः पादरेणुपवित्रंतेभूयादस्मद्गृहं वरम् १७ कर्त्तुमातिथ्यमिच्छामिक्रियतामप्यनुग्रहः इतिप्रवेशितोवेश्मकृतासनपरिग्रहः १८ नामः किंतेद्विजब्रूहिशिवभक्त्यामहानसि इतिवागीशसंपृष्टः तदाहविहितांजलिः १९ अहंवागीशदासोः स्मिविभूतिचरणाव्हयः ऐहिकामुष्मिकंमेचसर्ववागीशधर्मतः २० इत्याकर्ण्यसतंप्राहकिमिदंक्रिय तेत्वया दासायस्यविरिंचाद्यायएकोजगतांप्रभुः २१ यन्नामस्मरणंजंतोः महापातकनिष्कृतिः विहाय तंमहादेवनामतस्यातिपावनम् २२ शाल्मलीपुष्पसंकाशंभवान्यशरणंगतः वागीशः कुत्रवाकोयं दे वोनाथसमानुषः २३ शिवदेवावयंक्वापिनैवभुंजामहेन्यतः चिन्हमात्रेणशैवोसिहंतभक्तिस्तवान्य तः २४ इतितद्वाक्यमाकर्ण्यपुनस्तंप्राहभूसुरः मैवंभोवदमेवाचमिमामाकर्ण्यतामृषे २५ शंभोः स्थिरं चरंचेतिरूपद्वयमुदीरितं असतांनिग्रहंचापिलोकेस्मिन्सदनुग्रहम् २६ ० ० ०

तिथेज्यैइतिसाध्वर्थेन्यः १८ १९ २० २१ २२ २३ शिवेति शिवएवदेवोयेषांते शिवदेवाः अन्यतः अन्यत्र २४ २५ २६ ०॥

२७ २८ यथेति कटवाससः जैनान् २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४



स्थिरे परोक्षो विज्ञेयः चरे प्रत्यक्ष एव सः स्थिरं तु लिंगवेशादि चरं रूपं भवादृशाः २७ चरेणैव स्वरूपेण निग्रहानुग्रहौ विभुः करोति जगतां शंभुः दत्ते च नमतां फलम् २८ यथा शिवस्तथा भक्तः तयोर्भेदो न हि क्वचित् वागीशमूर्त्तिमास्थाय जिगाय कटवाससः २९ प्रतिष्ठापितवान्लोके वैदिकाध्वानमुत्तमं स शंभुरेव यस्यास्मिन्मत्यधीः स विनश्यति ३० तस्माद्स्मत्कृतं सर्वं तस्यैवेति मतिर्मम इत्युक्ते भूतिपादेन वागीशोस्मीत्युवाच तम्॥ ३१ मुमुदे भूसुरं द्रोपि निधिं प्राप्येव निर्धनः आतिथ्योद्योगसमये कदलीदलहारिणं ३२ तत्पुत्रं मदशः सर्पः स बभूवातिमूर्च्छितः प्रच्छाद्य मूर्च्छितं पुत्रं तं भोजयितुमुद्यते ३३ अभूतिचरणे प्राह वागीशो भोक्तुमुद्यतः अस्यां पंक्तौ सपुत्रेण त्वयापि स्थीयतां सुतम् ३४ भोजनायाह्वयस्वेति त्वरयामास दंपती विचारं प्रापतुस्तौ तु उक्ते नैवौनृतं भवेत् ३५ आतिथ्यविघ्नो भविता यथार्थवचने पुनः इति संचिंत्य तौ सत्यं पुत्रवृत्तांतमूचतुः ३६ माभैष्टमिति तावुक्त्वा स्वसेवानृण्यमुक्तये मृतस्य निटिले भस्म तत्पुत्रास्य निधाय सः नीललोहितमस्तौषीद्वागीशः शूलधारिणम् ३७ जलधिमथनजातं यः पुरा कालकूटं प्रतिभयममराणां विष्टपानां च शंभुः ॥ अपिबदभयदाता देवतैस्तूयमानो विकटयतु विषार्त्तिं विस्मृतश्वेतसा नः ३८ इति वागीशवाक्येन द्विजपुत्रः स जीवितः विस्मयं परमं जग्मुरपि देवाः सदानवाः ३९ अथ तस्य गृहे भुक्त्वा वागीशः स्वेच्छया ययौ पुनरुज्जीवनात्सूनोः मुमुदाते च दंपती ४० तमेवाभूतिचरणश्चिरं ध्यायन्महेश्वरं अवाप शिवसायुज्यं दुर्लभं योगिनामपि ४१ इतिश्रीस्कंदोपपुराणे भक्तविलासे त्रिचत्वारिंशोऽध्यायः ४३॥ ॥ ४ ॥

इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांत्रिचत्वारिंशोऽध्यायः ४३॥ ॥ॐ॥ ॥

शिवभक्तसंगाद्दपिनरःसंसारंसुखेनतरतीत्याह संगमादिति निबर्हणात् निबर्हकात् करणेल्युट् १ २ मरुद्वृद्धेति मरुद्वृधाकावेरी तस्य

श्रीअगस्त्यउवाच संगमात्तुशिवभक्तानांसर्वपापनिबर्हणात् दुस्तरंजन्मदुःखाब्धिंजंतुरत्येतिलीलया १ अत्रै वोदाहरंतीममितिहासंपुरातनं चरितंनीलनग्नस्यश्रूयतेयत्रपावनम् २ मरुद्वृद्धासरित्तीरेमंगलाख्यंमह त्पुरं सदाधर्मरतैःसद्भिःसाग्निहोत्रैरधिष्ठितम् ३ तत्रासीन्नीलनग्नाख्योब्राह्मणोवेदपारगः ब्रह्मदृष्टिर्जितक्रो धोभक्तिमान्परमेश्वरे ४ नीलःकर्मफलंप्रोक्तंतन्नलिप्यतिनग्नवत् यतस्ततोभवल्लोकेनीलनग्नाह्वयोद्वि जः ५ त्रिपदार्थविवेकांभःप्रक्षालितमलत्रयः वाजपेयादिभिर्यज्ञैराराधमहेश्वरम् ६ नीलकंठस्यदेवस्यनी लनग्नःप्रसादतः दृश्येजगतिसर्वत्रव्यधत्तशिवदर्शनम् ७ शिवध्यानेनसततंनीलनग्नस्यमानसं कतक क्षोदयोगेनानाविलंसलिलंयथा ८ अथैकदासौदिवसेमहेशंफलैश्चदुग्धैर्मधुनाभिषिच्य निवेद्यचान्नंद धिदुग्धपूर्णंहृष्टस्सतुष्टावशिवांतिकस्थः ९ हरंस्तुवंतंभर्त्तारंसमयापतिदेवता तिष्ठंतीसांजलिस्तस्यभार्या सेवतशंकरम् १० मौलौशंभोस्तदालूतानिपत्यलघुतंतुभिः घनैःप्रच्छादयामाससातूर्णंनिर्ममार्जतम् ११ ॥

योनिर्मरुद्वृद्धेत्यमरः ३ ४ नीलइति ज्ञानस्यैवपरक्षालिकत्वेननिर्मलतयाश्वेतत्वेन तदितरस्यकर्मफलस्य नीलत्वमितिभावः ५ त्रिप दार्थेतिगायत्र्यर्थैरित्यर्थः ६ ७ शिवध्यानेनेति कतकक्षोदयोगेननिर्मलाख्यबीजचूर्णयोगेनेत्यर्थः ८ ९ हरमिति भर्त्तारं समयाभर्त्तुः समीपे अभितःपरितइत्यादिनाद्वितीया पतिदेवतापतिव्रता १० शंभोरिति लूता ऊर्णनाभिः कृमिविशेषःमकरीतिलोकेप्रसिद्धा ११ ॥

लूतेति असृक्‌रुधिरं १२ लिलेहेति लाला वदनजलमेवौषधं यस्यास्तया जिह्वया १३ १४ १५ १६ १६ १७ १८ अ॰४४

लूतानखक्षते मौलौ शंभोरसृगदृश्यत साध्वी भक्तिपरीक्षार्थं दर्शितेशंभुनासृजि १२ लिलेह जिह्वया भीता
सा लालौषधया द्रुतं शशाम सद्यो रुधिरं प्रीतश्चाभून्महेश्वरः १३ भार्यारसनयालीढं शिरः शंभोरवेक्ष्य तत्
कर्णार्पितकरः शोचन्नीलनग्नोजगाद ताम् १४ त्वया कृतः शिवद्रोहः त्यक्तासि त्वमशिक्षिता न मे त्वयास्ति सं
बंधो गच्छ क्वापि यथेच्छया १५ इति भर्तुर्निशम्योक्तिं सा कृताञ्जलिरब्रवीत् गतिस्त्वमेव मे शंभोर्नैव द्रोहः कृ
तो मया १६ सर्ववेदश्च भवान्स सर्वसाक्षी महेश्वरः अथ तां नीलनग्नोपि कंपयन्मौलिमात्मनः १७ विधाय सा
हसं पूर्वं प्रच्छादयितुमिच्छसि स्त्रियो हि साहसपरा इत्युक्त्वा स्वगृहं ययौ १८ गते भर्तरि साध्वी सा शरणं शंक
रं ययौ उपोषितानयद्रात्रिं तत्र पंचाक्षरीपरा १९ नीलनग्नमथ स्वप्ने प्राह वाचं महेश्वरः मूर्ख त्वं न विजानीषे
तस्या भक्तिं मयि स्थिराम् २० महाभिषेके निहिते सम्यङ्मार्जनं कृतं पंचामृतकणं मौलौ मम लग्नं क्षुधार्दिता
२१ न्यपतत्तीक्ष्णनखरा वमक्षैतन्नखक्षतात् उत्पन्नं सविषं रक्तं दृष्टं त्वद्भार्ययामम २२ त्वद्भीत्या विरता नो चेत्स
र्वे स्वर्णं भविष्यति यदि सक्ता त्वया सेयं स्वजामि त्वामहं ध्रुवम् २३ नीलनग्नमुदीर्यैवं नीलकंठस्तिरोदधे अथो
त्थाय दयाविष्टो नीलनग्नः शिवालयम् २४ क्षम्यतामिति भार्यां स्वामानीय निजमंदिरं निष्प्रि स्वर्णमयं लीढं दृष्ट्वा
शंभोः स विस्मितः २५ त्वमेव गिरिशं ध्यायन्न कदाचन रुष्यति तया सह निवासेन स्वं कृतार्थममन्यत २६॥ ७॥

१९ २० २१ २२ २३ २४ २५ २६ २७ ७ ७ ७ ७ ७

हरतिनवेति ३४ कर्मेति अखिलंकर्मसंगृह्य यत्करोषियदश्नासीत्यादिना सर्वंशिवार्पणंकृत्वा उत्तमांभक्तिंप्रागुक्तलक्षणां कुर्वते तस्मैनवनं दिने कैवल्यंमोक्षं ३५ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपंचचत्वारिंशो ऽ



कर्माखिलंचसंगृह्यकुर्वतेभक्तिमुत्तमां त्यागेश्वरोददौतस्मैकैवल्यंनवनंदिने ३५ इतिश्रीस्कंदोपपुराणेभक्तवि॰ लासेपंचचत्वारिंशोऽध्यायः ४५॥ छ ॥ ॥श्रीअगस्त्यउवाच अथवक्ष्येमुनिश्रेष्ठाःकथांक्षपणविद्विषः स्तन्यामृ तप्रदानेनयस्यधात्रीहिमाद्रिजा १ कावेरीहेमसभयोरंतरास्तिपुरंमहत् किंचिद्ब्रह्मपुरंनामब्रह्मलोकइवापरः २ संवर्तसलिलाक्रांतेत्रैलोक्येयांमहेश्वरः द्रोणींविधायत्रिगुणींतत्राधायाप्यपालयत् ३ वृषध्वजपुरीब्रह्मपु रीवेणुपुरीतथा कालीपुरीमलपुरीत्युच्यतेयामुनीश्वरैः ४ यत्रोद्यानेषुमाकंदास्तटाककमलोदरे मुंचंतिमधुः विप्रेंद्राव ह्वावाज्याहुतिर्यथा ५ धम्मिल्लोदूर्त्तनेस्त्रीणांनृत्यतांयत्रबर्हिणां बालयूथकरास्फोटामद्रस्तालः ध्वनिर्यथा ६ शिवव्रतइतिख्यातःतत्रासीद्द्विजसत्तमः शिवभक्तोजितक्रोधस्सर्वसंपत्समृद्धिमान् ७ वि वर्त्तइवधर्मस्यविद्यानांवासमुद्रमः शांतेरिवपरीपाकोदांतेरिवपरिक्रमः ८ उल्लासइवबोधस्यमोक्षस्येव महापथः वेदांतार्थोपदेशेनपवित्रितजगत्त्रयः ९ विनयाभरणातस्यकरुणेवशरीरिणी आसीद्भगवतीनाम धर्मपत्नीयथांबिका १० अरुंधतीवसिष्ठस्ययथास्वाहेवबर्हिषः तथाप्रतिष्ठामगमदातिथ्येषुद्विजन्मनाम् ११

ध्यायः ४५॥ ॥छ॥ ज्ञानसंबंधनामकभक्तकथांप्रस्तौति अथेति क्षपणान्बौद्धान् विद्वेष्टीति क्षपणविद्विट् तस्यधात्रीजननी १ २ संव र्तेति संवर्तःप्रलयः त्रिगुणींगुणत्रयमेवद्रोणीं काष्ठांबुवाहिनींविधाय यांनगरींतत्राधायस्थापयित्वाऽपालयत् ३ तस्याएवसंज्ञांतरा

भ॰टी॰
१०५

लूतेति असृक्रुधिरं १२ लिलेहेति लाला वदनजलमेवौषधं यस्यास्तयाजिह्वया १३ १४ १५ १६ १६ १७ १८ अ४४

लूतानखक्षतेमौलौशंभोरसृगदृश्यत साध्वीभक्तिपरीक्षार्थंदर्शितेशंभुनासृजि १२ लिलेहजिह्वयाभीता
सालालौषधयाद्रुतं शशामसद्योरुधिरंप्रीतश्चाभून्महेश्वरः १३ भार्यारसनयालीढंशिरःशंभोरवेक्ष्यतत्
कर्णार्पितकरःशोचन्नीलनग्नोजगादताम् १४ त्वयाकृतःशिवद्रोहःत्यक्तातत्वमशिक्षिता नमेत्वयास्तिसं
बंधोगच्छ क्वापियथेच्छया १५ इतिभर्तुर्निशम्योक्तिंसाकृतांजलिरब्रवीत् गतिस्त्वमेवमेशंभोनैवद्रोहःकृ
तोमया १६ सर्ववेदस्शुभंवान्यसर्वसाक्षीमहेश्वरः अथतांनीलनग्नोपिकंपयन्मौलिमात्मनः १७ विधायसा
हसंपूर्वंप्रच्छादयितुमिच्छसि स्त्रियोहिसाहसपराइत्युक्त्वास्वगृहंययौ १८ गतेभर्तरिसाध्वीसाधारणशंक
रंययौ उपोषितानयद्रात्रिंतत्रपंचाक्षरीपरा १९ नीलनग्नमथस्वप्नेप्राहवाचंमहेश्वरः मूर्खत्वंनविजानीषे
तस्याभक्तिंमयिस्थिराम् २० महाभिषेकेनिहितेसम्यङ्मार्जनंकृतं पंचामृतकणंमौलौममलग्नंक्षुधार्दिता
२१ न्यपतत्तीक्ष्णनखराभक्षैतन्नखक्षतात् उत्पन्नंसविषंरक्तंदृष्टंत्वद्भार्ययामम २२ तद्भीत्याविरतानोचेत्स
र्वेस्वर्णंभविष्यति यदिसत्त्वात्त्वयासेयंत्यजामित्वामहंध्रुवम् २३ नीलनग्नमुदीर्यैवंनीलकंठस्तिरोदधे अथो
त्थायदयाविष्टोनीलनग्नःशिवालयम् २४ क्षम्यतामितिभार्यांस्वामानीयनिजमंदिरं निषिस्वर्णमयंलीढंदृष्ट्वा
शंभोस्सविस्मितः २५ त्वमेवगिरिशंध्यायन्नकदाचनरुष्यति तयासहनिवासेनस्वंकृतार्थममन्यत २६॥ ७॥

१९ २० २१ २२ २३ २४ २५ २६ २७ ७ ७ ७ ७ ७

२७ २८ नीलनग्नइति आवृत्तिवर्जितांपुनरावृत्तिरहितां नसपुनरावर्त्ततइतिश्रुतेः गतिंमोक्षमित्यर्थः मामुपेत्यतुकौंतेयपुनर्जन्मन विद्यतइतिस्मृतेश्च २९ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांचतुश्च त्वारिंशोऽध्यायः ४४॥ ॥संप्रतिकर्मोपासनादिद्वाराशिवसेवयापिमुक्तिर्भवतीत्याह कर्मेति १ इतिहासमवतारयतिश्रूयतामिति २

अथकालेनमहतासहबोधवतागतान् नीलनग्नोमहाभागान्शिवभक्तानूदृढव्रतान् २७ संपूज्यवासयामा सस्ववेश्मनिमहामतिः अथतेषुप्रयातेषुशिवस्तोत्रपरायणः २८ नीलनग्नोमहाभक्तोभार्ययासहितस्तया नि र्धूतबंधनःप्रापगतिमावृत्तिवर्जिताम् २९ इतिश्रीस्कंदोपपुराणेभक्तविलासेचतुश्चत्वारिंशोऽध्यायः ४४॥४५॥ श्रीअगस्त्यउवाच कर्मजातानिसंगृह्यपुण्यस्थलनिषेवया उपास्तेशंकरंभक्त्यासोपिमुक्तोभवेद्द्विजाः १ श्रूय तामितिहासोत्रविश्रुतोविदुषांप्रियः श्रवणाद्यस्यकैंकर्येशांकरेभवितामतिः २ वागीशज्ञानसंबंधनीलनग्ना न्रिरक्षिषुः दीनारानन्वहंप्रादात्सोपानेयत्रशंकरः ३ हेमलाभपुरंनामतदादिप्रथितंहितत् द्विजःकश्चिदभू त्तत्रशिवभक्तगणाग्रणीः ४ अध्यैष्टवेदानखिलान्अन्वतिष्ठत्क्रतूञ्छतं तत्राग्नेमंडलेभानोःशिवलिंगेचदे शिके ५ भावयन्नित्यमीशानंभक्त्यानंदिसमोभवत् अतस्तमाहुर्विप्रेंद्रानाम्नाचनवनंदिनम् ६ सफाल्गुनोत्स वेशंभोःपौर्णिमायांद्विजोत्तमः करिष्यन्त्यागराजस्यदीपाराधनमुत्तमम् ७ घृतग्रहणमुद्दिश्ययथावापणवीथिकां घृ

वागीशेति वागीशादीन्भक्तान् रिरक्षिषुः दीनारान्सुवर्णमुद्राः ३ नगरनाम्नःप्रवृत्तिनिमित्तमाह हेमेति ४ अध्यैष्टेति अधीतवान्प्रा तमनेकान्क्रतून्न्वतिष्ठत्अनुतष्ठौचकारेत्यर्थः उपासनास्थानानिनिर्दिशति अग्नाविसादि ५ ६ ७ घृतेतिसौगतंबौद्धम् ८ ९

९ १० ११ तमिति अष्टतनुः भूतपंचकं सूर्यचंद्रयजमानरूपाष्टमूर्त्तिः १२ सौगतः शंकते पृथिवीत्यादिना १३ पृथिव्यादीनां परस्परविरुद्ध स्वभावानां एकत्रसमागमो दुर्निरूप इतिभावः १४ समागमपक्षे दोषमाह शिवेति १५ १६ १७ संमेलयित्वेति कमलालयं नगरम् १८



गृहाणनिष्कदशकं देहिमे घृतमुत्तमं इत्युक्तश्चार्हतः प्राह घृतं नैकस्यबह्विति ९ नवनंद्यर्पितं प्रीत्या प्राह देहिनवं घृतं भक्तोस्मि त्यागराजस्य प्रीतये लक्षवर्त्तिकाः १० कर्त्तव्या इति किं तेने त्युक्तः शंभोरनुग्रहः फल मित्याह कः शंभुरिति पप्रच्छ तं पुनः ११ तमाह विप्रो देवानां नियंताष्टतनुः शिवः स्वयं प्रकाश स्त्यागेशस्तद्भ क्त्या मुच्यते नरः १२ ततः प्रहस्य तं प्राह वेदबाह्यो महाद्विज पृथिवी वायुराकाशश्चंद्रादित्यौ च पावकः १३ अंभश्च यजमानश्च ह्येताः शंभोर्हि संगताः मूर्त्तिस्त्वयास्मीकुत्र संगच्छन्ते विरोधिनः १४ शिवाज्ञया विरोधश्चे त्स्याद्दिदीपो विधीयतां इत्युक्तः स शिवद्रोहीन संभाष्य इति क्रुधा १५ व्यथमानश्च तद्वाक्यैस्त्यागेशं शरणंगतः हतोस्मि सौगतगिरा वेदमर्मच्छिदाचिरम् १६ रक्षरक्षेति निश्वस्यन वनं दीरुदन्स्थितः जलदीपान्विधेहीति दयालुः प्राहतं हरः १७ संमेलयित्वा सकलान् कमलालयवासिनः सायं सलक्षपात्रेषु दत्वा विमलवर्त्तिकाः १८ पूरयामास सर्वत्र कमलालयवारिभिः कदाचिद्विवयात्रायां तं नीचस्पर्शशंकितम् १९ सुप्तमुत्थापयित्वेशः कमला लयगान्जनान् दर्शयामास सकलान्नीलग्रीवांश्चतुर्भुजान् २० शिवरूपजुषः सर्वानाचंडालं ददर्श सः तांश्च प्रज्वालयन्दीपान्तदद्भुतमभून्महत् २१ महावातेपि चलति जज्वलुस्ताः शिवाज्ञया भीताः पलायिताः सर्वे शाक्या

१९ २० शिवेति आचंडालं चंडालावधि २१ महेति शाक्याः जैनाः २२ ॥

ववर्षुरिति ज्वलंतः शिखायेषांतान् दीपान् २३ २४ त्यागेशंस्तौतियस्येत्यादिना नवक्लिद्देशरीरे २५ शासनादिति अंतरा वैश्वानररूपेण २६
२७ २८ फलमिति कर्मणांयागादीनांफलं स्वर्गादि यस्यशासनात् कर्त्तारमन्वेति प्राप्नोति क्व कर्मप्रध्वस्तं फलतिपुरुषाराधनमतेद्दतिस

ववर्षुःपुष्पवर्षाणिदेवाःसर्वेचविस्मिताः आप्रभातंचतांदृष्ट्वानवनंदीज्वलच्छिखान् २३ भक्त्याप्रहृष्टहृदयस्तुः
ष्टावपरमेश्वरम् २४ श्रीनवनंदीउ॰ यस्याज्ञयानवक्लिद्देस्तब्धस्तिष्ठतिमारुतः ॥ तन्नमामिमहादेवंत्यागेशंभ
क्तवत्सलम् २५ शासनासावकोयस्यसर्वेषामंतरास्थितः तन्नमामिमहादेवंत्यागेशंभक्तवत्सलम् २६ बडवामु
खवन्हिश्चज्वलत्यब्धौयदाज्ञया तन्नमामिमहादेवंत्यागेशंभक्तवत्सलम् २७ भूतान्यपिविरुद्धानिमिलितानियद्
ज्ञया तन्नमामिमहादेवंत्यागेशंभक्तवत्सलम् २८ फलमन्वेतिकर्त्तारंकर्मणांयस्यशासनात् तन्नमामिमहादेवंत्या
गेशंभक्तवत्सलम् २९ औषधेचमणौमंत्रेभातिशक्तिर्यदाज्ञया तन्नमामिमहादेवंत्यागेशंभक्तवत्सलम् ३० ना
स्तेतिसमयंज्योतिःसिंधुःकालश्चयद्भयात् तन्नमामिमहादेवंत्यागेशंभक्तवत्सलम् ३१ विनाधारंजगद्येनसाधार
मिवनिश्चलं तन्नमामिमहादेवंत्यागेशंभक्तवत्सलम् ३२ ब्रह्माच्युताद्यविदितंचशिरःपदंतेनासाशिलाविदित
मासमुहृत्प्रियायाः तस्मैनमोस्तुभवतेप्रणतार्त्तिहंत्रेत्यागेश्वरायमयिदेहिसदावलोकम् ३३ श्रीअगस्त्यउ॰ नव
नंदीस्तुवन्नेवंत्रिसंध्यंत्यागनायकं तत्रैवतदनुज्ञातःसभार्योन्यवसच्चिरम् ३४

रणात् २९ औषधेद्दति तृणलतापाषाणवर्णेष्वितिभावः ३० नेतिज्योतिःसूर्यादिःयद्भयात् यस्माद्भीतेः भीषोदेतिसूर्यद्दत्यादिश्रुतेः ३१ ३२ ब्र
ह्मेति तवैश्वर्यंयत्तादितिश्लोकेमहिम्निकथ्यंसत्ता आप्तसुहृदःनिजभक्तस्यप्रियायाः नासाशिलाभ्यांद्वरोपर्यधोदारुभ्यांविदितं ३३ उपसं

हरति नवेति ३४ कर्मेति अखिलंकर्मसंगृह्य यत्करोषियदश्नासीत्यादिना सर्वंशिवार्पणंकृत्वा उत्तमांभक्तिंप्रागुक्तलक्षणां कुर्वते तस्मैनवनं दिने कैवल्यं मोक्षं ३५ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपंचचत्वारिंशोऽ



कर्माखिलंचसंगृह्यकुर्वतेभक्तिमुत्तमां त्यागेश्वरो ददौ तस्मैकैवल्यंनवनंदिने ३५ इतिश्रीस्कंदोपपुराणेभक्तविलासेपंचचत्वारिंशोऽध्यायः ४५॥ छ ॥ ॥श्रीअगस्त्यउवाच अथवक्ष्येमुनिश्रेष्ठाःकथांक्षपणविद्विषः स्तन्यामृतप्रदानेनयस्यधात्रीहिमाद्रिजा १ कावेरीहेमसभयोरंतरास्तिपुरंमहत् किंचिद्ब्रह्मपुरंनामब्रह्मलोकइवापरः २ संवर्तसलिलाक्रांतेत्रैलोक्येयांमहेश्वरः द्रोणींविधायत्रिगुणींतत्राधायाप्यपालयत् ३ वृषध्वजपुरीब्रह्मपुरीविष्णुपुरीतथा कालीपुरीमलपुरीत्युच्यतेयामुनीश्वरैः ४ यत्रोद्यानेषुमाकंदास्तटाककमलोदरे मुंचंतिमधुःविप्रेंद्राव ह्वावाज्याहुतिर्यथा ५ धम्मिल्लो दृर्तनेस्त्रीणांनृत्यतांयत्रबर्हिणां बालयूथकरास्फोटोमदस्तालःध्वनिर्यथा ६ शिवव्रतइतिख्यातःतत्रासीद्द्विजसत्तमः शिवभक्तोजितक्रोधस्सर्वसंपत्समृद्धिमान् ७ विवर्तइवधर्मस्यविद्यानांवासमुद्रमः शांतेरिवपरीपाकोदांतेरिवपरिक्रमः ८ उल्लासइवबोधस्यमोक्षस्येवमहापथः वेदांतार्थोपदेशेनपवित्रितजगत्त्रयः ९ विनयाभरणातस्यकरुणेवशरीरिणी आसीद्भगवतीनामधर्मपत्नीयथांबिका १० अरुंधतीवसिष्ठस्ययथास्वाहेवबर्हिषः तथाप्रतिष्ठामगमद्दातिथ्येषुद्विजन्मनाम् ११

ध्यायः ४५॥ ॥छ॥ ज्ञानसंबंधनामकभक्तकथांप्रस्तौति अथेति क्षपणान्बौद्धान् विद्वेष्टीति क्षपणविद्विट् तस्यधात्रीजननी १ २ संववर्तेति संवर्तःप्रलयः त्रिगुणींगुणत्रयमेवद्रोणीं काष्ठांबुवाहिनींविधाय यांनगरींतत्राधायस्थापयित्वाऽपालयत् ३ तस्याएवसंज्ञांतरा

एयाह दृषेति ४ ५ ६ ७ विवर्तेइति धर्मस्य विवर्त्तोरूपांतरंइति इवार्थेवा समुद्भूमः आविर्भावः ८ ९ १० ११ यस्येति यस्य नगरस्य केलीवनादीना श्रिता मृगी चर्वितं आर्द्र तृणं शशलक्ष्मणश्चंद्रमसो मृगयादत्ते क्रीडाशैलस्यतानदीन्नत्यादितिभावः १२ १३ १४ १५

यस्य केलीवनाक्रीडापर्वताग्राश्रितामृगी चर्विताद्रतृणं दत्तेमृगायशशलक्ष्मणः १२ तस्य संपत्समृद्धस्य सकलत्रानुकूलतः भाग्येनस्वर्णपुष्पस्य सौरभश्रीरिवाभवत् १३ षट्कर्मनिरतस्यास्य सभार्यस्य महात्मनः अनपत्यतया दुःखमंतर्व्याधिरिवाभवत् १४ अथतौदंपती खिन्नावपूरितमनोरथौ अपत्यार्थंमहादेवं तोषयामासतुर्व्रतैः १५ परिणोरुद्रमंत्रेण पार्वतीपरमेश्वरौ द्रोणप्रसूनैरानर्चत्रिसहस्रैर्दिनेदिने १६ क्षीराभिषेकंविदधे धारयालिंगमूर्धनि यावदेकादशावृत्तिरुद्राध्यायःसमंत्रवित् १७ प्रदक्षिणशतंशंभोस्तैलाभ्यंजनवर्जितं कुर्वेस्सलवणंभुंक्तेबिल्वानामभिषेककृत् १८ तैलंक्षीरंशिशूनांचप्रददावनिवारितं एवंवर्षत्रयंतस्यभार्याचव्रतमादधे १९ तथापिदृश्यतेनस्मप्रसादःपारमेश्वरः अथसाचिरनिर्विण्णद्वादशाब्दमुपोषिता २० द्रोणीपुरेश्वरस्याग्रेरुदंतीवाक्यमब्रवीत् वेदविद्याविहीनोयोब्राह्मणस्त्रीरनात्मजा २१ तावन्नगादिवत्भूमेर्भारभूतोनसंशयः ददासिचेन्नपुत्रंमेप्राणास्त्वय्यर्पितामया २२ इतिनिश्चित्यसासाध्वीतत्रप्रायमुपाविशत् तस्यांरात्रौहरःस्वप्नेपायसान्नेनपूरितम् २३ पात्रंहेममयंदत्वाभगवस्यैतिरोदधे अथसाकथयत्स्वप्नेहरेणानुग्रहंकृतम् २४ भर्त्रेशिवव्रतायाभून्मुदितोधोयथादृशा ततःसागर्भचिन्हेनप्रचकाशेपतिव्रता २५ ॥ ७ ॥

१६ १७ १८ १९ तथापीति पारमेश्वरःशैवःनदृश्यतेस्म नदृष्टःलट्स्मे २० द्रोणीति अनात्मजा अपुत्रा २१ तावदिति वाक्यालंकारेसाकल्पेवा नगःपर्वतोवह्वोला २२ इतीति प्रायमनशनव्रतं २३ २४ २५

अचिरेति अचिरोदितः शीतांशुर्यस्यां सा वराश्रेष्ठा माहेन्द्रीहरित् दिगिव दोहदं गर्भचिन्हं तत्संबंधिन्याव्यथया २६ २७ २८ २९ अथे
ति वैजनने सूतिमासे ३० शतेति सर्वैर्लक्षणैः कांतंसुन्दरंस्वार्थेकः ३१ ३२ ३३ पाखंडानामिति वामेनचक्षुषा समस्पंदि अनिमि



अचिरोदितशीतांशुर्माहेंद्रीवहरिद्दूरा दोहदव्यथयातांतंतदीयंवपुरुज्वलम् २६ अतीतहिमबाधेवशिशिरा
त्ययपद्मिनी सुजातचारुसर्वांगीसर्वाभरणभूषिता २७ शिवव्रतोभगवतीददर्शहृदयंगमां विद्यामिवोत्तमांवि
द्वान्जन्ममृत्युविनाशिनीम् २८ ततोलग्नेशुभेतस्याश्चक्रेपुंसवनक्रियां मासेषष्ठेचसीमंतंगर्भकर्मचसर्वतः
२९ अथवैजननेप्राप्तेपंचसूच्चस्थितेषुच ग्रहेषुलग्नेशुभगेगुरुणाचेंदुनान्विते ३० शततारारव्यनक्षत्रेसाध्वीभ
गवतीसुतं असूतान्यमिवस्कंदंसर्वलक्षणकांतकम् ३१ दिविदुंदुभयोनेदुःप्रसन्नानिपयांसिच अवर्षिकु
सुमंदैवैरस्पन्दिमरुतासुखम् ३२ अनर्त्तिसुरकांताभिरगाय्यपिचकिंनरैः असंसिगर्भैःशाक्यानामनलैर्ज
ज्वलेतदा ३३ पाखंडानांसमस्पंदितदावामेनचक्षुषा शैववैदिकधुर्याणांदक्षिणेनचचक्षुषा ३४ अरिष्ट
मभवत्तस्यज्योतिषापरितस्फुरत् प्रदीपासंन्निधौतस्यमध्यान्हारोपिताइव ३५ जातकर्मविधायास्यब्रा
ह्मणेभ्योददौधनं तदंकितांकासासाध्वीबभौभगवतीतदा ३६ उत्पन्नकौस्तुभमणिर्वेलाक्षीरांबुधेरिव
गवांद्वादशसाहस्रंद्विजेभ्योदाच्छिवव्रतः ३७ भोजयामासविप्रौघान्द्वादशेन्हिशिवव्रतः चकारनामक
रणंहरदत्तइतिद्विजः ३८ ववृधेरक्षितोबालःशैलादिरपरोयथा कवाक्वेतिपाषंडान्रुदितक्रुत्स्नाशिशुः

त्तसूचकमेतत् शैवेतिशुभसूचकमेतत् ३४ अरिष्टमिति अरिष्टंसूतिकागृहं मध्यान्हारोपिताइव निस्तेजस्काइतिभावः ३५ जाते

ति तेन बालेनांकितः अंकोयस्याः ३६ ३७ ३८ वन्धेइति शैलादिर्नन्दी ३९ ४० ववंधेति आर्हतान् जैनान् कुदुयिष्यन् मुष्टिभिर्मस्त प्रहारं करिष्यन्निव ४१ शिवेति दृष्टिरुन्मीलिता हर्षादितिभावः अंगुष्ठेति अंगुष्ठमात्रः पुरुषइति श्रुतिप्रतिपादितस्यजगत्प्रभोः स्तोत्रं

उच्चैः संतर्जयामास वेदबाह्यांदुरात्मनः घातयिष्यन्निवरिपून् चरणावुदनीनयत् ४० ववंधमुष्टिमसकृत्कुट्टयिष्यन्निवार्हतान् यदोन्नामममूर्द्धानं बाल्ये भगवतीसुतः ४१ शिवागमैश्च वेदांतैः दृष्टिरुन्मीलिता तदा अंगुष्ठपुरुषस्तोत्रं तव वाग्जन्मनः फलम् ४२ इति ब्रुवन्निवांगुष्ठं समुखे विदधे सदा बहिर्निष्क्रमणं तस्य चतुर्थे मास्यरोचत ४३ दुर्मतध्वांतभेदाय भानोरिवसमुद्गमः अन्नतश्चान्नमब्दार्धे व्यवर्धत दिने दिने ४४ शिवापदानमधुरैर्गीतैः समुपलालितः जनन्यास्तन्यपायी सन् वदनेदत्तलोचनः ४५ अंकुरद्दशनोबालोपित्रोः प्रीतिमवर्धयत् अष्टमेङ्कुरितारेजुर्दतास्तस्यमुखांबुजे ४६ प्ररोहद्द्विबिद्यानांविमलाः शुभजन्मनः जानुभ्यामपिबाहुभ्यां यदासंचरतिस्मसः ४७ तदाप्रतिष्ठिता वेदाश्चत्वारो भुविनिर्भयाः वत्सरांतेनदीस्नानं कारयित्वार्भकस्यसः ४८ ब्राह्मणान्भोजयामास बंधूनपिसमागतान् ४९ मात्रात्रिपुंड्रांकितफालदेशो पूजासु शंभोः पितुरंतिकस्थः ॥ स्निग्धां प्रतिष्ठाप्य शिलां पुरस्तादानर्च शंभुं सविडंबनेन ५० सस्नानादिषुकालेषु बभूव पितुरंतिके उरस्स्फुरन्व्याघ्रनखोक्वणन्नूपुरकिंकिणिः ५१ अथैकदाधनुर्मासे भानोः प्रागुदयाद्द्विजः समर्चयिष्यन्नीशानं प्रस्थितः स्नातुमुद्यतः ५२ ॥

४२ ४३ दुर्मतेति दुर्मतम् अवैदिकमतम् तदेवध्वांतं तस्यभेदाय विदारणाय ४४ ४५ शिवेति शिवस्य अपदानानि कर्म्मवृत्तानि तैर्मधुरैः ४५ अंकुरदिति अंकुरन्तः प्ररोहन्तः दशना दन्ता यस्य ४६ ४७ ४८ ४९ स्निग्धेति विडम्बनेन अनुकरणेन ५० सइति उरसिस्फुर

५३ अथेति अर्भकः सार्द्धसंवत्सरद्वयः ५४ शिवेति उरःसमुत्थितः औरसः पुत्रः इत्याश्लिष्य एकाकी निशि समागत इति शिरो जिघ्रन् कृच्छ्राद्विनि
र्गतं पुत्रं पिता शिरसि जिघ्रतीति स्मरणात् ५५ तीरेति वक्षोदघ्ने उरःप्रमाणे प्रमाणे द्वयसचदघ्नजिति प्रमाणार्थे दघ्नच् प्रत्ययः ५६ ५७ हरेति ह



अंतिके नीयतां बालो निद्राण इति चोदिता श्रुत्वापि भर्त्तुर्वचनं निद्राढ्याभगवत्यभूत् ५३ अथाग्रे पितरं यांतमनुद्रुत्य
समुत्थितः अर्भकः प्रययौ तीर्थं पिता यत्र निमज्जति ५४ शिवव्रतस्तमायांतं वीक्ष्य चोरःसमुत्थितः इत्याश्लिष्य शिरो जि
घ्रन् शिवतीर्थतटं ययौ ५५ तीरे शिशुमवस्थाप्य वक्षोदघ्ने जले स्थितः मंत्रैः संप्रोक्षणं कुर्वन् ममज्जांतर्जले सुधीः ५६
अंतर्निरुद्धनिश्वासः स्वकपोरुषमस्मरत् अदृष्टजनकः बालः प्रातिष्ठत गृहं प्रति ५७ हरालयाररच्छन्नमदृष्ट्वा
मार्गमर्भकः परिक्रम्य तदीशानसन्निधौ दीपशोभिते ५८ स्थित्वाभिमुखमीशस्य रोदनाय प्रचक्रमे आकर्ण्य सं
निधौ शंभोः शिशुमर्भकवाक्यतः ५९ क्व बाल इति चिंतावान् स्नात्वोत्तीर्णः शिवव्रतः जजाप ज्योतिषं मंत्रं दत्वार्घ्यं
समुद्देष्यते ६० अथार्भकः प्रकोष्ठेन नेत्रमंजनचिन्हितं प्रमृजन्नरुदद्देहि स्तन्यमंबेत्यनुक्षणम् ६१ आहूय
करुणासिंधुर्गौरीं द्रोणीपुरीश्वरः अंबेत्याहूय भवतीमयं रोदिति बालकः ६२ देहि स्तन्यामृतं तस्मै तत् प्रियं
मे त्यवोचत अथ मूर्त्तिमती देवी जगतां जननी शिवा ६३ आगत्यास्यांतिकं बालमंके कृत्वा सुविस्मिता स्त
न्यामृतरसैः पूर्णं चषकं हेमनिर्मितम् ६४ ददौ गृहीत्वा तद्धस्ते क्षुधितः स च तत्पपौ ६५ वेदांतबोधमयमंबिक
या वितीर्णस्तन्यामृतं तदनुपीतवतोर्भकस्य उद्गारपूर इव सूक्तिसुधाप्रवाहो वक्त्रादजायत जगत्त्रयतापहारी ६६

रालयस्य शिवालयस्य अररेण कपाटेन छन्नं मार्गं ५८ ५९ क्वेति समुद्देष्यते ज्योतिषे सूर्याय ६० ६१ ६२ ६३ आगत्येति चषकं पानपात्रं ६४ ६५ ६६

६७ ६८ ६९ यद्देति एतत्पानपात्रं मनीषिणां विदुषां अर्थेन प्रयोजनेन हृद्यं मनोहरं सकलविद्याप्रदं गौरीस्तन्याधारत्वादिति भावः ७० अ
स्माकमिति संविदृशा ज्ञानदृष्ट्या समिंधे दीप्यते निद्रूम्यौ दोषाविति धातोर्लट् ७१ ७२ ७३ इतिश्रीमानवल्लुपनामकनृसिंहविर

अथगौरीभगवतीहृदितस्यप्रशांतये तस्यदर्शिततांटंकासद्यएवतिरोदधे ६७ सुप्रभातंततोजज्ञेद्रोणीपुरनि
वासिनां शिवव्रतःकृतजपःजगामशिवसन्निधिम् ६८ सहेमचषकंहस्तेबालस्यालोक्यसस्मितः कस्योच्छि
ष्टमिदंदूरेत्यजेतितमतर्जयत् ६९ यदास्वहस्तदंडेनचषकंक्षेप्तुमागतः तदार्भकोजगादैतदर्थहृद्यंमनीषि
णाम् ७० अस्माकमज्ञानतमःप्रणष्टंसंविदृशासंस्तुतिभीतिशांत्यै पुरःप्रबोधायकृतोमृडान्यामाणिक्यताटंक
रविःसमिंधे ७१ अहोबालोग्रहग्रस्तःनिर्गतोनिशिचत्वरे भस्मरक्षांपिताकृत्वाप्टच्छत्किंचिन्निवेदितम् ७२
तदानींमिलिताःशंभोःसंनिधौनागराजनाः अमृतानीवविकिरन्स्तोषीदीशमर्भकः ७३ इतिश्रीस्कांदो
पपुराणेभक्तविलासेषट्चत्वारिंशोऽध्यायः ४६ श्रीअगस्त्यउवाच गौरीसुतोहंदेवेशस्तन्यपानेनशंकर क्ष
मस्ववाचाविहितमपराधंविभोमम १ एणीदृशालंकृतविग्रहायवाणीशमुख्यामरसेविताय वेणीजटा
बद्धसरिद्वराय द्रोणीपुरीशायनमःशिवाय २ ब्रह्मांतभेदामयभेषजांघ्रयेब्रह्मांडसृष्टिस्थितिनाशसाक्षिणे ब्र
ह्मस्तुतिप्रीतिमतेवृहन्महस्ततोनमोब्रह्मपुरीश्वरायते ३ विद्यानवद्याविमलाचकीर्त्तिर्वेदागमोक्तेचविधौचवि

चितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांषट्चत्वारिंशोऽध्यायः ४६ ॥ ॥श्री॥ गौरीति हे शंकर स्तन्यपानेन निमित्ते
न अहं गौरीसुतः १ स्तुतिमारभते एणीत्यादिना एणीदृशा गौर्या अलंकृतः विग्रहः कायो यस्य तस्मै अन्यत्सुगमं २ ब्रह्मेति पिपीलिः

सएवामयोरोगः तस्यभेषजंऔषधरूपः अंघ्रिर्यस्यतस्मैहेबद्दल् हेत्र्र्यक्षन् ३ ४ नालीकनेत्रेति नालीकनेत्रःपुण्डरीकाक्षोविस्मुरि

स्वर्थः तेनअर्चितंचारुचक्षुर्यस्मै हरिस्तेसाहस्त्रमित्यादिनास्पष्टं नालीकैःपद्मैःसंपूज्यंपदांबुजंयस्यतस्मै केलीस्मितेन विलास मंद

निश्वासभाग्यंयदनुग्रहेणतस्मैनमोवेणुपुरीश्वराय ४ नालीकनेत्रार्चितचारुचक्षुषेनालीकसंपूज्यपदां
बुजाय केलीस्मितप्लुष्टपुरत्रयायकालीपुरेशायनमःशिवाय ५ जंभारिलोकद्रुमपुष्पमालासंभावनीयांघ्रि
सरोरुहाय अंबामहासेनसमन्वितायचंपापुरीशायनमःशिवाय ६ पंचपातकहंत्रेतेपंचब्रह्मस्वरूपिणे
पंचभूताधिपतयेपंचाणतनवेनमः ७ त्रयीनुतायत्रिपुरांतकायत्रिवर्गदायत्रिगुणातिगाय त्रिमूर्तयेस्तु
त्रिपुटीनियंत्रेत्रैलोक्यनाथायनमःशिवाय ८ त्वामेववाग्वदतुपश्यतुलोचनंमेत्वामेवसन्नमतुमौलिरपिश्रु
तिर्मे नित्यंशृणोतुचरितंतवचंद्रमौलेस्वामिन्मनःस्मरतुतावकमंघ्रिपद्मम् ९ इतिस्तुत्वामहादेवंसार्द्धसं
वत्सरद्वयः कुंचितैकपदोहस्तेननर्त्तचषकंवहन् १० नेदुर्दुंदुभयोदिव्याःनिपेतुःपुष्पवृष्टयः जगुःकलंचगं
धर्वाःजगत्तरलितंमुदा ११ शिवप्रसादमालोक्यशिशौतस्मिन्प्रकाशितं सिद्धाविस्मयमाजग्मुःप्रणेमुःसक
लाश्चतम् १२ अथगौरीपदांभोजनिर्माल्यसमलंकृतं शिबिकांबालमारोप्यनिन्युःशिवगणागृहम् १३
गौरीस्तन्यामृतामोदवासितंतदाननं जिघ्रतीजननीमेनेकरेकैवल्यसंपदम् १४ ॥ ७ ॥ ७ ॥

हासेनप्लुष्टंदग्धंपुरत्रयंयेन ५ ६ पंचेति पंचपातकानांब्रह्महत्यादीनांहंत्रे पंचब्रह्माणः सद्योजातादयः स्वरूपंयस्य पंचार्णः पंचा
क्षरीमंत्रः सएवतनुर्यस्य ७ त्रयीति त्रय्या ऋग्यजुस्सामरूपयानुताय त्रिवर्गोधर्मकामार्थसमुदायः तंददातीति तस्मैत्रिगुणातिगाय

शमकाय ८ उपसंहरति इतीति १० ११ १२ १३ १४

१५ १६ छायेति कुशीलवंगायकंनीलकंठंनामभक्तं १७ १८ संभाव्येति अंबिकासूनुर्हरदत्तः १९ २० २१ २२ २३ २४ २५

अथशरद्यांव्यतीतायांगत्वाकोलवनेश्वरं नत्वास्तोतुंप्रवृत्तेस्मिन्नभूत्तालद्वयंकरे १५ हेमतालकरश्चक्रेतालबं धमनोहरैः वचोभिस्तवमीशस्यतेनप्रीतोभवद्गुरुः १६ छायावनेशिवस्तुत्वाप्रयागच्छन्निजंपुरं कुशीलवंवनीं प्राप्तंनीलकंठेनमोदत १७ सोभूज्ज्ञात्यानिकृष्टोपिसर्वेषांमानभाजन गायतांशिवनामानिनकर्मकुलदूषणम् १८ संभाव्यस्तस्यदास्येननीलकंठोभवत्कृती कृतचौलोंबिकासूनुश्रीमद्व्याघ्रपुरंगतः १९ स्तुत्वाशंभुंततोः द्राक्षीन्मुक्तयेनृत्तमीश्वरं वृद्धाचलंततोगत्वास्तुत्वातत्रमहेश्वरम् २० स्तोष्यन्हरावतारेशंनिशिश्रांतोभ वत्पथि शिवप्रसादतःस्वप्नेप्रातःप्राप्तांसमौक्तिकाम् २१ दत्तांब्राह्मणयूथेनशिबिकांछत्रमुत्तमं चिन्हंवा द्यंचजग्राहबालव्यजनमुत्तमम् २२ राजराजस्तुतोवाग्मीतत्रस्तुत्वामहेश्वरं अथापशिबिकारूढोजन्म धाममहाकविः २३ अथोपनीतोगुरुणाब्रह्मचर्यव्रतान्वितः अद्धैष्टचतुरोवेदानपठत्सकलाःकलाः २४ अ थविद्यासुसर्वासुसारांशःकोभवेदिति विचार्यत्यक्तसर्वाशःपंचाक्षरपरोभवत् २५ वागीशंसुहृदंप्राप्यस्तुवन्स्था नेषुशंकरं चचारपालयन्लोकान्यथाभानुर्भुवंगतः २६ दुर्निवारमपस्मारंराजपुत्र्यानिवार्यसः दृष्ट्वैवदिव्य याथागात्स्तोतुंशोणाचलेश्वरम् २७ तत्रातिवाह्यहेमंतंसुरक्षन्निखिलान्जनान् पुनःकवेरजातीरंदक्षिणंप्रा प्यसत्कविः २८ क्रमेणशंभुस्थानेषुतुष्टावस्वेच्छयागिरा एकदाग्रीष्ममध्यान्हेपरिश्रांतोमहातपैः २९ कविःस

२६ २७ २८ २९ कविरिति कायमानं पर्णशालां ३०

३१ स्तुलेति गवावतारे क्षेत्रविशेषे ३२ ३३ ३४ ३५ सेति असैव वणिजे अहिना दष्टः पीतो मृत इति भावः ३६ ३७ ययतुरिति श्रीपुरं क्रम



दृष्ट्वा देवाश्च तत्सर्वे विस्मिताः किं पुनर्नराः स्तोतुं कुंभेश्वरं प्राप्य मध्यार्जुनमनुत्तमम् ३१ स्तुला शंभुं महालिंगं त्रिरात्रं तत्र सोवसत् पित्रा गवावतारे स्व प्रार्थितो यष्टुमिच्छता ३२ तुष्टाव तत्र श्रीकंठं सद्दो धनमुत्तमं द्रव्यं पित्रे स तद्दत्वा यजेति समचोदयत् ३३ स्थलेषु संचचाराथ शंभोर्भूयो महाकविः अथानेकस्थले वापि कुत्रचिद्दिवसे पथि ३४ प्रेतस्य पुरतः कांचिद्ददर्श रुदतीं सतीं परिदेवनमूलं किमित्यपृच्छत्स तां स्त्रियम् ३५ सात्रवीत्सांजलिः पित्रा दत्तास्म्यस्मै वणिग्वरः दष्टोयमहिना पीतोस्य नाथो रक्ष मामिति ३६ माभैरिति च तामुक्त्वा नीलकंठस्तवेन सः वैभूय मुक्तो वयामास मुदितौ तौ च दंपती ३७ ययतुः स्वां पुरीं भूयः प्रणम्य शिवनंदनं ततः श्रीपुरमासाद्य नत्वा श्री स्वागनायकम् ३८ अस्तोषीद्रुचसांगुपैः कल्हारैर्विकचैरिव वाग्मीच वाचा विरतं शरणे शालयादरम् ३९ ज्ञानसंबंधसत्त्वाथ भूयस्संजघटेतरां पांड्यदेशे जिनग्रस्ते कुलपक्षेण मंत्रिणा ४० आहूतः संनिधौ शंभोः वादं कृत्वार्हतैः समं जित्वा जिनाष्टसाहस्रं शूलेष्वारोपयत्कविः ४१ श्रीऋषय ऊचुः कथमारोपिताः शूले जिनाः क्षपणकद्विषा कुंभसंभव तत्सर्वं विस्तारात् वक्तुमर्हसि ४२ श्रीअगस्त्य उ॰ मधुरायां पुरा कश्चिज्जयध्वजसमाह्वयः पांड्यः शतक्रतुस्पर्धी जिनैरासीत्स वंचितः ४३ चोलेंद्रदुहिता तस्य सुमतिर्नाम वल्लभा सचिवः कुलपक्षाख्यो शिवभक्तगणाग्रणीः ४४ कुलक्रमागतां शंभोर्भक्तिं चोलसुतावहत् हालास्येश्च

हालास्यं नाम क्षेत्रं ३८ ३९ ज्ञानेति कुलपक्षेण तन्नामकेन ४० ४१ कथमिति क्षपणकद्विषा हरदत्तेन ४२ ४३ ४४ ४५ ॥ ॥

४७ ४८ अथेति कौतुकनाथेन जयध्वजापरपर्यायेण राज्ञा ग्रावाणः पाषाणान् ४९ ५० ५१ ऊचतुरिति सुमतेः तद्भार्यायाः ५२ ५३ ५४ ५५

निषेव्य निर्गतं केचिदाहुर्मायाविदः शठाः शिलायां देवताबुद्धिस्त्वं मूढोसि महीपते ४६ यदुपासनया दुष्टं कर्म साक्षान्न शाम्यति किं तस्य सेवया भाविशल्मलीसेवया यथा ४७ यदस्माभिरुपास्यं तद्दैवतं फलदं पुरः परीक्षा क्रियतां राजन् सिद्धं चेदार्हतो भव ४८ अथ कौतुकनाथेन पृष्टा जैनाः कथं त्विति ग्रावाणस्त्वं संगृहाणेति तं प्रोचुः स तथाकरोत् ४९ पस्पर्श किंचित्पिच्छाग्रैः राजहस्तस्थितान् जिनः माणिक्यभावमगमन् ग्रावाणस्ते तदीक्षिताः ५० तस्मादेव प्रणमन् पांड्यस्तं देवार्हततां गतः अथ मंत्री च महिषी दुःखितौ मधुरापुरे ५१ ऊचतुस्तौ मिथो भक्तान् रक्षंतौ शिवसम्मतान्॥ सुमतेर्वंशगो रूपा दासी सा पांड्यो जिनोपि सन् ५२ इयं तदनुसाराय भस्मभोगेषु सोलिके चिरकालेगते मंत्री राज्ञी सविजने स्थिताम् ५३ प्राह प्रह्वोत्र हे देवि देशोस्माकं जिनैर्वृतः संत्यक्ता च पुरी सेयं शिवभक्तैर्महात्मभिः ५४ भवत्सकाशाच्च मया भक्ताः केचित्प्रतिष्ठिताः संरक्षणीयो राजा नः सह त्वं व्यादृमे जिनाः ५५ राज्यभ्यनुज्ञाय दितेन चैतन्मम दुष्करं उपायः कोन्विति तया पृष्टः स सचिवोत्तमः ५६ ज्ञानसंबंधवृत्तांतं यथाश्रुतमवर्णयत् गौरीस्तन्यामृतास्वादसंप्राप्तपरमार्थदृक् ५७ आहूयतामित्यादिष्टो मंत्री विप्रानचोदयत् ते च वेदविदो विप्रा वेदारण्ये च वाक्पतिम् ५८ प्राप्य गौरीसुतं प्रोचू राज्ञी मंत्रिसमीरितं हरदत्तोयमुदितो तत्रावस्थाप्य वाक्पतिम् ५९ मौक्तिकां दोलिकारूढो प्रतस्थे सोगतां त

५६ ज्ञानेति ज्ञानसंबन्धस्य हरदत्तस्य ५७ आहूयतामिति वाक्पतिं वागीशं ५८ प्राप्येति गौरीसुतं हरदत्तं ५९ ६० इति श्रीमानवल्लुपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां सप्तचत्वारिंशोऽध्यायः ४७॥ ॥ ॥ ॥ ॥

ततइति प्रस्थानानंतरं १ ततीयेति गणेशस्कन्दापेक्षया २ दुर्निमित्तान्येवजैनानामाह चैसेति ३ ४ ५ ६ ७ ८ कल्पयामासतुरि



श्रीअगस्त्यउ० ततोमार्गेमहेशस्यस्थानानिसुबहूनिसः निषेवमाणःशनकैर्हरदत्तोजगामह १ ततीयेतनयेगो यः प्रस्थितेमधुरांप्रति आर्हतानामभावायदुर्निमित्तानिजज्ञिरे २ चैत्यप्रासादमामूलंपतितंदद्दशुःक्षितौ स्वप्ने चकुंडिकांध्वस्तांपाठितंचनिजंकटम् ३ कदंचंडानिलग्नस्तंपिंछाग्रंदग्धमग्निना अपश्यन्नार्हताचार्यक्षप णाव्याघ्रभस्त्रितम् ४ स्त्रियश्चमुंडितादृष्टाश्चारुदन्जिनदेवताः अथदुःस्वप्नमालोक्यतेराज्ञेतेन्यवेदयन् ५ अ थराजापितान्प्राहस्वप्नदग्धार्थमग्निना समायांसचिवौदृष्ट्वामोचयंतौबभूवतुः॥ किंवाकर्तव्यमितितेसर्वेवि मनसोभवन् ६ अथपथिधरणीसुरैः कृतार्हैरवनतमौलिरवेक्ष्ययोगिवर्यान् मणिमयशिबिकोत्तमाधिरूढोमधु रकविर्मधुरांतिकंविवेश ७ अथागतानांविप्राणांप्रेषितानांपुरास्वयं मुखादाकर्ण्यमुदितौज्ञानसंबंधमागतौ ८ कल्पयामासतूराज्ञीसचिवौचोपकारिकां ९ स्नानापदेशात्सचिवःकवींद्रंप्रत्युद्ययौतंप्रहितश्चराज्ञा मठो त्तमेवेगवतीतटांतेप्राप्यांतिकंतस्यदयोःपपात १० दृष्टःकोयमितिप्रोक्तौमंत्रीतिद्विजपुंगवैः हस्तेगृहीत्वातंप्रा हमदाव्हानप्रयोजनम् ११ किंचेत्युपव्हरेपृच्छत्शिवव्रतसुतःकविः इतिपृष्टोथसचिवस्तमाहविहितांजलिः १२ वेदांतागमसिद्धांतप्रतिष्ठार्हतनाशनं फलंममेतिपदयोःप्रणनामपुनःपुनः १३ आलयंतत्क्षियदूरेमीनाक्षी सुंदरेशयोः इत्समाख्यसपप्रच्छसोप्यदर्शयदंतिके १४ अथगोपुरमालोक्यमणिकुंभैरलंकृतं प्रणनामससाष्टांगंस्ता

ति उपकारिकांनिवेशस्थम ९ १० ११ १२ १३ १४ १५ १ २ ३ ४

१६ १७ १८ १९ आयथाविति काहलिकाः शृङ्गाकारधातुमयावाद्यविशेषवाद्काः २० वंदिनइति वंदिनस्तुतिपाठकाः विरुदावलीरिति वर्ण्य मानाङ्कविरुदवर्णनप्रचुरोज्वला वाक्याडंबरसंयुक्ता सामता विरुदावलीति लक्षणलक्षितान् प्रबंधविशेषान् २१ २२ २३ अयोघन

स्नात्वावेगवतीपूरेभस्मोद्धूलितविग्रहः मुक्ताप्रवालांतरितांबिभ्रद्रुद्राक्षमालिकाम् १६ मौक्तिकांदो लिकारूढोमौक्तिकच्छत्रभूषितः वीथीविधातुकामोगाद्रोपुराणांप्रदक्षिणम् १७ गंधतैलावसिक्ताभि र्दीपिकाभिर्दिनात्यये उद्भासितपुरोभागःपुरींपश्यन्ययौशनैः १८ चत्वरेषुजिनाःसर्वेसंघीभूयविलोः कयतं आश्चर्यकृष्टमनसस्तस्थुश्चित्रार्पिताइव १९ आययौवैदिकाचार्यः आययौकविशेखरः आययौ तनयोगौर्याइतिकाहलिकानदन् २० वंदिनोवाग्मिनोग्रेस्यपेठुश्चविरुदावलीः जयवैदिकसिद्धांतवे दांतस्थापनोद्यत २१ जयाद्रिकन्यकास्तन्यसुधामधुरवाङ्मय जयकौंडिन्यगोत्राब्धिवृद्धिपूर्णसुधाकर २२ जयदुष्टार्हतमतध्वांतध्वंसदिवाकर जयक्षपणकध्वांक्षक्षोभप्रस्तरभाषित २३ अयोघनोयंजिनकुं डिकानांचंडानिलस्तत्सटसत्कटानां दावानलस्तत्करपिंछकानांआयातिचैत्याचलवज्रसूक्तिः २४ पला यध्वंनिलीयध्वंरेरेचार्वाककौशिकाः ज्ञानसंबंधचंडांशुरुदितोसौप्रकाशते २५ इतितद्विरुदावल्यःपठिता स्तत्सुरःसरैः तथागतानांकर्णेषुपेतुर्दंभोलयोयथा २६ अथश्रीज्ञानसंबंधःकृत्वावीथीप्रदक्षिणं वाहनादव

इति रूपकाणि चैत्यंजैनमंदिरं तदेवाचलः तस्य वज्ररूपासूक्तिर्यस्य २४ पलायध्वमिति रेरेइति नीचसंबोधने वाक्यादेरित्यादिना संभ्रमे द्विरुक्तिः चार्वाकाएव कौशिकाघूकाः २५ इतीति तथागतानां सौगतानां २६ २७ ८ ८ ८ ॥

२८ २९ हेमेति हेमाब्जिनी सुवर्णपद्मिनी हेमाचलएवश्राकर्षितं कार्मुकंयेन ३० ३१ ३२ ३३ ३४ लीलेति लीलानांयाचतुष्षष्टिःविंशत्या

शिवाशंकरयोर्मध्येनमस्कृत्वामहाकविः लिंगंज्योतिर्मयंशंभोःदिव्यचंदनचर्चितम् २८ सूर्यकोटिप्रतीकाशं सोमार्द्धकृतशेखरं सोपहारंप्रणम्येशंस्तोतुंसमुपचक्रमे २९ हेमाब्जिनीतीरनिकेतनायहेमाचलाकर्षितकार्मुकाय हेरंबषड्वक्त्रसमन्विताय हालास्यनाथायनमःशिवाय ३० पांड्याधिराजार्पितपादुकायफणाधराधीश्वरकंकणाय पाखंडदूरायपरात्परायहालास्यनाथायनमःशिवाय ३१ कंदर्पदर्पार्णवबाडवायकंठस्थलाकल्पमहाविषाय कल्पांतवन्ह्यास्पदलोचनायहालास्यनाथायनमःशिवाय ३२ मंदाकिनीभूषितमस्तकायमंदारमालांचितमस्तकाय वृंदारकाधीशमुनिस्तुतायहालास्यनाथायनमःशिवाय ३३ वेदांतविज्ञानसुखप्रदायनादांतरूपायनटेश्वराय पूतांतरंगैःपुरुषैस्तुतायहालास्यनाथायनमःशिवाय ३४ लीलाचतुष्षष्टिसुधार्णवायहेलास्मितप्लुष्टपुरत्रयाय मूलायवेदागमवल्लरीणांहालास्यनाथायनमःशिवाय ३५ नानाभवव्याधिविनाशनायदीनावनांगीकृतविग्रहाय भानात्मनेभस्मविलेपनायहालास्यनाथायनमःशिवाय ३६ सामप्रियायसकलागमसंस्तुतायसांबायसंसृतितमिस्रसुदीपकाय सत्यात्मनेसकललोकविलक्षणायसाक्षात्कृतायशितिकंठनमःशिवाय ३७ श्रीअगस्त्यउ॰ इतिस्तुत्वामहादेवंमहाकविजनाग्रणीः नमस्कृत्वाचमीनाक्षींमस्तौषीदमृतोक्तिभिः ३८ मातर्मतंगकुलवल्लभमान्यमूर्त्तेमंदस्मितद्युतिमनोज्ञमुखारविंदे मंत्रात्मिके

याः सदेकत्वइति संख्यायामेकवचनं तस्याःसुधार्णवाय ३५ ३६ ३७ ३८ ३९

५० ५१ कल्याणेति माराविरोधोरतिः सुभगायया हरनेत्राग्निसंदग्धकामसंजीवनौषधिरितिस्मरणात् करुणोरसःसोस्यास्तीतिकरुणोदास

कुंदस्मितेकुमुदबंधुकलावतंसे कुंभस्तनालिखितकुंकुमपंकरेखे कोणत्रयैकनिलयेकुलशैलबालेमह्यं प्रसीदमलयध्वजपांड्यकन्ये ५० लीलाशुकार्भकमनोहरहस्तपद्मेनीलालकग्रथितनिर्मलकेतकाले हालास्यनाथसहचारिणिहंसयानेमह्यंप्रसीदमलयध्वजपांड्यकन्ये ५१ कल्याणकल्पलतिकेकरुणाकटाक्षकल्लोलनर्त्तितकविल्वकला नदीके माराविरोधसुभगेकरुणानुकंपेमह्यंप्रसीदमलयध्वजपांड्यकन्ये ५२ कर्णावतंसितकदंबवनप्रसूने कौशेयकांतिनिजकल्पतरुप्रवाले कस्तूरिकातिलकरंजितफालदेशेमह्यंप्रसीदमलयध्वजपांड्यकन्ये ५३ सद्यःसमुद्यदरुणप्रतिमांशुकाभेसौभाग्यदानधृतकौतुकदीर्घनेत्रे संध्यानटप्रलयतांडवसाक्षिभूतेमह्यंप्रसीदमलयध्वजपांड्यकन्ये ५४ मस्तार्पितंमणिरिवश्रुतिमालिकायांमान्यंमुकुंदकमलासनशंकराद्यैः मंजीरशिंजितकृताभयमंघ्रिपद्मंमन्मूर्ध्निदेहिमलयध्वजराजकन्ये ५५ शिक्षामवापमहतींनिकटेगुरूणांजन्मांतरेषुचशिवंपरमर्चयित्वा मीनाक्षिपुण्यपरिपाकवशात्त्वदंघ्रिंप्राप्तस्यकस्यचिदुदेतिचिदात्मबोधः ५६ इतिदेवीमपिस्तुत्वाकृतपंचाक्षरीजपः कृत्वाप्रदक्षिणान्येचजगामस्वोपकारिकाम् ५७ इतिश्रीस्कंदोपपुराणेभक्तविलासेअष्टचत्वारिंशोऽध्यायः ४८॥ ७ ॥श्रीअगस्त्यउवाच॥ कदंबरास्तुसंभूयश्रुततद्विरुदोक्तयः बभूवुर्दुरहंकारदवाग्निपुष्टमानसाः १ हंतश्रुताद्यसुहृदःकस्यापिविरुदो

जनः मलयधीयोच्चतेषुअनुकंपायस्याः ५२ ५३ ५४ ५५ ५६ ५७ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायां

भक्तविलासप्रकाशिकायांअष्टचत्वारिंशोऽध्यायः ४८॥ॐ॥ ॥कदंबराट्इति कदंबराजैनाः अहंकारएवदवाग्निः तेनपुष्टदग्धंमानसंयेषांते १ २ अयमिति ब्रह्मबंधोः अधमस्यब्रह्मबंधुरधिक्षिप्तइत्यमरः ३ ४ ५ ६ ७ ८ हरदत्तमिति शिलायांशिरोघाते हियथा



अयंस्वयंपयःपानंपीत्वातस्यामृषाब्रवीत् ब्रह्मबंधोर्वटोरस्यदौरात्म्यंपश्यतार्हताः ३ बाल्यएवास्यलोकोयंमायावादेनवंचितः उपेक्षणीयोनास्माभिरयंव्याधिरिवैधितः ४ मठेवेगवतीतीरेवर्त्ततेब्राह्मणांकुरः भानुर्यावद्दुदेत्यघमंत्रैस्तंमारयामहे ५ दिगंबराणांसिद्धांतविजेतुमयमागतः इतीहकिंवदंतीचमहतीप्रथतेतराम् ६ इतिसंमंत्र्यतेमंत्रानिशीथेजेपुरार्हताः क्षोटिकांतरमात्रेयैःहन्यतेद्रोहिणोजिनैः ७ तस्मैरितोपिमंत्राग्निर्नतपस्पर्शदुस्सहं कृतपंचाक्षरजपपीतगौरीपयस्तनम् ८ हरदत्तमहारण्येज्वलनंकीटकोयथा तस्मिन्प्रतिहतेमंत्रेशिलायांशिरसीवते ९ साक्षाद्देवदद्दुर्वेन्हिंमठेस्थानेमहात्मनो हरदत्तजनास्तत्रज्वलंतंवीक्ष्यपावकम् १० तस्मैनिवेदयामासुराचकर्षाथसोनलं समूर्त्तःप्रांजलिर्भूत्वादासोस्मीतिव्यजिज्ञपत् ११ आर्हतप्रहितस्यास्तुस्थितिःक्वापिनयुज्यतां अंबासुतंसमभ्यर्च्यप्राहसघार्चिषंव्रज १२ यैरिहप्रेषितोसित्वंतेषांराजतनुस्थितिः अथाग्निःपांड्यभूपस्यवपुर्धेवर्ष्मणिज्वरः १३ निबध्यपाणीपादौचप्रक्षिप्तइवपावके व्याघूर्णमानोनिश्चेष्टोबभूवावचनोनृपः १४ मंत्रीवैद्यंतथाहूयपप्रच्छामयकारणं जिनेंद्रादृष्टनाडीकाःप्रोचूरौचमंत्रिणम् १५ नाडीनांनैववैषम्यमस्त्यहोसूक्ष्मताविभोः अर्हतोऽस्तमयोयावत्ततःप्रागेवसज्वरम् १६॥ ॥

शिरसएवहानिस्तथामंत्राणांहरदत्तेप्रयोगेमंत्राणामेवकार्यसाधनप्रयुक्तनिंदादिरूपाहानिरितिभावः ९ १० ११ १२ येरितितेषांराज्ञः

तनौस्थितिर्यस्यताद्दृशःज्वरःज्वरीभूतइत्यर्थः १३ १४ मंत्रीति आमयकारणं रोगहेतुम् १५ १६

१७ प्रब्रुवंतइति अर्हद्वैद्यास्ते आमृजन् शोधयामासुः १८ निर्वासाइति निर्गतंवासोयस्मात्सःराजा १९ सहसेति दूनंदुःखितंअंगंयेषांतेः

राज्ञःप्रशमयिष्यामःपश्यविद्याबलंमहत् इत्यार्हतानांभिषजःपिच्छिकाग्रैर्महीपतिम् १७ प्रब्रुवंतोर्हविद्यास्तमाः
केशपर्यामामृजन् आमृज्यमानेतद्गात्रेव्यवर्धतमहाज्वरः १८ निर्वासाःपरमोराजादह्यमानइवाग्निना समीपेयेस्थि
तास्तस्यचिकित्सायाविधित्सया १९ सहसातेपिनिर्जग्मुर्दूनांगास्तज्ज्वरोष्मणा आहूतादूरतःकेचिदार्हताधृतपिच्छि
काः २० अर्हन्नर्हन्नितिमनुंजपंतःप्रामृशन्मुहुः औषधैरपिमंत्रैश्चप्रायस्ताःकीर्त्तयेजिनाः २१ निराशास्ततःसर्वे
संभूयोचुरिदंवचः कश्चित् द्विजवटुःप्राप्तोतद्धासान्नृपतेर्ज्वरः २२ इतउद्धासनेतस्यशाम्येदेषमहाज्वरः अथा
कार्यवचोमंत्रीप्राहतानार्हताधमान् २३ शक्तिरस्तिनयुष्माकंतत्प्रयोगनिवर्तने तदुत्सारणमिष्टंवस्ततोन्
नभविष्यति २४ ज्वरोनिष्कासकस्यापियदिस्यात्तन्निवर्त्तते कःशक्नोतिनृपस्यापिदुरवस्थेयमीदृशी २५
अत्रागत्यसचेत्पश्येत्प्रशाम्येत्स्वामिनोरुजा इत्युक्तेनैवतस्यापिशक्तिरित्यूचुरार्हताः २६ मंत्रिणाथस्वयंग
त्वासमानीतोंबिकासुतः विवेशपांड्यप्रासादंहृदयंकटवाससाम् २७ महांतमार्हतंशैवपाखंडःसंस्पृशेत्कथं नि
स्सार्यतांबहिरयंशमयामोस्यत्वज्ज्वरम् २८ इत्यष्टसाहस्रकटांबराणांसंघस्समावृत्यमहीपतिंतं दिव्यैश्चमंत्रैर्म
हितौषधैश्चप्रशशाकनैवास्यरुजंनिमार्ष्टुम् २९ यदामूर्च्छालुरभवन्नृपतिःसुमतिस्तदा शरणंबोधसंबंधमापमां
गत्यवदद्ये ३० अथतांप्राहकारुण्यान्महिषीमंबिकासुतः रक्षाम्यवश्यंभर्त्तारंमाभयंतेपतिव्रते ३१ ॥ ७ ॥

२१ २२ २३ २४ २५ २६ मंत्रिणेति भयंकर्त्तृकटवाससांजैनानांहृत् हृदयंविवेशेत्यन्वयः २७ २८ २९ यदेति मूर्च्छालुःमूर्च्छावान्सुमतिः

३२ उन्मील्येति शैवदेशिकं शैवाचार्यं ३३ ३४ उपवेश्येति अस्य सामीप्येन महीपतेराश्वासो बभूवेत्यन्वयः ३५ ३६ ३७ ३८ ऊचुरिति अहंप्रत्य
यरूपः अहंकाराश्रयात्मरूप इत्यर्थः शांकरिः गौरीस्तन्यपानकर्तृत्वात् शंकरापत्यं हरदत्तः ३९ देहमिति सः देहः विकारितया अस्तिजा



महिमानं शिवस्यात्र पश्यंतु सकला जिनाः इति भस्म समादाय सचिक्षेप नृपालिके ३२ उन्मील्य च तदेवाक्षि स
बोधः पांड्यभूपतिः जगाद प्रांजलिरिदं शयानः शैवदेशिकम् ३३ स्वागतं ते महाभाग रत्नपीठ इहास्यतां
इति स्वमौलेस्सविधे स्थापिते सचिवेन तम् ३४ उपवेश्य महात्मानं ददर्शेंदुमिवोदितं तदाश्वासो बभूवास्य
सामीप्येन महीपतेः ३५ यथा महातपार्त्तस्य छाया वृक्षस्य संश्रयात् मणिपीठे स्थितं राज्ञो मौलिपार्श्वे महाद्यु
तिम् ३६ साभ्यसूयमवैक्षंत जिनाश्चोरा रविं यथा निवासः कुत्र भवतामिति पृष्टो महीभृता ३७ पुण्यं गौ
रीसुतश्चाह स्थानं द्रोणीपुरं मम हृत् भक्तिः कुत्रेति संपृष्टः शिव इत्याह साक्षिणि ३८ ऊचुश्चासहमानास्तं शि
वो नास्तीति चार्हताः अहंप्रत्ययरूपोऽसौ सर्वत्रेत्याह शांकरिः ३९ देहमूचुरथात्मानं ते विकारितया न सः इत्युवा
चांबिकासूनुः प्रत्यक्षमानमूचिरे ४० जिना बहिर्मुखास्तेन तहेदोमानं महात्मना इति श्रीज्ञानसंबंधः ततस्तैर्बहु
भाषितम् ४१ यद्यत्तद्दूषितमभूद्वितंडाजातिनिग्रहैः जिग्ये जिनाष्टसाहस्रमेकेन हि द्विजवर्णिना ४२ ॥ ७ ॥

यते वर्द्धते विपरिणमते अपक्षीयते नश्यतीति षड्विकारवत्त्वात् आत्मनश्च निर्विकारित्वाद्विकारवान् देहो नात्मेति भावः तथा चायं प्रयो
गः देहो नात्मा विकारित्वात् यन्नैवं तन्नैवं यथा पट इति ४० ४१ यदिति वर्णः प्राशस्त्यं तच्च स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं संक
ल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव चेत्यष्टविधमैथुनराहित्यरूपं तदस्यास्तीति वर्णी ब्रह्मचारीत्यर्थः वर्णिनो ब्रह्मचारिण इत्यमरः ४२

जयइति मुनयोजैनाः मुनींद्रःश्रीघनःशास्तामुनिरित्यमरः ५३ ५४ ५५ ५६ ५७ ५८ ५९ ५० ५१ ५२ ५३ ५४ गृहीतुकामइति अंविकासूनुनेति

जयोस्माकमितिप्रोचुर्निर्लज्जामुनयःपुरः निवार्यवाचिकलहंतस्यतेषांचपार्थिवः ५३ येनमेशमितोरोगस्तन्म
तस्यान्महत्तरं नवाच्चामहिमाज्ञातुंशक्योवर्षशतैरपि ५४ इत्युवाचस्वाभिमतंतत्क्षणेसमभूज्वरः वामभागे
ज्वरोस्माभिःशाम्यतेदक्षिणेऽमुना ५५ विनीयतेचेद्देषस्यास्मोद्विजवटुर्भवेत् अस्त्वितिस्वनुमतेराज्ञापिद्धाग्रे
स्तत्रभूपतिम् ५६ ममन्त्रुःसिषिचुर्जैनाःकणिकाजलबिंदुभिः विद्याविशारदैर्वैद्यैरौषधैरभिवर्धितः ५७ जि
नातस्यापितोराज्ञःज्वलतेस्मज्वरानलः हाहतोस्मिजिनैर्दुष्टैरित्युक्त्वामूर्छितोनृपः ५८ यदाभीतामहिष्या
सीत्तदासंजीवितोमुना रक्षेतिज्ञानसंबंधंवदन्नंजलिमादधे ५९ भस्मामृष्टमथानेनदक्षिणांगंमहीपतेः
उल्काभममृतांभोधौनिमग्नमिवविज्वरम् ५० वामेमहाज्वराक्रांतंदक्षिणेसुखनिर्भरं हालाहलमयंक्वापि
सुधामयमिवक्वचित् ५१ आसीसांऽद्यनृपस्यांगमार्हतास्तुनिशम्यसुः जिनामास्तशतेस्युक्तांतंनृपःशरणं
गतः सतुतत्राप्यदाद्भस्मप्रशांतश्चमहाज्वरः ५२ इतःप्रभृत्यस्तसभाप्रवेशोनमेजिनानामितिमंत्रिणंनृपः
उदीर्यनिष्कास्यसमस्तसौगतान्नीरोगगात्रःशरणंतमासदत् ५३ अथपंचाक्षरीविद्यांहालास्येश्वरसंनिधौ
५४ गृहीतुकामोनिरगादंबिकासूनुनानृपः निष्कासिताजिनाःसर्वेशोचन्नार्हतमोडिरे ५५ स्वप्नेप्रपश्यन्नात्मानं
शुष्ककाष्ठाग्रसंस्थितं भयोत्थितायदातावद्दुष्प्रभातमजायत अथसंगत्यतेसर्वेनृपमूचुरिदंवचः ५६ मासन्मतंदूष

सहार्थेतृतीया सर्वेअशोचन् आर्हतंमतंनईडिरे नस्तुतवंतः ५५ ५६ ५७

५८ कथमिति अर्हतःस्वीयदैवतात् वरंश्रेष्ठंदैवतंनास्तीत्यन्वयः ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७



नलंत्वमस्यैवपरीक्ष्यतांनचेद्गुणोभविष्यसिचिरेणतेश्वनः ५७ अथाभूत्कुपितोराजामंत्रीवर्णीप्रचोदितः ५८ कथं परीक्षेतिजिनानपृच्छन्मिलितान्बहून् तेतमूचुर्दुरात्मानोनार्हतोदैवतंवरम् ५९ इतिपत्रेविलिख्याग्नौक्षिपा मोदह्यतेनतत् यद्यस्मन्मतमेवस्वीक्रियतांचतथामुना ६० तथेत्यनुज्ञयाराज्ञोनिरुद्धेग्नौतदक्षिपन् ददाह पावकःपत्रंतत्तूलमिवतत्क्षणात् ६१ अथश्रीज्ञानसंबंधोनदेवंशंकरात्परं इत्यालिख्यमहावन्हौपत्रंचिक्षेपव र्द्धिते ६२ गृहीत्वामूर्तिमान्वन्हिःपत्रंतज्जयपत्रवत् ददावंबासुतकरेसप्रणम्यतदग्रहीत् ६३ अथभीतोमहा राजोमंत्रीचप्रणमन्नमुं पुष्पवृष्टिरभूद्दिव्यावैदिकाश्चमुदंदधुः ६४ अथार्हताःपुनःप्रोचुस्तद्योगिनिरिति संगताः सरित्प्रवाहेप्रक्षिप्तंप्रतिपूवनवद्यदि ६५ क्रियतेलिखितंपत्रंभवान्विशत्तुनोमतं अथमंत्र्यार्हतान्प्रा हक्रियतामत्रकःपणः ६६ वदतायंमहान्लोचेच्छापेनध्वंसयिष्यति शूलारोपणमेवास्तुतस्ययस्यपराज यः ६७ इत्यार्हताष्टसाहस्रमवोचद्राजसन्निधौ लिखितंपूर्ववत्पत्रंक्षिप्तंवेगवतीरये ६८ सहार्हतमतेना श्विंप्रासंसत्वैश्वरवंडितं अंबासुतेनयत्क्षिप्तंपूर्ववद्दिहितासरम् ६९ प्रवाहेसरितस्तस्यतत्पत्रंप्रतिपुपुवे दिविदुंदुभिनिर्घोषःसशंखनिनदोभवत् ७० नृपःश्रीज्ञानसंबंधंशिवंमूर्तममन्यत उत्साद्यवस्त्राणिकटान्ध्वं सयित्वाचकुंडिकाः ७१ दग्ध्वाचपिंडिकाग्राणिचैत्यानिर्भिद्यचद्विपैः महाजिनाष्टसाहस्रंशूलाग्रेस्थापितंतथा ७२

६८ सहेति सतैःजलचरजंतुभिः ६९ ७० ७१ ७२ ७ ७ ७ ७ ॥

७३ ७४ ७५ ७६ प्रतिष्ठामिति ईजिरेइष्टवंतः ७७ ७८ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराण
व्याख्यायांभक्तविलासप्रकाशिकायांमेकोनपंचाशोऽध्यायः ४९॥ ॥ॐ॥संप्रति पौरमंत्रिसहितस्यराज्ञः श्रद्धातिशयेनहरदत्तस्य

शूलप्रोतेषुबौद्धेषुतत्परीवारकोटयः धृतरुद्राक्षभस्मानःकेचित्तंशरणंगताः ७३ ररक्षशरणंप्राप्तानयंपूर्वंजि-
नानपि शिवस्मरणमात्रेणमत्वाविगतकल्मषान् ७४ द्वीपांतरंगताःकेचिद्देशांतरमथापरे आसीन्नष्टंजि
नकुलंतमःसूर्योदयेयथा ७५ अथपंचाक्षरींतस्माद्गृहीत्वापांड्यभूपतिः महाभिषेकविधिनाहालास्येश
मपूजयत् ७६ प्रतिष्ठांवैदिकाजग्मुरीजिरेचमखैर्हरं ७७ सपांड्यभूपोनवरत्नराशिभिःपरार्ध्यहेम्नाचकृ
ताभिषेचनं निषेवमाणःशिवभेवदैवतंययौसमृद्धिंसुरनायकोयथा ७८ इतिश्रीस्कंदोपपुराणेभक्तवि
लासेएकोनपंचाशोऽध्यायः ४९॥ ॥ ॐ॥श्रीअगस्त्यउवाच कुलपक्षश्चसुमतिःपांड्यराजश्चनागराः त्रि
संध्यमन्वहंनत्वाहरदत्तमपूजयन् १ सभार्येणाथपांड्येनमंत्रिणाचसमन्वितः नारायणःशंकरश्चतोयत्रे
कौतदापसः २ त्रिकूटाचलमासाद्यतत्रस्तुत्वामहेश्वरं श्रीमद्वेणुवनेशंसुंतुष्टावगिरिजापतिम् ३ अ
थरामेश्वरंगत्वारामनाथंनिषेव्यतं समागतेनहालास्येस्वपित्राचसमन्वितः ४ स्तुत्वापांड्यंसहामात्यं
सभार्यंप्राहिणोत्पुरं तेचापिदेशिकंनत्वामधुरांप्राविशन्पुरीम् ५ अथश्रीज्ञानसंबंधःपित्राबंधुभिरावृतः
जगामसह्यजातीरंनावातांचातरद्विभुः ६ सौगताधिपतिस्तत्रतस्यपंथानमारुधत् आरोपितान्स्वान्शूलाग्रे

पूजापूर्वकंतेनसहउत्तमक्षेत्रसंचारंवर्णयति कुलपक्ष इति १ सभार्येणेति यत्रहरिहरक्षेत्रेएकोएकीभूतौतत्क्षेत्रं २ ३ ४ ५ ६

 सदुति दंभोलिर्वज्रं ८ ९ १० ११ अथेति एकस्याम्रतरोर्मूलं गच्छतीति तं आम्रतरुमूलवसतेरिति पञ्चशयां १२ सुवर्णेति श्रीगिरिमि



सनयावद्गतस्तस्यसमीपंद्विजवर्णिनः तावत्पपातदंभोलिस्तस्यमूर्ध्निदुरात्मनः ८ अथापरेतमाजग्मुःजिनावादसमुत्सुकाः जिगायतान्सवादेपितेचतंशरणंगताः ९ संप्रेषयित्वापितरमथब्रह्मपुरंप्रति पराचलेचशोणाद्रीशंभुस्कंदसरित्तटे १० स्तुत्वाजिनप्रयोगेणविफलास्थूलभूरुहाः प्रीतयेशिवभक्तस्यसफलानकरोद्दृशा ११ अथकांचीपुरेदेवमेकाम्रतरुमूलगं स्तुत्वादेवींपराशक्तिमाकाशबिलचारिणीम् १२ सुवर्णमुखरीतीरेकालहस्तीश्वरंगिरौ प्रीणयित्वाजगामाथकेदारंश्रीगिरिंतथा १३ गोकर्णेचमहादेवंतेषुस्तुत्वामहाकविः अथगोकर्णसंनिधेशिवभक्तांघ्रिकिंकरः १४ कश्चिन्महाधनोनामवैश्यःक्षपणकद्विषः दातुकामःस्वतनयांपुपोषासप्तवत्सराम् १५ ततोवसंतेसंप्राप्तेपुष्पापचयकौतुकात् विचरंतींवनेसर्पोदंदशचरणांगुलौ १६ गतासुःसाभवत्सद्यःसतामग्नौचकारसः एकस्मिन्कलशेकृत्वातदस्थीन्यवसच्चिरम् १७ रक्षकांक्षमाणःसतदागमनमातुरः संचिरादागतंतत्रगुरुंक्षपणकांतकम् १८ प्रणम्यचमुहुःप्राहप्रांजलिःसहबंधुभिः इदमाकर्णयेतांब्रह्मन्हंवैश्यकुलोद्भवः १९ भवादृशानांमहतांपादकैंकर्यतत्परः अप्रस्थितोस्म्यहंदूरेस्थितस्यापियशस्तव २० आकर्ण्यदातुकामोस्मिकन्यांकांचिद्दपोषयं सापुष्पापचयंकर्तुंवसंतेममबालिका २१ वनंप्रविष्टासदृष्टाभुजंगेनासुभिर्विना कृतातदापितांचाग्नावदहंल्लक्तिमुत्तमाम् २२ निश्चित्यतेस्थिनिचयःसंगृहीतश्चिरंघटे उज्जीवयि

श्रीशैलं १३ गोकर्णेति तेषुस्थानेषु १४ कश्चिदिति क्षपणकद्विषः हरद्वचस्य आसप्तवत्सरांसप्तवर्षा १५ १६ १७ १८ १९ २० २१ २२२३

२४ २५ २६ २७ २८ २९ महेतिस्नानं विवाहप्राक्कालिकं कर्म ३० ३१ ३२ ३३ ३४ प्रविश्येति कृताशीर्वचनः कृतानि

इतितद्वचनंश्रुत्वासद्योदत्तेनभस्मना कन्यामुज्जीवयित्वातंवैश्यंप्राहमहाकविः २४ यथात्वयैषाजनितातथाद्य॰ जनितामया नयुक्तोमेविवाहोस्यास्ततोन्यस्मैप्रदीयताम् २५ जहृषुश्चजनाःसर्वेकन्यावानप्यगाद्गृहं कन्यासापिव रंनान्यंवव्रेनिर्विण्णमानसा २६ आराध्यशिवमेकाग्रंजगामगतिमुत्तमां अथाहूणाचलेस्तुत्वाशिवंकृत्वाप्रदक्षिण म् २७ द्रोणीपुरंगतस्तत्रन्यवात्सीदंबिकासुतः स्तन्यप्रदानकलयाप्रमृष्टापाणिनामया २८ दृष्टिरस्यततोनाभूद नुरक्तान्यतोहृता बांधवानिश्चिताद्यस्यविवाहेधृतकौतुकाः २९ महाकुलोद्भवांकन्यांतेनद्रपुरवासिनः शुभे लग्नेमुहूर्तेचकवेःस्नानमकारयन् ३० निर्वर्तितत्रतस्नानःकृतकौतुकमंगलः आरूढमुक्ताशिबिकोययौभद्रपु रींप्रति ३१ ब्राह्मणाःक्षत्रियावैश्याःशिवभक्तामहत्तराः द्रष्टुंश्रीज्ञानसंबंधविवाहोत्सवमागताः ३२ अलंकृतास भातत्रभद्रवेदीसमन्विता विश्वकर्मकृतापूर्वंशिवयोरिवमंगले ३३ तत्रसर्वेप्रविविशुर्नीलनग्नादयोद्विजाः कृ तोपचारश्चवरोबध्वासहविभूषितः ३४ प्रविश्यवेदींहुत्वाग्निंपाणिग्रहणमाचरत् विधायलाजहोमादीन्कृ ताशीर्वचनोद्विजैः ३५ नमश्चक्रेसपितरौसभार्योब्राह्मणानपि सबंधुवर्गोपितरौप्रांजलिःप्राहसत्कविः ३६ पित्रो श्चबांधवानांचकांक्षितंकिमतःपरं वदतापास्यसंकोचंनद्दास्यस्यैवशंकरः ३७ इतिपृष्टास्तमूचुस्तेबंधुभाग्योत्त मावयं सायुज्यमेवचेच्छामश्चंद्रशेखरपादयोः ३८ इतितत्प्रार्थनातुष्टःसभार्यःसेवितुंशिवं प्रायालयंगिरांगुंफैःतु

आशीर्वचनानियस्मै ३५ ३६ ३७ ३८ ३९ ४० ० ० ० ०॥

४० ४१ ४२ ४३ उपसंहरन्फलस्तुतिमाह श्रीति ४४ इतिश्रीमानवल्लुपनामकनरसिंहविरचितायांस्कंदपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपंचाशत्तमोऽध्यायः ५०॥ ७ ॥ ॥अपीति तत्अनिर्वाच्यंकैवल्यंमोक्षरूपंकरस्थितमित्यन्वयः यथाश्रुते तस्येत्यस्यवैय्यर्थ्यंदुर्वारमेव १

तदुद्वाहश्रियंद्रष्टुमिच्छन्निवमहेश्वरः कोटिसूर्यप्रतीकाशस्तदाग्रेसहोमया ४० शिवेनवांछितंब्रूहीत्युक्तःशंभुंजगादसः अस्तुसायुज्यमेतेषामितिसोप्यन्वमोदत ४१ पितरौनीलनगंनचबांधवानपरानपि अग्रेप्रवेशयामासजपंम्पंचाक्षरीमनुम् ४२ सर्वेप्यथमविशेषुविधायत्रिःप्रदक्षिणं सभार्योज्ञानसंबंधोलिल्येज्योतिषिशांकरे ४३ श्रीज्ञानसंबंधचरित्रमेतत्पठंतिश्रृण्वंतिचयेमहांतः शिवप्रसादेनपुनर्निवृत्तिर्भवेन्नतेषामुदितंहिसत्यम् ४४ इतिश्रीस्कंदपुराणेभक्तविलासेपंचाशोऽध्यायः ५०॥ ॥७॥श्रीअगस्त्यउवाच अपिप्राणात्ययेप्राप्तेयःशिवद्रोहिदर्शनं नविधत्तेभवत्यस्यकैवल्यंतत्करस्थितम् १ अत्रैवोदाहरंतीममितिहासंपुरातनं कलिकामस्यचरितंकलिकामजितोबुधाः २ भूषणंचोलदेहस्यपुरमस्तिमहत्तरं हंसनृत्तचलद्गंगामरुताशीतलंविभोः ३ तत्राभूत्कलिकामाख्यःशिवभक्तपदार्चकः यस्यदर्शनमात्रेणबिभ्यतीशद्रुहोभुवि ४ सदासक्षुरिकांधत्तेशिवद्रोहिजिघांसया श्रीकर्मकुर्वन्नास्तेस्मश्रीमत्यागेश्वरालये ५ सएकदालयद्वारिशयानोमशकव्रजैः संपीड्यमानोनिर्निद्रःशंकरंपादचारिणम् ६ दृष्ट्वाहाहेतिसरुदन्पप्रच्छसांजलिर्हरं भगवन्क्वास्थितःक्वासिनिशीथेनंदिनाविना ७ यत्रचैकचरोलोकेघोरहत्यैवशंक्यते दृषद्भिःकंटकैश्चापिदंतुराराजवीथयः ८ ७ ७

अत्रेति कलिकामोजयतीति तस्य २ भूषणमिति हंसानांयन्नृत्तंगात्रविक्षेपःतेनचलंत्यांगंगायामरुतावायुनाशीतलं ३ ४ सद्इति श्रीकरंकर्मे

९ कलिकामेति अन्यथा अन्यत्रेत्यर्थः पणलभ्याअंगना १० तदिति तथाकृत्वातामनुनीयेत्यर्थः ११ क्रोधमिति स्वामिनोदैत्येनियोजनादितिभा
वः १२ १३ हरइति तस्यकलिकामस्योदरेशूलव्यथामधादित्यर्थः १४ १५ कर्त्तुकामइति अवमतोवमानितः १६ १७ यथेति त्यागेश्वरः यथा

शरपातोयथानेत्रे तथापादार्पणंतव वदेतिपृष्टोनिर्बंधात्कलिकामंहरोवदत् ९ कलिकामान्यथानेवव
र्णयतामिदमुच्यते कुपितापेयसीसख्युःसुंदरस्यपणांगना १० तन्नियुक्तोनुनेतुंतांतथाकृत्वास्मिचागतः
इत्युक्त्वांतर्हितेशंभौकलिकामश्वसुंदरे ११ क्रोधंमहांतंविदधेदौत्येस्वामिनियोजनात् अथप्रत्यशृणोदे
वंयदाद्रक्ष्यामितंरिपुम् १२ हनाम्यहंतमित्युच्चैर्वीथीषुसमघोषयत् सुंदरोथतमाकर्ण्यशंकरंशरणंय
यौ १३ हरश्चप्रार्थितस्तेनशूलंतस्योदरेव्यधात् सशूलरोगव्यथितःतुष्टावत्यागनायकम् १४ स्तुतिप्रीत
स्सतंप्राहसुंदरस्त्वांस्पृशेद्यदि शूलरोगःप्रशांतःस्यान्नान्यथाभाषितंमम १५ कर्त्तुकामश्चकिंस्वांतेश्वोवः
श्चैष्यतिसुंदरः आगतश्चेदवमतोवर्धेताथतवामयः १६ कलिकामेस्मरंरियावेवमुक्त्वातिरोहिते स्ववेश्म
प्राप्यभार्यायैशिवाज्ञांतामभाषत १७ यथात्यागेश्वरोदेवःक्रियतामित्युवाचसा सखायंचहरःप्राहकलिका
मोदुरामयः १८ विनीयतांत्वयागत्वामाभैस्त्वांनहनिष्यति १९ अथप्रभातेकलिकामनामाशिवद्रुहस्पर्शसुजी
वितेन प्राणेनकिंमेभवितेतिमत्वास्वहेतिनाकुक्षिमथाप्यभांक्षीत् २० प्रियश्चशंभोर्विधिवच्चिकीर्षुराज्ञांमहेश
स्ससुंदरोपि स्मरन्हरांघ्रेरथभस्महस्तस्समाययौतत्कलिकामवेश्म २१ निर्भिन्नकुक्षिंरमणंतदीयाप्रच्छाद्य

अभाषतेत्यन्वयः १८ विनीयतामिति शिवद्रुहःस्पर्शेनसुजीवितेनेत्यर्थः १९ अथेति स्वहेतिना स्वशस्त्रेण २० २१ ७ ७ ॥

२२ २३ अथेति कलिकामस्य तत्स्पर्शपरिजिहीर्षया एवंकारित्वेन तदनुरोधादिति भावः यूयंदूरमागमनाद्दूरम् बहुआयासिता इत्यर्थः यू
यमिति शेषः २४ सर्वथेति निर्भिन्नहृदयमिति भर्तृविशेषणं २५ कलिकाम इति स्वकृते स्वार्थे भक्ते विषये योद्रोहः तदघस्यशुध्यर्थं २६
२७ अन्योन्येति सुंदरमित्रं आसमानं चैतिच्छेदः २८ २९ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्त



दत्वासनं चार्घ्यमपि प्रणामं व्यधत्त तस्मै हरमेव मत्वा २२ अथ तामब्रवीत्साध्वीं सुंदरः पूजितस्तया॥ कृते भर्त्रोनि
युक्तोस्मि सुहृदा दत्त भस्मना साध्वि प्रशांतो भर्तुस्ते रोगो दर्शयमाचिरम् २३ अथसा प्रांजलिः प्राह शांतो नाथ
स्य मे गदः दूरादागमनाद्यद्दूरमायासिता इति २४ सर्वथादर्शनीयो सौ कलिकाम इतीरिता हेति निर्भिन्नहृद
यं भर्त्तारं तमदर्शयत् २५ कलिकामं मृतं मत्वा स्वकृते सोपि सुंदरः भक्तद्रोहाघशुध्यर्थं स्वकंठे खड्गमादधे २६
जग्राह पाणिना पाणिमाविर्भूयाथ शंकरः मा साहसं विधेहीति कलिकामश्च जीवितः २७ अन्योन्यमैत्रीं च तयो
र्विधाय ताभ्यां महेशोथ समर्चितांघ्रिः अंतर्दधे सुंदरमित्रमासमानं च भूयः कलिकामनामा २८ कलिकामः समं तेन
तत्रैव कमलालये चिरं वसन्प्रसादेन शंभोः सायुज्यमाप्तवान् २९ इतिश्रीस्कंदोपपुराणे भक्तविलासे एकपंचाशत्त
मोऽध्यायः ५१॥ ७ ॥श्रीअगस्त्यउ० श्रूयते हिमहाशैलः स्मरणादघनाशनः सिद्धचारणगंधर्वमुनिकोटिनिषेवितः १ यत्र
सर्वेश्वरः श्रीमान् शंभुराकाशमध्यगः स्कंदविघ्नेशसहितस्सह देव्या सदा वया २ निवसत्यज्ञसंभूतहरिमुख्यसुरैःस्तुतः तस्यप

विलासप्रकाशिकायामेकपंचाशत्तमोऽध्यायः ५१॥ ॥ ॥श्रूयत इति महाशैलः कैलासः अघं पापं १ यत्रेति आकाशो दहराकाशः त
न्मध्यस्थित इत्यर्थः २ निवसतीति पक्कणः शबरालयः ३

षष्ठीति सौरभमेषामस्तीति सौरभीणि तादृशानि हल्लकानि कह्लाराणि यत्र तादृशं ४ ५ अमावास्यामिति यदिति संबध्यते ६ यमिति सिद्धेषु

षष्ट्यष्टकोटिगणपनीरंध्रशिखरश्रयः यत्र सौगंधिकं नाम सरस्सौरभिहल्लकम् ४ यत्र मंदाकिनी रम्या प्रवहंती सुदृश्य
ते यः शंकरजटाचंद्रकलिकाचंद्रिकोज्वलः ५ अमावास्यां न जानाति निःशोषितसुधाकरां यदीयशिखरं दृष्ट्वा पुनर्गर्भे
न मज्जति ६ यन्न पश्यंति पापिष्ठाः कामक्रोधांधचेतसः तत्र सिद्धेषु कैलासे मूलनाथ इति श्रुतः ७ परकायप्रवेशा
दौ शक्तिमान्भक्तिमान्हरे आसीत्कश्चिदसौ जातु स्थानेषु धरणीतले ८ सर्वत्र सेवितुं शंभुं प्रतस्थे व्योममार्गतः न कैला
सात्परं किंचित्सुरमस्ति न गम्यताम् ९ सिद्धैरिति निरुद्धोपि ततः प्रस्थित एव सः केदारे चाविमुक्ते च गोकर्णे मल्लिका
र्जुने १० कालहस्तिस्थले दिव्ये विस्तते चारुणाचले श्रीमद्वृद्धाचले कांच्यां पुंडरीकपुरे हरम् ११ सेवमानः क्रमेणाप
कावेरीतीरमुत्तमं वेदारण्ये पुरे लक्ष्म्याः कावेरीसिंधुसंगमे १२ छायावने श्वेतवने मायूरे चाघनाशने निषव्य देवमी
शानं गवावतरमभ्यगात् १३ समाजं विहिताक्रंदमभ्याशे तस्य दृष्टवान् बाष्पायमाननयनं मूलनाथो गवां कुलम्
१४ दृष्ट्वा तत्सविधं गत्वा किमेतदिति शंकितः परितः प्रेक्षमाणस्तु गोपालं मृतमैक्षत १५ कंडूविनोदैश्च तृणैश्छायाभिः
सलिलैर्गवां सकुलं पोषयामास गावस्तच्छोककर्शिताः १६ यथा नष्टेषु वत्सेषु तृणेष्वपि गतस्पृहाः विलोक्य दयया का
र्यं कथं स्यादित्यचिंतयत् १७ स योगशक्तिमान्कुंजे देहं विन्यस्य च क्वचित् नासिकादृष्टिमार्गेण प्राणैस्तद्वपुराविशत्
१८ अथ सद्यः समुत्तस्थौ गोपः सुप्तोत्थितो यथा गावो हृष्टास्तथा सर्वाः पीतामृतमिवातुराः १९

इति निर्धारणे सप्तमी ७ ८ ९ १० ११ १२ छायेति गवावतरं नाम तीर्थं १३ समाजमिति अभ्याशे समीपे विहितः आक्रंदो रोदनं येन तादृशं १४ १५ कंडू

आसायमिति सायंकालमभिव्याप्येत्यर्थः वासनाभिः पूर्वोक्ताभिः वासितं वर्ष्मगोपस्य च आविशदित्यन्वयः २० २१ २२ २३ २४ २५ २६ रुदित्वे

आसायं चारयित्वा गाः प्रदोषे पुरमाविशत् वासनावासितं वर्ष्म ययौ गेहं तदंगना २० क्षीरान्नैर्भोजयित्वा तं निशि तच्छयनं
ययौ व्रजदूरे स्मशानं मां द्रुतियावदुवाच सः २१ परिहासमिति ज्ञात्वा सा बलादालिलिंगितं गोपः शिवशिवेत्युक्त्वा निर्ययौ
सहसा बहिः २२ मातर्ग्रहेण ग्रस्तो सौ महानुन्माद एव वा भवेदस्य शिवेत्युक्तिः वैष्णवस्य श्रुता कदा २३ इति सा वि
हृत्वा गोपी निशि बंधून मेलयत् निशीथे मिलिताः सर्वे किं किमित्यन्वयुंजत २४ अनुयुक्ता च सा गोपी तद्वृत्तांतं न्यवेदय
त् मायागोपश्च तत्स्पष्टः किमेवं धीरिहेति तैः २५ नोन्मत्तो न ग्रहग्रस्तो विरक्तोस्मीत्यभाषत अलं स्यादेव गतिरित्युः
क्त्वा सर्वे गता जनाः २६ रुदित्वा सा चिरं गोपी निर्विण्णा प्राविशद्गृहं आमोदितगुरुन्येयुर्विवक्षुः स्वांतनु पुनः २७ निकु
जे नात्मनो मूर्त्तिं मूलनाथो ददर्शितां प्रणिधानस्थितः सर्वं निरचैषीद्विलोकयन् २८ वेदांतसंप्रदायस्य वृथ्ध्यर्थे पशुपा
लकः प्रवेशितः कलावस्मिन् शंभुना सर्वसाक्षिणा २९ वपुर्निकुंजे विन्यस्तमाज्ञयास्य तिरोहितं इति गोरक्षतां प्राप्तः सर्वै
र्लोकैश्च वंदितः ३० यथा नियुक्तोस्मि तथा करोमीति पिनाकिना विचचार महायोगी पूज्यमानो मुनीश्वरैः ३१ अध्यात्मवि
द्याव्याकुर्वन्नयत्समयं बहु॥ गवावतारमासाद्य देवस्याग्रे समुन्नतम् ३२ आश्रितः पिप्पलतरुमन्वहं ध्यानमास्थितः द
क्षश्च यत्क्रियायोगे विन्यस्तात्मा महेश्वरे ३३ क्रमेणोन्मुक्तमूर्त्तिः शैवे ज्योतिष्यलीयत ३४ इति श्रीस्कंदोपपुराणे भक्तवि
लासे द्विपंचाशत्तमोऽध्यायः ५२॥ ❀ ॥ ॥श्रीअगस्त्यउ॰ शिवालयतटाकादौ मृत्तिकां यो हरेदिति स शिवस्य प्रसादेन न पुनः

ति आमोदिताः तोषिताः गावो येन स्वामोदितगुः २७ निकुंज इति प्रणिधानं समाधिः निरचैषीत् निश्चितवान् २८ २९ ३० ३१ ३२ ३३ ३४ इति श्री

मानवस्युपनामकलसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांद्विपंचाशत्तमोऽध्यायः ५२ ॥ ॥ ॥शिवेति मृत्तिकां ह

कश्चिद्दंड इतिख्यातोभक्तोभूत्कमलालये जात्संधःश्रवणात्तस्यशिवेभक्तिरजायत २ अंधस्यमेकथंमुक्तिःस्यादिसे वंविचिंतयन् कमलालयतीरस्थंब्राह्मणंशरणंगतः ३ ब्राह्मणःसोपितंप्राहचक्षुषारूपदर्शिनं देहिनःसंसृतौहेतुरि तिनेत्रंमुनीश्वरः ४ निमीलयित्वातद्ध्यायन्ब्रह्मज्योतिःसनातनं तदाभावात्कृतार्थस्त्वंमयोहमितिमाश्रुचः ५ मु क्तिहेतुंप्रवक्ष्यामिसावधानमनाःशृणु पश्चाद्भागेमहेशस्यतीर्थमेतन्महत्कुरु ६ खात्वेणुद्वयांतस्थंरज्जुमालंब्य मृत्तिकाः दूरेकुरुष्वपंचार्णंजपन्नित्यमसंद्रितः ७ एवंचेन्मुक्तबंधस्त्वंभविष्यसिनसंशयः एवमुक्ताथपंचार्णं तस्मैमंत्रमुपादिशत् ८ जपन्सपरमंमंत्रंखनित्रपिटकाधरः कृत्वाशिरसिमद्वारंरज्जुमालंब्यगच्छति ९ तथैवपु नरायातिदंडेमृत्खननायसः तस्यैवंवर्त्तमानस्यययुर्वर्षाण्ययोद्विजाः १० तत्खन्यमानंसुमहद्गाधंचशनैःश नैः तमागत्यजिनाःकेचिद्दुसंतोवाक्यमब्रुवन् ११ वृथायासेनजात्यंधकिमनेनभविष्यति अस्मदालयमागत्यत्वा तमृत्कुरुभित्तिकाम् १२ दास्यामोवेतनंनित्यंतेनात्मभरणंभवेत् दंडःप्राहशिवःसर्वेसर्वसाक्षीप्रदास्यति १३ श्री कर्मकरणंतस्यप्रीतयेविदुरुत्तमाः भवंतोनैवजानंतिमहिमानंपिनाकिनः १४ प्रसन्नेसतिगौरीशेकिमसाध्यंशरी रिणां इत्युक्तास्तेपुनःप्रोचुःपरिहासात्तथागताः १५ सत्यमांध्यनिवृत्तिंचविधास्यतितवेश्वरः दंडस्तदाविनिश्च स्यप्राहभूयःसमागतान् १६ अनांध्यमेतथांध्यंवावांछाचेत्सविधास्यति विकलानांपरीहासाद्भवंतिविकलाजनाः १७

रेत्तन्निक्षिपेदित्यर्थः १ कश्चिदिति श्रवणात्पुराणादीनामितिशेषः २ ३ ब्राह्मणइति सोपिब्राह्मणःतंदंडं ४ ५ मुक्तिहेतुमिति तीर्थंत्वमपिजुषमंभः

त्थं ७ खननमिति मृत्तिकामृत्तिकाभारुपादं ८ तथेवेति द्विजाइतिवरो
सर्वं १० भवेदिति तातपूर्व मित्तिकामित्तिकाष्टमा १२ १३ १४ शुद्धः
वाद्धिति १५ तत्वागतावीड्डाः १६ १७

१८ अपहृत्येति पाणिना हस्तेन प्रहृतं उदरं येन शोकादिति भावः १९ २० २१ २२ अनाशित इति अभुक्त इत्यर्थः २३ २४ २५ इत्तं धस्येति सं 

इत्युक्ताः कुपिता मूर्खाः वेणुं रज्जुं च चिच्छिदुः तेषु कश्चन दुष्टात्मा खनित्रं तत्करे स्थितम् १८ अपहृत्यान्यतो यातो शक्तस्तदनुधावने रुदन् संनिधिमभ्येत्य पाणिना प्रहतोदरः १९ त्यागराज कथा तोसि यदि हत्वं दुरात्मना आध्यम चैव भवति श्रीकर्मकरणायते २० भूयादनाध्यं च ममेत्युक्ता प्रत्यभ्रूणो सुनः नमस्य कृत्वा श्रीकर्ममुक्तिर्जैनानशि क्षिताः २१ यावत्त्वं धाम वसेते त्यागेश्वरम् ऋषानवाक् इति स्थितस्य दंडस्य गिरिमस्तयथो रविः २२ अनाशितश्च दं डोपि शंभो रग्रे स्वपन्निशि स्वप्ने तमाह त्यागेशस्तवनेत्रे भविष्यतः २३ भविष्यति जिनाश्चाद्य राज्ञा हृतधनाद्ययः यत्र क्वापि गमिष्यंति श्वः प्रातः सत्यमुच्यते २४ इति दंडं समाश्वास्य राजानं प्राह शंकरः जिनैरुपद्रुतो भक्तो संनिधौ दंडनायकः २५ श्रीकर्मधारिणस्तस्य खनित्रं यद्धृतं बलात् उपोषितस्य चैतस्य धत्तें धस्य दृशो मया २६ मेलयित्वा हेतान् प्रातः पृच्छ त्वं मिलितानमून् किं वो युक्तमिदं कर्तुं खनित्रहरणं बलात् २७ इति पृष्टास्त्वया मूर्खाः वक्ष्यंति त्वां च संगताः अथ मिथ्यां वदत्संधः कृतं वास्मासु केनचित् २८ स्थूलः कृशोयं खर्वो वा दाधीयानसितोरुणः वर्षी यांस्तरुणोसौ यो दुष्ट इति स्म स कीदृशः २९ वदत्वसौ तथाप्यस्य प्रमाणमवनं यदि प्रत्ययः क्रियते स्वामिन् पुरतो दै वतस्य तैः ३० इति तद्वाक्यमाकार्य सस्त्रीपुत्राः सहार्भकाः त्यागेश सन्निधिं प्राप्य कुरुध्वं शपथं दृशोः ३१ इत्या चक्ष्व ततः सर्वं कर्तव्यं क्रियते मया नृपमाज्ञापयित्वैवं त्यागराजस्तिरोदधे ३२ नृपः सद्यः समुत्थाय भीतस्स पुलको

धियर्थः २६ २७ २८ २९ ३० ३१ ३२ ३३

३४ प्रणम्येति अयंजनः कस्येयोजयतामित्यर्थः ३५ ३६ ३७ ३८ ३९ खनित्रमिति कमलालयेतीर्थे ४० ४१ ४२ ४३ ४४ ४५ नचे

सागेशरक्षरक्षेतितस्याक्रोशंनिशम्यसः उत्थापयत्तमद्राक्षीद्दंडउन्मीलितेक्षणः ३४ प्रणम्यभीतःसंप्राहप्रांजलिःप
प्यतोनृपः किंकरोस्मिविधेयस्तेकस्येयोजयतामिति ३५ प्रणतंपादयोःप्राहदंडोलब्धविलोचनः यथानिदेशंदेव
स्यक्रियतामित्यभाषत ३६ जिनान्प्रभातेनृपतिःसमस्तान्निरुध्यशंभोर्मिलितान्पुरस्तात् किंदंडभक्तस्यकरात्ख
नित्रंबलाद्धृतंतद्वदतेत्युवाच ३७ संदर्शयत्विहागत्यजातंधःस्वापराधिनं मृषावादंनिशम्यात्रयुक्तंनास्मन्नि
रोधनम् ३८ इत्यूचुराहेतारात्पुरस्तात्सोप्यथाब्रवीत् युष्मासुचेन्नकेनापिहृतंदंडस्यहस्ततः ३९ खनित्रंतर्हि
कर्त्तव्यःशपथःस्वामिसंनिधौ सबालाःसार्द्रवसनाःनिमग्नाःकमलालये ४० शपित्वानेत्रयोःस्पष्टमुत्खिनत्वेस
दार्हताः दंडश्चेत्सत्यवादीस्याच्चक्षुष्मान्सभविष्यति ४१ जन्मवयत्रचनचेद्भवितांध्यंयथाधुना एवमस्त्वितिरा
जानमुक्त्वातेसकलार्हताः ४२ कंठवस्रानास्नानार्द्राःसस्त्रीबालामुदान्विताः प्रतिमादेवतानेतिमन्वानाप्राप्यसंनि
धिम् ४३ यदासंमिलिताःसर्वेराजागच्छत्सहानुगैः चक्षुष्मानथदंडोपितत्रैवप्रत्यदृश्यत ४४ तेनिरुद्धानृपभ
टैर्दंडमुन्मीलितेक्षणं विलोक्यभीताश्चान्योन्यंपश्यंतिस्मसुखंजिनाः ४५ नचेदंध्याभविष्याम इतिस्पष्टंहृशोशप
न् बभूवुःसद्यएवांधाःसस्त्रीबालाःसहानुगाः ४६ वदन्नमःशिवायेतिदंडस्तुष्टावशंकरं राज्ञागृहीतसर्वस्वास्त
स्माद्देशात्पलायिताः ४७ जिनाःसर्वेसुराह्यष्टावववर्षुःकुसुमोत्करं अलब्धशरणाःक्वापिमहाव्याधिप्रपीडिताः ४८

दिति तयावयंवध्याभविष्याम इत्यर्थः स्पष्टेदृशोयेन ४६ वदन्निति गृहीतंसर्वस्वंयेषांजिनाःसर्वेइति पूर्वेणान्वयः ४७ ४८ ४९ ५० ५१

 ॥७॥ ययेति हीनयायोनिभावः पुष्णाति पोषयति १ संचरन्निति दुस्त्यजंसंध्योपासनादिब्राह्मणानांसर्वेषामेवब्रह्मवधाकरणादिच २

क्षुधार्त्तोविलयंजग्मुःशिवभक्तद्रुहोजिनाः नैसमुन्मथ्यमूर्वोणांसोपानानिमहीपतिः ४९ कमलालयतीर्थस्य कारयामासचादितः दंडभक्तोपितत्रैवकुर्वन्श्रीकर्मशाकरम् ५० चिरायत्यागराजस्यप्रसादान्मुक्तिमाप्तवान् ५१ इतिश्रीस्कंदोपपुराणेभक्तविलासेत्रिपंचाशत्तमोऽध्यायः ५३॥७॥ श्रीअगस्त्यउ॰ ययाकयापिवावृत्याद्रविणैःस्वयमर्जितैः पुष्णातिशिवभक्तान्यःकर्मबंधात्समुच्यते १ संचरन्नपिसर्वत्रभुंजानोवायतस्ततः निषिद्धमपिकुर्वाणस्त्यजन्वाकर्मदुस्त्यजम् २ शुश्रूषयेद्भक्तानांदेहीपापैःप्रमुच्यते इतिहासमिनिरव्यातंशृणुतप्रब्रवीमिवः ३ शिवभक्तेषुभक्तिःस्यादस्येवाकर्णनादिह क्षीरिणीनामतटिनीक्षीरप्रस्रवणोज्वला ४ सदाफलैःपुष्पवृक्षैरुभयोःकूलयोर्घना विहितावभृथस्नानैर्वैतानेषुद्विजोत्तमैः ५ तीर्थानितीर्थीकुर्वद्भिर्नित्याभिषवणादृता अस्तितस्यास्तटेकिंचिदरण्याख्यंमहत्पुरम् ६ स्वाचारनिरतैर्वर्णैश्चतुर्भिःसमनुष्ठितं दीक्षितान्ब्रह्मसत्रेषुयत्रवैदिकसत्तमाः ७ मुखरीकुर्वतेसौधान्वत्तामयजुषांस्वरैः शिवभक्तार्चकोनामशूद्रोभक्तश्चिदुत्तमः ८ सधनैःशिवभक्तानांपूरयन्नासवांछितं नास्यप्राणेतथाप्रीतिर्यथाभक्तेष्टसाधने ९ नकश्चिच्छिवभक्तेषुयस्तेनासीदनर्चितः वन्तेमा

शुश्रूषयेदिति अभक्तानामितिच्छेदः अभक्तानित्यर्थः संबंधसामान्येषष्ठी अकारच्छेदाभावेविकल्पानुपपत्तेः ३ शिवेति क्षीरवत्प्रस्रवणेन उज्ज्वलेत्यर्थः ४ सदेति घनासान्द्रा ५ ६ ७ मुखरीति शब्दायमानान् कुर्वतइत्यर्थः उत्तमः श्रेष्ठः ८ ९ १० ७

तस्येति सदनं गृहं दुःखातिशयं विनापरीक्षा न भवतीति भावः ११ १२ प्रणम्येति मां किंकरं दासं विधेहीत्यर्थः १३ अथेति तापसरूपी तापसछद्मा १४ १५ आवयोर्व
धीति वयःसमाप्तिपर्यंतमित्यर्थः समवस्थाप्यतमिति शेषः १६ निर्धनस्येति मे इति शेषः १७ अंगानीति इह कार्ये जनानां कर्त्तव्यं कार्यं किमिति भावः साध्वी

तस्य भक्तिपरीक्षायां शंभुः कौतुकवानभूत् अग्निना सदनं दग्धं गावो न ष्टा स्थितिर्हता ११ सर्वेन ष्टं क्षणेनैव दानम
श्रोत्रियेयथा अथापरेद्युर्मध्यान्हे भस्मरुद्राक्षभूषितः ॥ अतिथिस्तापसः कश्चिदाययौ गिरिशो यथा १२ तमर्चयित्वा
शिवभक्तमाद्राह्वानेन पाद्यस्य सचासनस्य ॥ प्रणम्य भक्त्या पद्योर्महामनाजगाद दासोस्मि विधेहि किंकरं १३ अ
यतापसरूपी तं भगवानाह शंकरः १४ शिवभक्तार्चक श्रीमन् भक्ताभीष्टप्रदायिनः भवतः कीर्तिमाकर्ण्य द्रष्टुं त्वामा
गतोस्म्यहम् १५ आवयोर्वधितद्द्वयं वस्त्रमन्नं च मे त्वया इत्युक्तः समवस्थाप्य भक्तो भार्यामथाब्रवीत् १६ निर्धनस्य
निरन्नस्य तपस्वी गृहमागतः नास्तिछायाममस्यानु किंचिद्देयं पतिव्रते १७ अंगानि मम वेपंते नेति वक्तुं तपस्विनं ज
नानामिह कर्त्तव्यं साध्वि बुद्धिर्विधीयताम् १८ अथाह भार्या भर्तारं नवाड्ङ्क्लुचिता तव यथाकथंचिद्दातव्यमीप्सितं
स्यात्तपस्विनः १९ इति भार्या वचस्तस्मिन्नृश्रावंतिप्राह तापसः २० मय्याऽतपेतिष्ठति भक्तवर्यकिं सुंदरीं वीक्ष्य चिरं स्थि
तोसि किमस्ति ते वस्तु मदीप्सितं यद्दान्यथा सोहमितः प्रयास्ये २१ हंतपापं मया प्राप्तं दंपत्यालापविभ्रतः ॥ याव
दस्येति समयः प्रयास्ये कार्यसिद्धये तिष्ठंति त्वादृशा भक्ताः कुंभकोणे महास्थले २२ ततस्तत्र गमिष्यामीत्युक्त्वा शंभुस्ति
रोदधे बहिर्निर्गत्य भक्तोपि तमदृष्ट्वा स तापसम् २३ सभूतप्राणवानासीत्तमेवेशममन्यत कुंभकोणं प्रयामेति विश्रुता
त्तदीयवाक् २४

त्तिसंबोधनम् १८ अथेति अर्थात्तपस्विनः ईप्सितं स्यात् तथा कथंचिद्दातव्यमित्यन्वयः १९ इतीति तस्मिन् शिवभक्तार्चके २० किमिति मदीप्सितं वस्तु ते
असि किमित्यन्वयः २१ २२ २३ सइति भूतप्राणवान् भूतकालिक
प्राणसहितः इदानीं निश्चेष्ट इति यावत् २४

४९ ५० ५१ इतिश्रीमानवल्युपनामकनरसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांत्रिपंचाशत्तमोऽध्यायः ५३ ॥७॥ यथेति हीनयायोनिभावः पुष्णाति पोषयति १ संचरन्निति दुस्त्यजंसंध्योपासनादिब्राह्मणानांसर्वेषामेवब्रह्मवधाकरणादिच २



क्षुधार्त्तोविलयंजग्मुःशिवभक्तद्रुहोजिनाः चैत्यमुन्मथ्य मूर्खाणांसोपानानिमहीपतिः ४९ कमलालयतीर्थस्य कारयामासचादितः दंडभक्तोपितत्रैवकुर्वन्श्रीकर्मशाकरम् ५० चिरायत्यागराजस्यप्रसादान्मुक्तिमाप्तवान् ५१ इतिश्रीस्कंदोपपुराणेभक्तविलासेत्रिपंचाशत्तमोऽध्यायः ५३॥७॥ श्रीअगस्त्यउ॰ यथाकयापिवावृत्याद्रविणैःस्वयमर्जितैः पुष्णातिशिवभक्तान्यःकर्मबंधात्समुच्यते १ संचरन्नपिसर्वत्रभुंजानोवायतस्ततः निषिद्धमपिकुर्वाणस्त्यजन्वाकर्मदुस्त्यजम् २ शुश्रूषयेद्वाभक्तानांदेहीपापैःप्रमुच्यते इतिहासमितिख्यातंशृणुतप्रब्रवीमिवः ३ शिवभक्तेषुभक्तिःस्याद्दस्यैवाकर्णनादिह क्षीरिणीनामतटिनीक्षीरप्रस्रवणोज्वला ४ सदाफलैःपुष्पवृक्षैरुभयोःकूलयोर्घना विहितावभृथस्नानैर्वैतानेषुद्विजोत्तमैः ५ तीर्थानितीर्थीकुर्वद्भिर्नित्याभिषवणादृता अस्तितस्यास्तटेकिंचिदरण्याख्यमहत्पुरम् ६ स्वाचारनिरतैर्वर्णैश्चतुर्भिःसमनुष्ठितं दीक्षिताब्रह्मसत्रेषुयत्रवैदिकसत्तमाः ७ मुखरीकुर्वतेसौधान्व्रतामयजुषांस्वरैः शिवभक्तार्चकोनामभूद्रोमूलकश्चिदुत्तमः ८ सधनैःशिवभक्तानांपूरयन्नाससवांछितं नास्यप्राणेतथाप्रीतिर्यथाभक्तेष्टसाधने ९ नकश्चिच्छिवभक्तेषुयस्तेनासीदनर्चितः वत्तेमा



शुश्रूषयेदिति अभक्तानामितिच्छेदः अभक्तानित्यर्थः संबंधसामान्येषष्ठी अकारच्छेदाभावेविकल्पानुपपत्तेः ३ शिवेति क्षीरवत्प्रस्रवणेन उज्ज्वलेत्यर्थः ४ सदेति घनासान्द्रा ५ ६ ७ मुखरीति शब्दायमानान् कुर्वतइत्यर्थः उत्तमः श्रेष्ठः ८ ९ १० ७

तस्येति सदनं गृहं दुःखातिशयं विना परीक्षा न भवतीति भावः ११ १२ प्रणम्येति मां किंकरं दासं विधेहीत्यर्थः १३ अथेति तापसरूपी तापसवद्यथा १४ १५ आवयोर्व धीति वयःसमाप्तिपर्यंतमित्यर्थः समवस्थाप्य तमिति शेषः १६ निर्धनस्येति मे इति शेषः १७ अंगानीति इह कार्ये जनानां कर्त्तव्यं कार्यं किमिति भावः साध्वी

तस्य भक्तिपरीक्षायां शंभुः कौतुकवानभूत् अग्निना सदनं दग्धं गावो नष्टाः स्थितिर्हता ११ सर्वं नष्टं क्षणेनैव दानम श्रोत्रिये यथा अथापरेद्युर्मध्याह्ने भस्मरुद्राक्षभूषितः ॥ अतिथिस्तापसः कश्चिदाययौ गिरिशो यथा १२ तमर्चयित्वा शिवभक्तमादराद्दानेन पाद्यस्य सचासनस्य ॥ प्रणम्य भक्त्या पदयोर्महामना जगाद दासोस्मि विधेहि किंकरं १३ अथ तापसरूपी तं भगवानाह शंकरः १४ शिवभक्तार्चक श्रीमन् भक्ताभीष्टप्रदायिनः भवतः कीर्तिमाकर्ण्य द्रष्टुं त्वामागतोस्म्यहम् १५ आवयोर्वधितद्देयं वस्त्रमन्नं च मे त्वया इत्युक्तः समवस्थाप्य भक्तो भार्यामथाब्रवीत् १६ निर्धनस्य निरन्नस्य तपस्वी गृहमागतः नास्ति छाया ममास्यात्तु किं विधेयं पतिव्रते १७ अंगानि मम वेपंते नेति वक्तुं तपस्विनं जनानामिह कर्त्तव्यं साध्वि बुद्धिर्विधीयताम् १८ अथाह भार्या भर्त्तारं न वाङ्मे सुचितातव यथा कथंचिद्दातव्यमीप्सितं स्यात्तपस्विनः १९ इति भार्यावचस्तस्मिन्नस्त्वेवमिति प्राह तापसः २० मय्यागते पतिष्ठति भक्तवर्ये किं सुंदरीं वीक्ष्य चिरं स्थितोसि किमस्ति ते वस्तु मदीप्सितं यद्दानं यथा सोहमितः प्रयास्ये २१ हंत पापं मया प्राप्तं दंपत्यालापविघ्नतः ॥ यावदस्येति समयः प्रयास्ये कार्यसिद्धये तिष्ठंति त्वादृशा भक्ताः कुंभकोणे महास्थले २२ ततस्तत्र गमिष्यामीत्युक्त्वा शंभुस्तिरोदधे बहिर्निर्गत्य भक्तोपि तमदृष्ट्वा स तापसम् २३ सभूतप्राणवानासीत्तमेवेशममन्यत कुंभकोणं प्रयामेति विश्रुता

तिसंबोधनम् १८ अथेति अर्थात्तपस्विनः ईप्सितं स्यात् तथा कथंचिद्दातव्यमित्यन्वयः १९ इतीति तस्मिन् शिवभक्तार्चके २० किमिति मदीप्सितं वस्तु ते

कासितिकिमिच्छसीत्यर्थः २१ २२ २३ सद्यइति सद्यःप्राणवान् मृतकल्पिकः
प्राणसहितः इत्यलीकं इत्यलीकमिति यावत् २४

२५ शंभुरिति विधयाप्रकारेण २६ इतीति वृत्त्याशयाजीवनाशया २७ २८ २९ कुंभकोणेइति पणीकृतं गृहेस्थापितं ३० ३१ इतिश्रीमानव
त्युपनामकनंदसिंहविरचितायांस्कंदेपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांचतुःपंचाशत्तमोऽध्यायः ५४ ॥ ❀ ॥ ॥पुण्येष्विति १ संपदा

तदेवकुंभकोणाख्यंप्राप्यस्थलमतंद्रितः अतिष्ठत्सन्निधौशंभोःसप्तरात्रमुपोषितः २५ शंभुःस्वप्नेथतंप्राहवसात्रैव
मदाज्ञया यथाकयाचिद्विधयापुष्णन्भक्तान्समागतान् २६ इत्युक्त्वांतर्हितेशंभौसचभक्तःसमुत्थितः प्रापवृत्त्या
शयावीथींनवृत्तिंकांचिदापसः २७ अथागाद्धृणिकावीथिंसवृतांद्यूतकारिभिः सद्यूतचैत्यमासाद्यधूर्त्तान्देवन
लीलया २८ जिगायपणबंधेनप्रापाथविपुलंधनं॥प्रददौचापिभक्तेभ्यःशिवस्यप्रीतयेऽन्वहम् २९ कुंभकोणेमहा
क्षेत्रेसंतिद्यूतपराःपुरा तेद्यूतेविजितास्तेनददुःसर्वंपणीकृतम् ३० अथान्नैर्वसनैर्भक्ष्यैस्तर्पयन्भक्तमंडलं मूर्खभ
क्तइतिख्यातःतस्यमुक्तिश्चिरादभूत् ३१ इतिश्रीस्कांदेपपुराणेभक्तविलासेचतुःपंचाशोध्यायः ५४ ॥ ❀ ॥ ॥
श्रीअगस्त्यउवाच पुण्येषुशंभुस्थानेषुस्थितान्श्रीकर्मकारिणः येरक्षंतिधनैःस्वस्यतेपिस्युर्मुक्तिभागिनः १ संपदा
करभूरस्तिचत्वाराममवासितं अंबरांबरधामश्रीशंकराख्यंमहत्पुरम् २ केशेकुटिलतायत्रकाठिन्यंकुचकुंभयोः
स्त्रीजनस्याधरेरागःकामोनित्यंशिवार्चने ३ यत्रालयेषुयत्स्तृणांवलभीनीडवासिनः पठंतिशारिकाःश्रौतकल्पसि
द्धांतनिर्णयम् ४ तत्रप्रतिवसंतंचसोमेनपरमेश्वरं यागेनप्रीणयन्शंभुंसोमयाजीतिविश्रुधे ५ ॥ ❀ ॥ ❀ ॥

करेति संपदांसंपत्तीनामाकरभूः आकरस्थानंनित्यलिंगत्वेनाभेदान्वयः अंबरंआकाशंअंबरंवसनंयस्यसअंबरांबरःशिवःतस्यधामस्थानं २
इदानींश्लेषेणपरिसंख्ययाचार्थिकयातस्यसाधुत्वमाह केशेइति नजनेइतिभावः रागःआरुण्यं कामोभिलाषः क्लेशौच ३ यत्रेति वलभिः

नत्रेति सोमेनयागेन ५ ६ यस्येति रजताचलशैशवं कैलासबाल्यं बालकैलासतुल्यादिति भावः ७ अननुष्ठितमिति नास्तीति त्रिभिःसंबध्यते ८ ९
१० ११ कमलेति कमलालयया लक्ष्म्याविरचितानि ऐश्वर्यादीनि नश्वराणि नाशशीलानि अवगत्यज्ञात्वा १२ निरस्तेति शिवमेवचिंतयन्नित्य

तत्रप्रतिवसंस्तंचसोमेनपरमेश्वरं यागेनप्रीणयन्शंभुंसोमयाजीतिववृधे ५ पूर्वंमारद्विति ख्यातःश्रीमान्द्विज कुलोत्तमः नित्यमन्नैर्जलैर्वस्त्रैःपुष्मन्श्रीकर्मकारिणः ६ यस्यशालाबहिर्भागेभोक्तभीष्टान्नराशयः विडंबयंत्य नुदिनंरजताचलशैशवम् ७ दुर्वृत्ताःसंतुसद्वृत्ताधृतरुद्राक्षभूतयः पूजितास्तेनशिववद्व्याचारविवर्जिताः ८ अननुष्ठितमेतेननास्तिश्रौतेषुकिंचन अनधीतंचयच्छास्त्रंतदर्थोवानिश्चितः ९ अपिमंत्रेषुबहुषुमंत्रंपं चाक्षरंवरं निश्चित्यपूजयन्नित्यंसशैवानभ्यपूजयत् १० सतुफाल्गुनयात्रायां दृष्ट्वात्यागेशवैभवं सभार्यस्तत्र संकल्प्यस्थातुंनिश्चयमादधे ११ कमलालयेविहितमज्जनोन्वहंकमलालयेश्वरपदार्पिताशयः कमलाल याविरचितानिनश्वराण्यवगत्यसुंदरसखोपयोगतिम् १२ निरस्तसर्वेंद्रियविभ्रमःशिवंहृदंतरेसंततमेवचिं तयन् दुरापमन्यैर्हरिपद्मजादिभिर्जगामधामेश्वरमीडितःसुरैः १३ इतिश्रीस्कांदेपपुराणेभक्तविलासेपंच पंचाशोऽध्यायः ५५॥ ॥ ॥श्रीअगस्त्यउ० श्रुतंकिलमहाभागेश्चरितंसोमयाजिनः तस्ययःसवनेशंभुमद्रा क्षीत्सुरवोदृशोः १ श्रीऋषयऊचुः वेदानामपिदेवानांब्रह्मादीनामगोचरः साक्षात्कृतःकथंतेनयज्वनापर मेश्वरः २ वदैतद्विस्तरादिद्धनसर्वज्ञोसिघटोद्भव त्वत्सूक्तामृतधाराभिःसंतापोनःप्रशाम्यतु ३॥ १ ॥

न्वयः १३ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपंचपंचाशत्तमोऽध्यायः ५५॥ ॥ ॥

४ ५ आदेशमेवाह कस्त्वमिति ६ सदिति पंचाक्षरीमनोः पंचाक्षरीमंत्रस्य ७ अनेनेति कोयोगः क उपायः योगः संनहनोपायेस्मरः ८ शु अ-५६

इतिपृष्टोमुनिवरः सादरंकुंभसंभवः रोमांचितः शिवंस्मृत्वाप्रवक्तुमुपचक्रमे ४ श्रीअगस्त्यउवाच सन्नि
धौत्यागराजस्यनिवासेकृतनिश्चयः यज्वनांप्रवरोमारोभार्यायैव्रतमादिशत् ५ कस्त्वंममस्तुतिः शंभोस्त
वकस्यंनिशम्यतां यः कोपिशिवभक्तश्चेद्द्विजयेनगृहागतम् ६ सभार्यामनुशास्यैवंसन्निधौनिवसन्सदा
गमयामाससमयंजपात्पंचाक्षरीमनोः ७ अनेनवपुषैवाहंकथंत्यागेश्वरंविभुं पश्येयंतत्रकोयोगइति
चिंतापरोभवत् ८ शुश्रावतत्रमहतासमवायेप्रजल्पतां यासुंदरस्यदयितातस्याभाग्यंमहत्तरम् ९ सु
हृन्नियोगाद्दौत्यायययौयस्यागृहंहरः किंदुर्वृत्तिरिवान्येषांतयैवसुकृतंकृतम् १० इत्याकर्ण्येसमारोपि
तद्दास्येकृतधीरभूत् प्राहसंवत्सरेतीतेकृताशीर्वचनंद्विजम् ११ यज्वनांप्रवरोसित्वंगणिकाहंतुविश्रुता
फलंतेकिमनुद्दिष्टंदत्तपुष्पाक्षतस्यमे १२ ददास्यन्नंचवस्त्रंचभक्तानामितितेयशः निःशंकमुच्यतांब्रह्म
न्मत्तोयत्तेस्तिकांक्षितम् १३ अथतामब्रवीन्मारस्त्यागेशसुहृदः प्रियां श्रीमारउवाच आकर्णयमहाभा
गेदययातवमेखिलम् १४ दृष्टंभाग्यमिहान्यूनंत्वय्यस्म्यर्थीतथाप्यहं इदंचतववाञ्छांत्रेपुरुषार्थोममोत्तमः
१५ श्रोतव्यमेकदिवसेप्रियेणतवमद्वचः एतावताकृतार्थोस्मिदयामयिविधीयताम् १६ सातथेतितमाभा
ष्यप्रेषयामासमंदिरं परमारहसिप्राप्तमथसुंदरमब्रवीत् १७ हरसाक्षात्करिष्यामीत्यमोदतहृदिद्विजः आकर्ण्य

आवेति समवायेसमूहे ९ सुहृदिति अन्येषांदुर्वृत्तिरिव अन्येषांवेश्येव १० इतीति तस्यागणिकायादास्ये ११ १२ १३ अथेति त्यागेशसुहृ

तथेति प्राग्वंशःशालाविशेषःमाधवेवैशाखे १९ २० विधायेति अपचितिं पूजां २१ २२ शरणमिति परां अतिरिक्तांत्यागेशस्यतनुं तनुरूपंत्वां

तथास्त्वितिसतामाहमारस्यसदनंययौ प्राग्वंशकरणोद्युक्तश्चिकीर्षुर्माधवेमखम् १९ दृष्ट्वागृहागतंयज्वांसुंद
रंप्रीतिमानभूत् २० विधायापचितियुक्तांप्रणिपत्यकृतांजलिः यज्वनांप्रवरःप्राहत्यागेश्वरसुहृत्तमम् २१ अ
द्यप्रसन्नस्त्यागेशःप्राप्तंयज्ञफलंमया सुहृद्योदेवदेवस्ययदस्मत्सदनंगतः २२ शरणंत्वांप्रपन्नोस्मित्यागेशस्य
तनुंपरां सुप्रभातंदिनंमेद्ययुष्मत्प्रसादाच्चदर्शनात् २३ तीर्णोस्मियुष्मद्दययादुस्तरंशोकसागरं महत्संदर्शनेल
ब्धेनहिशोकःशरीरिणाम् २४ यज्वानमेनंविहितोपचारमाप्तःसखाप्राहपिनाकपाणेः महात्मनांपूज्यतमोसि
तत्किंश्राव्यंमयातेवचनंयथोक्तम् २५ अथमारोपितंप्राहभक्त्यापादेप्रणम्यतं त्यागेशंमूर्त्तिमंतंमेदर्शयास्मद्गृ
हेसकृत् २६ निषेव्यपादौसख्युस्तेगमिष्यामिकृतार्थतां तथास्त्वितिसगत्वेशंयदित्वमारयेज्वनः २७ मत्कृते
गच्छसिगृहान्प्रियाप्रीताभविष्यति रहस्यस्त्वंतथाकृत्वेत्यब्रवीद्भक्तवत्सलम् २८ अथाहसुंदरंशंभुःप्रियाद्ग
षोसुदेस्तुते येनकेनापिरूपेणयद्दिमामागतपुरः २९ ज्ञात्वासप्रणमेद्यज्वाकेवल्यंतस्यसेत्स्यति इत्याकर्ण्यस
यज्वानंपुनःप्राप्याहसुंदरः ३० सावधानोभवानस्तुध्रुवमेष्यतिशंकरः इत्युक्त्वासुंदरंप्रायाद्यत्रसागणिकाप्रि
या ३१ शयनेसर्वमाचष्टसाचप्रीतातदाभवत् अथसोमासवामोदंदधानोमासिमाधवे ३२ पौर्णमास्यामवभृ
थंचिकीर्षुर्यज्ञउत्तमे दिदृक्षुःशंकरंसाक्षादेकादश्यांसहस्त्रिया ३३ प्राविशद्यज्ञसदनमृत्विजांसहितोगणैः विधि

२३ २४ २५ २६ २७ २८ २९ ३० ३१ शयनइतिसोमएव आसवस्तस्यामोदंपरिमलं ३२ पौ

र्णमास्यामितिविविधवकर्त्कृतिमम

पौर्णमास्यामितिकमलाखेत्रीश्वाहृष्टाः ३३ ३४

कृत इति उपसमीपे सीदंतीसुपसदः सदसाइत्यर्थः ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ कृतेति मातंगेइति गौर्य्याःसंबोधनं मधुमयं



कृतश्चसोमराजोभूद्भूमौपिविविधिवत्कृतः चेलुश्चोपसदःसोमंस्माभिषुएवंतिऋत्विजः ३५ चमसेषुयथादेवम
गृह्णन्कलशाद्रसं सामगैरप्यथबहिःपवमानस्तुतोभवत् ३६ गृह्णंतिस्माश्विनंपात्रायंब्रह्मादक्षिणतःकृतः
योजितःसवनीयश्चपशुर्यूपेसलक्षणः ३७ आलंभश्चवपाच्छिद्रं गृहीत्वाग्नौचसंस्कृता उपश्रतामंत्रपूते
राज्यैरासादिताभवत् ३८ स्रुवेहिरण्यसंभिन्नागृहीताध्वर्युणावपा यदातदामहादेवमस्मार्षीद्विजसत्तमः
३९ अथाविरासीद्भगवानंबिकासहितोहरः सर्वस्वरूपीसर्वेशश्चांडालरूपमास्थितः ४० मृतंगोवत्समादा
यस्कंधेरक्तांतलोचनः गतिंमदप्रस्खलितांदधानःकंपयन्शिरः ४१ दृष्ट्वेमयिद्विजाःसर्वेपलायंतामितस्ततः
कथंविशसनंकुर्युरजस्यद्विजसत्तमाः ४२ कृताजमांसभक्षाणामस्त्वासचनिषेवणं मातंगेतूर्णमागच्छद्विजे
भ्योमधुदीयताम् ४३ कुंभींमांसवसापूर्णांहस्तेकुरुममाचिरात् किंचित्किंचिद्विलंबेनायांतीमातंगकन्यका
म् ४४ मदघूर्णितलोलाक्षींमत्तमातंगगामिनीं जननींजगतांगौरीमाहूयद्यौवनोज्ज्वलाम् ४५ साचीकृतमुः
खांमौलौमधुकुंभींचबिभ्रतीं उन्नतस्तनभारार्तिभज्यन्मध्यवलित्रयाम् ४६ अरालालकसंछन्नांदधानांश्रु
तिमेकिकां एककर्णावसक्तेनदंतपत्रेणमंडिताम् ४७ आलंबमानोदयितांचालयंतीशिशुद्वयं कुमारःसहभा
र्येसाविति जल्पन्पदेपदे ४८ कालायसःश्रीचांडालःशालाम्याशमुपागमत् रेनीचदूरंगच्छेतिक्षिपंतःक्षुद्रशर्क

४३ ४४ ४५ साचीति उन्नतस्तनभारेण आर्तिर्यस्याइति विग्रहः ४६ अरालेति अरालाःकुटिलायेऽलकाश्चूर्णकुंतलाः तसंछन्नांएकां

श्रुतिंश्रोत्रंबिभ्रतीं ४७ ४८ कालायस इति कालः आयसः अयोमयोदंडोयस्येत्यर्थः सुदुःशर्करा:खर्परांशसदृशाइत्यर्थः ४९ ५० ५१ ५२ ५३ ५४

ब्राह्मणास्तत्रचांडालंनविदुःपरमेश्वरं द्रव्यंदेशश्चकालश्चवन्हिर्यज्ञश्चदक्षिणाः ५० फलंचकर्मणामाहुर्यन्मयंतेविदुर्हरं त्यक्तयज्ञायुधाःकेचिद्द्विजःस्पर्शशंकिनः ५१ स्नानायमग्युस्तीर्थंतस्यसन्निहिताश्चये अपश्यन्नर्कमपरेकेचिद्दुद्रुवुरन्यतः ५२ मधुमत्तमिमंश्लेकरोसद्यमहीपतिः निःशंकंयन्मदांधोसायज्ञशालामदूषयत् ५३ चांडालदुष्कृताशालामारात्शुकुरुनिष्कृतिं इतिदूरेगताःकेचिद्यजमानंतमूचिरे ५४ जात्यंधतामुपगतेषुमहीसुरेषुतत्तत्कदूक्तिशतमेवमुदीरयत्सु ब्रह्मादिदुर्लभममुष्यपदंप्रदित्सुःशालामगाहततयासहचंद्रचूडः ५५ अव्यक्तवचसामाद्यपुरुषंकृष्णपिंगलं चंडालवेषप्रच्छन्नंप्रविशंतंमखालयम् ५६ अनुग्रहायमारस्यसभार्यातनयंविभुं प्रियायैदर्शयामाससौधाग्रेसुंदरःस्थितः ५७ सुंदरोक्तिमनुस्मृत्यस्ययज्वनांप्रवरस्तदा अबोधिपत्न्याचसमंतमेवपरमेश्वरम् ५८ विद्रुतेषुसमस्तेषुद्विजेषुब्रह्मवादिषु प्रत्युदस्थान्महाबुद्धिर्भगवंतंसहाग्निभिः ५९ अर्घ्यपात्रकराभार्यातमनुप्रययौपतिं प्रसीदपाहिदेवेतिवदन्नघ्योःपपातसः ६० दत्तार्घ्यमासनोदाससफलीकर्तुमुद्यतः स्कंधाद्भगवतोवस्त्रंमृतंस्त्वांसेन्यवेशयत् ६१ सापिभाग्यवतीपत्नीमातंग्याशिरसाधृतां मधुकुंभीमुपादायमौलौतद्भूरणंव्यधात् ६२ जयशंकरविश्वात्मन्जयजन्मभवादन इत्युक्त्वा

जात्यंधतामिति अमुष्य अमुष्मैइत्यर्थः तया भार्यया ५५ ५६ ५७ ५८ विद्रुतेष्विति प्रत्युदस्थात्प्रत्युत्थानंचकार ५९ ६० दत्तेति दासंसफलीकर्तुमुद्यतः उद्युक्तःस्वभक्तप्रत्ययात्तृणप्रकृतिकउयच्छद्योयंभगवतःशिवस्य ६१ ६२ जयेतिजन्मभवावस्तीतिजन्मभवादनःतत्संबोधनम्

६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ मारइति शेषेणहविषादेवताइयाज इष्टवान् ७२ ७३ ७४ इतिश्रीमानवसुंधनामकनरसिंहविरचि



चंडालसुहृदंमारमयाजंमेनिरेद्विजाः यदाबाष्पांभसाच्छन्नातदृष्टिर्हर्षजन्मना ६४ विमृज्यबाष्पमद्राक्षीन्मतंवरं
महावृषं कैलाससदृशाकारंककुद्मंतंविषाणिनम् ६५ घंटाचामरमंजीररत्नास्तरणमंडितं देवीमरकतश्या
मामातंगीसास्मदृश्यते ६६ तावेववालकावास्तांगजाननषडाननौ सविश्वमायाप्रच्छन्नःपरःशंभुरदृश्यत ६७
ववर्षुरमराःपुष्पाण्यस्तुवन्निगमाःपुरः जगुर्गंधर्वपतयोनृत्तमप्सरसोदधुः ६८ ब्रह्मविष्णूसिवेवातेजयेत्यु-
क्त्वाथपार्श्वयोः पस्पष्टकोटिगणपाविभोर्दृष्टशिरेभितः ६९ भीतभीताबभूवुश्चप्रणताब्राह्मणाद्रुताः तुष्टुवुश्चा
मराःसर्वेसनकाद्यामहर्षयः ७० चराचरंजगद्यत्रदृष्टमीश्वरसन्निधौ नमस्कृत्वाथदेवायज्योतिषेसर्वसाक्षि
णे ७१ मारोदत्तहविस्साक्षाच्छेषेणेयाजदेवताः यज्वनेथसभार्यायकृतावभृथकर्मणे ७२ कैवल्यनाथःकै
वल्यंदत्वाशंभुस्तिरोदधे येपठंतीममध्यायंशृण्वंतिभुविमानवाः ७३ तेषांशंभुप्रसादेनस्यात्कैलासपदस्थितिः ७४
इतिश्रीस्कांदोपपुराणेषट्पंचाशत्तमोऽध्यायः ५६॥ ॥छ॥ श्रीअगस्त्यउवाच नियमेनान्वहंशंभुंपूर्वंभुक्तेर्निषे
वते कर्मबंधोनतस्यास्तिसत्यमेवब्रवीमिते १ अत्रेतिहासंप्रथितंप्रवदंतिपुराविदः श्रीमतःशाकनाथस्यच
रितंयत्रवार्यते २ अस्तिशंखपुरंनामनगरंशंकरप्रियं चातुर्वर्ण्यसमाकीर्णंचत्वराराममशोभितम् ३ विचारदक्ष
नामाभूत्तत्ररुद्रान्वयोद्भवः अष्टादशपुराणानिश्रुतवान्सद्विजाननात् ४ तेनतस्यशिवेभक्तिरचलासमजायत प्रत्यो

तायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांषट्पंचाशत्तमोऽध्यायः ५६॥छ॥ ॥नियमेनेति भुक्तेःपूर्वंभोजनात्पूर्वं १ २ ३ ४ तेनेति

६ ७ ८ तदिति शाक्यान् जैनान् नाथति उपतापयतीति सः नाथृ याचोपतापैश्वर्याशीःषु इति धातुपाठे ९ १० इतीति आंतरं मानसं ११ १२

शिवएवपरंतत्वंतस्मादन्यंनदैवतं कर्ताकर्मफलंदाताप्यस्तीतीहनसंशयः ६ स्वर्गादिफलमिज्यादिकर्म
कर्तातुकामवान् तस्यानुरूपफलदः परमात्मामहेश्वरः ७ तमेवाराध्यदुस्तारंतरिष्येव्यसनार्णवं इति
निश्चित्यसुमति र्जिनशास्त्रमखंडयत् ८ तच्छास्त्रमर्मविज्ञाना च्छाक्यनाथमिमंविदुः कथमाराध्यतां
शंभुर्मयेतिविचचारसः ९ शक्यतेसांगपूजातुशंभोःकर्तुंनकेनचित् येनकेनापिसंतुष्येद्यदिभक्तिःस्थिरा
विभो १० इतिनिश्चित्यनियममकरोत्किंचिदांतरं अनिषेव्यहरंक्वापिनभोक्तव्यंदिनेमया ११ उपहारश्च
यःकश्चिदर्पितव्योभवेद्विभोः संकल्पयित्वेत्यारभ्यततस्नातोनदीजले १२ रुद्राक्षमालांभस्मापिबिभ्राणःप्र
जपन्मनुम् पंचाक्षरींदृढांभक्तिमुद्वहन्शिववद्गुरौ १३ अग्रेशंखपुरीशस्यस्थित्वादूरेप्रणम्यतं निर्दोषमिदमे
वास्तित्वेकंपाषाणमुत्तमम् १४ ७ शिवायनमइत्युक्त्वाचिक्षेपाभिमुखंविभोः एवंदिनेदिनेकुर्वन्नसेवतम
हेश्वरम् १५ अभूत्किणशतंमौलौचंद्रमौलेःशिलाहतेः परंदधारतच्चिन्हं चंद्ररेखामिवेश्वरः १६ दिनेदिनेप्रह
रतःशिलयोपदयाहरं महानत्यगमत्कालस्तस्यप्रीतोथशंकरः १७ तस्यभक्तिपरीक्षार्थंहृदिकौतुकमादधे
अथान्येद्युरभूद्वर्षःक्रूरानिलदुरासदः १८ विद्युत्स्तनितनिर्घातपातघोरतरोमहान् आरभ्यार्कोदयमभ
वद्दूरात्रंचदुर्दिनम् १९ अकृत्वातद्दिनेशंभोःसेवांभोक्तुंसमुद्यतः परिवेषितमन्नंचसत्यक्त्वाभूत्सहसोत्थितः २०

१३ १४ १५ अभूदिति किणशतंचिन्हशतं १६ दिनेइति शिलया उपद्या शिलारूपेणोत्कोचेनराजादिदेयं द्रव्यमुपदासएवोत्कोचः १७ १८ १९ २०

२१ २२ २३ २४ इतेति तेनसहेत्यर्थः २५ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायां सप्तपंचाशत्तमोऽध्यायः ५७॥ ॥ ॥शिवोपासनाया आभ्यन्तरत्वबाह्यत्वभेदेनद्वैविध्यंसूचयंस्तदनुष्ठातॄणां कैवल्यमाह मनसेति यःमनसा शंभुंपूजयन् तदुक्तान् अन्ततः बहिःपूजयन् यः दृढभक्तिर्वर्तेत इत्यन्वयः१ कथयामीति वैराग्येनिष्ठाभक्तिस्तया २३ नेतिकर्तव्यनिर्णयमिस



धिगस्तुमांव्रतभ्रष्टमकृतेशांघ्रिदर्शनं इत्थंवर्षेपिमहतिविनिर्गत्यमहेश्वरम् २१ नत्वाश्मोपायनंदत्वामनसैव मचिंतयत् हरसेवामकृत्वाद्यभोक्तुंयदहमुद्यतः २२ तस्यापनिष्कृतिर्दृष्टाप्राणत्यागोनचान्यतः इत्यालयमुख स्तंभेशिरोघातयितुंयदा २३ तत्रवेगेनदुद्रावतदाग्रेभून्महेश्वरः निरुध्यसाहसादुक्तंतदुक्तिमुपलालयन् ॥ २४ दत्तसायुज्यभाग्येनशंभुस्तेनतिरोदधे २५ इतिश्रीस्कांदोपपुराणेभक्तविलासेसप्तपंचाशोऽध्यायः ५७ ॥ श्रीअगस्त्यउवाच मनसापूजयन्शंभुंतदुक्तान्बहिरन्ततः वर्तेतेदृढभक्तिर्यःसशोकंदुस्तरंत्यजेत् १ कथयामि कथामत्रब्राह्मणस्यमहात्मनः वैराग्यनिष्ठयायस्यप्रसन्नःपार्वतीपतिः २ वर्द्धमानपुरंनामभूषणंचोलनीवृतां पुरमस्तिमहत्तत्रकश्चिदासीद्विजोत्तमः ३ नतस्याविदितंकिंचि द्वेदशास्त्रादिषुक्वचित् सपर्यालोच्यसकलंशा स्त्रंकर्तव्यनिर्णयम् ४ कृतवान्काममुक्तस्यमनसःशांकरेपदे निश्चलास्थितिरीशार्चासेवान्यत्तुविडंबनम् ५ द्रव्यपूजातुकर्तव्याशिवभक्तेषुधीमता नशिलाक्षालनादेवप्रीतोभवतिशंकरः ६ ॥ ॥ ॥

स्योत्तरेणान्वयः ४ कृतवानिति कामेभ्यो विषयाभिलाषेभ्योमुक्तस्य यानिश्चला आस्थितिः आस्थासैवईशार्चा अन्यत् अव्यवस्थेत्यर्थःसाविडं बनं ५ द्रव्येति शिवभक्तेषु विषये द्रव्यपूजाद्रव्यैः विभवैःपूजा एवंच यथाविभवं शिवभक्तार्चनादेव शिवप्रीतिर्नतुशिवमात्रसेवयेतिभावः६

इतीति मानसीमीशार्चां उपांशुस्याच्छतगुणस्साहस्रोमानसस्स्मृतइतिनिश्चित्येतिभावः शतरुद्रीयंरुद्राध्यायम् अर्थिनांप्रियः प्रार्थितप्रदातृत्वादितिभा
वः ७ आतिथ्यमिति अतिथिभावमागतेषुजनेषुप्रत्यक्षं उत्तमस्यापिवर्णस्य नीचोऽपिगृहमागतः पूजनीयोयथायोग्यं सर्वदेवमयोहिसइतिस्मरणे
नातिथौशिवस्यस्थितत्वात्तत्रप्रत्यक्षं च्योतत् स्रवत् घृतंयेभ्यस्तानितैः ८ ९ १० लिंगेमनोमयाः पुष्पकोटयइतिभावः मनोमयलिंगेतासामेवसंभ

इतिनिश्चित्यमतिमान्नीशार्चांमानसींव्यधात् अन्वहंशतरुद्रीयंप्रजपन्नर्थिनांप्रियः ७ आतिथ्यमागतेष्वीशंप्र
त्यक्षंसमपूजयत् निस्यंच्योतद्घृतैरन्नैःसोपदंशैःसषड्रसैः ८ भोजयामासकुसुमैश्चंदनैश्चनवांबरैः पितेवशि
वभक्तानांपोषणेभाग्यवानभूत् ९ नाध्वरेषुतथाप्रीतोब्रह्मादीनांमहेश्वरः पुष्पतोस्ययथाभक्तानन्नदानेनसं
ततम् १० लिंगेमनोमयेतेनचार्चिताःपुष्पकोटयः निर्माल्यशोधनेतासामशक्ताःगणनायकाः ११ कैलासशिख
रेशंभुंमबासहितमब्रुवन् वर्धमानपुरस्थेनत्वत्सादाब्जेसमर्चितान् १२ पुष्पभारान्वयंवोढुमशक्तास्मचिरादपि
वांछापूरयतस्येतिश्रुत्वातद्गिरिशोहसत् १३ हासकारणमाचक्ष्वेसंबयाभ्यर्थितःशिवः अवदद्गिरिजांदेवींत
द्भक्तिमुपलालयन् १४ अनेनमानसीपूजाकृतामयिमयाफलं तस्यानशक्यतेदातुंनकिंचित्सोपिवांछति १५
तद्दर्शनात्तहर्षोयंकर्तुंप्रीतिंमहेश्वरः आरूढवृषभोदेव्यासहतस्यांतिकंययौ १६ तस्यचित्तपरीक्षायैप्रकीर्णो
रत्नराशयः तिलोत्तमाद्यप्सरसोप्यदृश्यंतसमंततः १७ प्रेतावाहनपाषाणास्पृश्यान्मेनेमणीन्सतान् विलंघ्यप्रेतवत्ताश्च

वात् तासांपुष्पकोटीनां ११ १२ पुष्पेति तद्वाक्यमितिशेषः १३ हासेति तद्भक्तिंब्राह्मणभक्तिं उपलालयन् प्रशंसन् १४ अनेनेति तस्याः पूजायाःसाह
स्रोमानसस्स्मृतइतिसामान्यतोमानसकर्मणोभ्यर्हितत्वोक्तेरितिभावः १५ तदिति तस्यभक्तस्यदर्शने आत्तःप्राप्तोहर्षोयेनसः प्रीतिमित्यत्रपर

तस्तस्थेतिसंबध्यते आरूढवृषभइतितृतीयाबहुव्रीहिः १६ १७ प्रेतेति प्रेतावाहनं वस्त्रादिपाषाणाश्चतद्रूढस्पृश्यान् १८ शार्दूलमिति येन कारणेन १९ २० इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांअष्टपंचाशत्तमोऽध्यायः



शार्दूलमिवसंदष्टसंकामंयेनरुरोधसः नाम्नानिरूढशार्दूलःसस्वयंशंभुनाकृतः १९ दुर्लभंदर्शनंतस्यैदत्वागौर्यामहेश्वरः तेनसायुज्यभाजापिसार्धमंतरधीयत २० इतिश्रीस्कांदोपपुराणेभक्तविलासेअष्टपंचाशोऽध्यायः ५८॥॥ श्रीअगस्त्यउवाच दुर्लभाशांकरीभक्तिःशिवभक्ताःसुदुर्लभाः दुष्करंभुविजंतूनांतन्मनोरथपूरणम् १ किंजन्मनातेनजनस्ययेननभक्तवांछापरिपूरितास्यात् शरीरमर्थास्तनयंस्त्रियंवासमर्प्यपूज्यःशिवभक्तएव २ गृहानभ्यागतेभक्तेगृहिणांकिन्नुदुस्त्यजं यदिस्याद्भक्तपूजायामनुकूलाकुटुंबिनी ३ शोकसंतरणेजंतोरुपायोन्योनविद्यते विनैकेनमहादेवभक्तेष्टविधिनाभुवि ४ साहसंवाप्यकार्यंवाकृत्वाभक्तेष्टदायिनां नाधयोव्याधयोजन्ममृत्युर्वादेहिनांभवेत् ५ असारेप्यत्रसंसारेसारभूतमिदंनृणां सर्वदाशिवभक्तानांदीयतेद्यर्थितंयदि ६ वाचादेहीतियोदेहीयाचितोपिमहात्मना नैत्याहवसुधात्रीयंतेनभारवतीभवेत् ७ उपकुर्वंतिवृक्षाश्चपत्रैःपुष्पैःफलैरपि उपकारोस्यनक्वापिवृथाजातःसनेतिवाक् ८ तस्मात्सर्वप्रयत्नेनशंभोश्चरणसेविनांसंपादितंस्याद्येनेष्टंतस्यजन्मोत्तमंविदुः ९ दृष्टान्नदानेनसमर्चनीयाःसर्वात्मनाचान्नहमीशभक्ताः प्रियेषुशं

॥५८॥५९॥ ॥सारासंकारीत्याशिवभक्तमनोरथपूरणमेवसर्वोत्कृष्टमित्याह दुर्लभेति १ किमिति शिवभक्तःपूज्यएवेत्यन्वयः २ ३ ४ साहसमिति आधयोमनोव्यथाः मृत्युःअकालिकइतिभावः ५ असारेइति यदीत्यस्ययदित्यर्थः ६ वाचेतियःदेहीनरःमहात्मनाशिवभक्तेनयाचितोपि च

स्तुनेत्याह तेन धात्रीभूर्भारवतीत्यन्वयः ७ उपकुर्वंतीति द्रुतिसनावाक् प्राचीनवाक् वेदवागितियावत् ८ ९ १० प्रदोषेति चित्रापभरणीचैत्री तिथेर्नाम ११ १२ त्रैलोक्यस्येति विश्वंभुनक्ति अवति भुंक्ते प्रलयकाले उपसंहरति वा १३ १४ १५ १६ आवास इति स्थानमित्यर्थः आम्नायो वे

प्रदोषसोमवारार्द्राकृष्णाष्टम्ययनादयः चित्रापभरणीमासशिवरात्र्युपदर्शकाः ११ शिवप्रियकरा ह्येते दिवसाः स
द्भिरीरिताः अपि वा भोजयित्वैकं भक्तं माहेश्वरं नरः १२ त्रैलोक्यस्यान्नदानेन यत्तत्फलमवाप्नुयात् किमत्र बहु
नोक्तेन शिवः प्रीणाति विश्वभुक् १३ किं प्रसन्ने पशुपतौ दुर्लभं प्राणिनो भवेत् परमापद्गताश्चापि महेश्वरसमर्चना
त् १४ न संति कति वा लोके तीर्णसंसारसिंधवः अत्राप्युदाहरंतीममितिहासं पुरातनम् १५ परंज्योतिरूपाख्यानं
प्रसिद्धं भुवनत्रये अरुणारण्यनामास्ति पुरं धाम पिनाकिनः १६ आवासः शिवभक्तानामाम्नायागमवेदिनां १७
नमः शिवायेति वदंति यत्र बालाश्च कन्याः शुकसारिकाश्च क्षुतेषु च प्रस्खलितेषु दृष्ट्वा प्रदक्ष्यमालापविधौ मि
थश्च १८ नाभस्मरुद्राक्षधरोस्ति कश्चिद्द्विजः पंचाक्षरमंत्रराजः न वाश्रुतेशानकथोपदानो यत्रापि वा संक
रजातिजातः १९ क्रीडासु बाला अपि यत्र भूत्वा जटाधरा भस्मकृतांगरागाः शार्दूलचर्मांबरसंवृतांगाः शिवोहमस्मी
ति मिथो वदंति २० जनानां वसतां यत्र चित्तवृत्तिरकल्मषा पतिव्रतेव भर्त्तारमाश्लिष्यति महेश्वरम् २१ तत्राभूच्चोल
देशेंद्रसचिवान्वयसंभवः पारदृश्वागमांभोधेः परंज्योतिरिति श्रुतः २२ दुर्जयान्योविनिर्जित्य चोलराजस्य विद्विषः द्वात्रिंशद्

दः आगमश्च आगतं शिववक्त्रात्त्वगतं तु गिरिजामुखे मतं सर्वमुनीनां च तस्मादागममुच्यते इत्युक्तलक्षणः १७ क्षुतेष्विति क्षुतं क्षवः १८ नेति
अश्रुतं ईशानकथापदानं ईशानकथा कर्मवृत्तं येन तादृशो नास्तीत्यर्थः १९ २० २१ तत्रेति आगमांभोधेः पारदृश्वा पारं दृष्टवान् पारंगत इत्य

भक्त इति जगत्त्रये विख्यातमित्यन्वयः २४ २५ सइति यतः कारणात् भवति त्वयि शिवप्रसादः अभ्यधिकः अतः मंदिरे नियोज्यतां नियोज्य त्वं अर्हसि इत्यन्वयः २६ सइति सः दभ्रभक्तः तत्र मंदिरे न्यवसत् निवासं चकार साध्वी पतिव्रता नायिका तस्येति शेषः पार्श्वे वसति स्मे त्यर्थः तया तद्द्वारा ईप्सितं इष्टं अन्नं ददातीति तादृशः सन् भक्तानां सहस्रं भोजयित्वा समयं गमयामासेत्यग्रेतनेनान्वयः २७ समयमिति ज

भक्तेमाहेश्वरेयस्यप्रभुक्तवतिनस्त्वयं अश्नीयामितिविख्यातं व्रतं नित्यं जगत्त्रये २४ श्रीमद्दभ्रसभानाथनामस्मृ तिमतस्सदा ॥ यस्याखिलैः कृतं नाम दभ्रभक्त इति श्रिये २५ स चोलराजेन शिवप्रसादो यतो भवत्यभ्यधिकस्ततस्त्वं नियोज्यतामर्हसि मंदिरे तः सुखं निषीदेति नियोजितोभूत् २६ स तत्र न्यवसत्साध्वी पार्श्वे वसति नायिका तया सहस्रं भक्तानां भोजयित्वेप्सितान्नदः २७ समयं गमयामास जन्मसाफल्यमार्जयन् तस्य तस्यामभूत्पुत्रो धरित्र्यामिव शेवधिः २८ चंद्रमा इव सर्वेषां नयनानंदवर्द्धनः पैतृकात्स ऋणान्मुक्तो ब्राह्मणान्प्रीणयन्धनैः २९ सहितो बंधुभिः सर्वैर्विहिते जातकर्मणि नाम श्रीपतिरित्यस्य चान्वर्थं निजसंपदा ३० अन्नमाप्राशयत्त्वार्द्धवत्सरस्य प्रियासजं अर्द्धांकुरितदंतस्य दृष्ट्वास्य मुमुदे मुखम् ३१ अथ संवर्धितो बालो बालकल्पतरुर्यथा कृतचौलोक्षराभ्यासे नियुक्तो मंत्रिभूषितः ३२ शिक्षाशालां शिशुः प्राप्य लिपिनिर्णयवानभूत् ३३ इति श्रीस्कांदोपपु

न्मनः साफल्यं आर्जयन् संपादयन् धरित्र्यां भूमौ शेवधिरिव निधिरिव निधिर्ना शेवधिरित्यमरः २८ चंद्रमा इति पैतृकात् पितृसंबंधिनः ऋणात् मुक्तः सन् प्रजया पशुभ्य इति श्रुतेः धनैः ब्राह्मणान् प्रीणयन् न्यवसदिति पूर्वेणान्वयः २९ सहित इति अन्वर्थं अनुगतार्थं लक्ष्मीपतित्वेन अनुरूपार्थेन ३० अन्नमिति अर्द्धवत्सरे षष्ठे मासि षष्ठेन्नप्राशनमिति स्मरणात् प्रियार्भकं प्रीतिपात्रं पुत्रं अन्नं आप्राशयत् ईषत्प्राश

यामास सकलमंत्रेणेति सूत्रादिति भावः मुमुदे जहर्ष ३१ अथेति बालकल्प तस्य यथा नूतन कल्पवृक्ष इव ३२ शिक्षेति लिपिनिर्णयवान् लिपेः लिखि
ताक्षरविन्यासस्य निर्णयवान् लिखिताक्षरविन्यासे लिपिर्लिबिरस्त्रियामित्यमरः ३३ इति श्रीमानवसुपनामकनृसिंहविरचितायां स्कंदोपपुराणव्या
ख्यायां भक्तविलासप्रकाशिकायां एकोनषष्ठितमोऽध्यायः ५९ ॥ ॥ संप्रति तस्यैव दभ्रभक्तस्य परमशिवप्रीतिपात्रतां दर्शयितुं तदुपोद्घातभूतं पार्व
तीशिवसंवादं आदौ निबध्नाति अथेति पार्वती कर्त्री अंके निजोत्संगे शयानं परमेश्वरं कौतुकान्तरे क्रीडामध्ये प्रपच्छेत्यन्वयः १ २ इतीति हैमवत्या पार्व

श्रीअगस्त्य उवाच अथ कैलासशिखरे पार्वती परमेश्वरं अंके शयानं पप्रच्छ कदाचित्कौतुकांतरे १ नंदिप्रभृतयः सं
तिभक्तास्तव सहस्रशः तेषु कुत्र तव प्रीतिरधिका सा समुच्यताम् २ इति हैमवतीपृष्टः पशूनां पतिरंबिकां स्मयमानो
जगादेदं शनैर्लोलितसत्कचः ३ न मे क्वापि तथा प्रीतिर्दभ्रभक्ते यथाधिका न तदुक्तेः फलं दातुं प्रभुरस्मि शिवे सम
म् ४ न मय्यपि तथा स्यात्किमित्युक्तः शिवया हरः तदुक्तेरग्रतः कांते भक्तिरालोक्यतामियम् ५ इत्युत्थितो बालश
शांकमौलिरापादकेशं धृतभस्मलेपः समुन्नतोन्नद्धजटाकलापः सदभ्रभक्तं प्रतिसंप्रतस्थे ६ अथ चित्रापभरणीभ
वितेति समुत्सुकः माहेश्वरेभ्यः सितान्नादि पचेयं प्रेयसीं प्रियाम् ७ भोक्तारः कतिकल्याके विशेषः क्रियतामिति पृच्छतीं दभ्रभक्तः स्वां भार्यां भक्तप्रियोऽवदत् ८

स्यादृष्टः पशूनां पतिः शनैः लोलितसत्कचः चालितमस्तक इति भावः इदं वक्ष्यमाणं वचनं जगादेत्यर्थः ३ ४ पार्वती शंकते नेति मय्यपि देहार्द्धधारिण्यां त्व
देकभक्तायामित्यपिशब्दार्थः तथा यथा दभ्रभक्ते इत्यर्थः न स्यात्किं न भवेत्किं इति शिवया उक्तः कथितो हरः तदुक्तेः दभ्रभक्तभक्तेः अग्रतः पुरतः तेन
संबंधिनी भक्तिः का कीदृशी इयं दभ्रभक्तिः आलोक्यतां त्वयेति शेषः ५ इतीति उक्ते इति शेषः समुन्नतः उन्नत ऊर्ध्वबद्धः जटाकलापः कपर्दो येन स
शिवः ६ अथेति चित्रापभरणीनक्षत्रयुक्ता चैत्री पौर्णिमेत्यर्थः भविता भविष्यति तस्याश्च बहुपुण्यप्रदत्वं स्मृतिषु स्पष्टं माहेश्वराणां शिवभक्तानां दे
पितं अन्नादि आदिशब्दात् शाकसूपादिसंग्रहः पचपाकं कुरु ७ ८

अधीति अयं पुरोवर्ती अन्हामधीश्वरः सूर्यः नभसो गगनस्य मध्यमध्यास्ते गगनमध्ये तिष्ठतीत्यर्थः अधिशीङ्स्थासां कर्मेति कर्मत्वं अतिथिसमागमकालोयमिति भावः ९ १० आरभ्यतामिति तं अतिथिं कश्चित् यदृच्छया आगतः प्राप्तः यदि समागतः तर्हि तं संवासयेत्यन्वयः ११ १२ ललाटमि



अध्यास्त नभसो मध्यमन्हामयमधीश्वरः न कोपि शिवभक्तस्ते गृहानतिथिरागतः ९ चित्रापभरणीह्यद्य तिथिः पुण्यतमा मता न कंचिदपि पश्यामि माहेश्वरमिहोत्तमम् १० आरभ्यतां त्वया पाकः प्रार्थयित्वानयामि तं संवासय प्रियेकश्चिद्यदि भक्तः समागतः ११ इत्युक्त्वा निरगाद्भक्तान्दम्भभक्तो गवेषयन् अथातपेन क्वथिताः समंतात्सांसवोभुवः १२ ललाटंतपघर्मांशुर्वरूथे दिनयौवने अथ माहेश्वराकारमास्थितः कालकंधरः १३ आविवेशालयं तस्य संप्रस्विन्नमुखांबुजः इहास्य हम हंभो इत्याकर्ण्य वचनं सती १४ निर्गता सहसा दृष्ट्वा दृष्ट्वा माहेश्वरं परम् १५ प्रणम्य दत्वासनमाह साञ्जलिः सुस्वागतं भक्तवरेह चास्यतां आतिथ्यमत्रास्त्वनुमंतुमर्हसीत्युक्त्वा वितेने विधिवत्तदर्चनम् १६ तया संपूजितश्चैवं छन्नवेषेण शंकरः वसति क्व गृहस्वामीत्यपृच्छत्प्रणतां सतीम् १७ तं प्रत्युवाचाथ सतीमदीयो नाथः समाहेश्वरपाददासः भवादृशं भक्तवरं विचिन्वन्नितो बहिर्निर्गत एष्यतीति १८ यत्र नास्ति गृहस्वामी न तत्र निवसेत्सुधीः यत्रयुक्तास्थितिस्तत्र गच्छामीत्यालयाद्ययौ गते माहेश्वरे तस्मिन्दम्भभक्तश्च सत्वरः १९ अदृष्टभक्तः स्ववेश्म प्रविवेश स्मरन्हरं अथागतं पतिं साध्वी साञ्जलिः समभाषत २० ॥

ति ललाटंतपतीति ललाटंतपः असूर्यललाटयोरिति खश् स चासौ घर्मांशुः सूर्यः दिनयौवने मध्यान्हे कालकंधरः नीलकंठः शिवः १३ आविवेशेति प्रकर्षेण स्विन्नं स्वेदयुक्तं मुखाम्बुजं यस्य १४ १५ १६ १७ १८ यत्रेति आलयात् तन्मंदिरात् ययौ निर्जगाम १९ २० २१ ॥

२१ २२ २३ तस्मिन्निति मुनितरोः अगस्त्यवृक्षस्यमात्राजगज्जनन्यापार्वत्यायस्त्याग्रेयोगदंडाग्रेनिहितेप्रकोष्ठेकर्पूरादधःप्रदेशेस्थापितंआननं येनतं २४ भस्मेति भस्मभस्त्रां भस्माधारवस्त्रपात्रीं अक्षमालयाजपमालया वेष्टितांकृतवंतमित्यन्वयः जरत्तीनतनुर्यस्यतं २५ लंबमानमितिससर्वतःसर्वस्मात् दृश्यात्परंपरीभूतंतमसःपरस्तादितिश्रुतेःज्योतिःआत्मस्वरूपंध्यायन्तमित्यन्वयः २६ २७ २८ दम्भेति प्रसादः अनुग्रहःक्रि

नाथमाहेश्वरःकश्चित्साक्षादिवमहेश्वरः प्रासीदत्तासनोयुष्मान्द्रष्टुमालयंगतः २१ तत्रगत्वामहात्मानंप्रसाद्यानीयशाकंपुराक्तंभोजयितुंदेवमाविलंबोविधीयताम् २२ सुधारससमंसाध्व्यादम्भभक्तोनिशम्यतत् देवालयंययौतत्रयत्रमाहेश्वरस्थितः २३ तस्मिन्मुनितरोर्मूलेनिरासनमधिश्रितं मात्रायष्ट्यग्रनिहितेप्रकोष्ठेस्थापिताननम् २४ भस्मभस्त्रांचपुरतोवेष्टितामक्षमालया कृतवंतंपरिश्रांत्यामीलिताक्षंजरत्तनुम् २५ लंबमानभ्रुवंज्योतिर्ध्यायंतंसर्वतःपरं आलोक्यदम्भभक्तोस्यनिपपातपदद्वये २६ मुमुदेदर्शनादेवनिधिंदृष्ट्वेवनिर्धनः गृहीतचरणांगुष्ठंदम्भभक्तंदयानिधिः २७ आस्थापयित्वानामास्यपप्रच्छपरमेश्वरः माहेश्वरपदांभोजपरमाणुरहंविभो २८ दम्भभक्तोस्मिदासोस्मिप्रसादःक्रियतामयि आतिथ्यंगृह्यतांस्वामिन्कुतपःसुमहानिह २९ मदीयसदनंभूयात्पदरेणुपवित्रितं अन्नंयद्रोचतेतुभ्यंदीयतेभुज्यतामिदम् ३० इत्यावेद्यपुनर्भक्तःप्रणनामातिथिप्रियः दम्भभक्तंततःप्राहमायामाहेश्वरोहरः ३१ सएवदम्भभक्तोसित्वंपथ्यविपुलयशः मृष्टान्नदाताभक्तानांभवानेवभवानिव ३२

यतां त्वयेतिशेषः कुतपः दिवसस्य अष्टमोंशः कालः अंशोष्टमोन्हः कुतपोऽस्त्रियामित्यमरः अन्येतु द्वौयामौ घटिकान्यूनौ द्वौयामौ घटिकापरौस कालःकुतपःप्रोक्तःतस्मिन्दत्तंमहाफलमितिवदन्ति सुमहान् महाफलप्रदइत्यर्थः तथाच भवादृशानांभक्तानां आतिथ्यदानोचितोयंकालइति

भावः २९ ३० इतीति मायामाहेश्वरः कपटेनभक्तरूपधारी ३१ सइति भवाने
भवानिव इत्यनन्वयालंकारेण भवसदृशः अन्योदातानास्तीतिभावः ३१ ३२

अद्येति भुक्तान्नमेववा भुक्तमन्नंयेनतादृशं भुक्तवन्तंवेत्यर्थः पर्वविशेषे अभुक्तब्राह्मणालाभेभुक्तवंतमपि भोजयेत् तावतापि फलसिद्धिर्भवि
ष्यतीतिभावः ३३ भक्तइति दभ्रेति नाममात्रग्रहणंनामैकदेशोवा संबोधनमितिबोध्यं उक्तेसति अप्रियंभवेदित्यर्थः ३४ ३५ गंभीरमाह
क्केति प्राकृतः मायाधीनः तद्विलक्षणाः अप्राकृताइत्यर्थः नप्रकृतिर्नविकृतिः पुरुषइतिस्मरणात् स्वस्यचपुरुषरूपत्वादितिभावः नरोचते



अद्याश्रभरणीचैत्रीपरमेश्वरवल्लभा भोजयेद्भाग्यभाग्भक्तान्भोज्यंभुक्तान्नमेववा ३३ भक्तोसिदभ्रभक्तस्त्वं
क्षुधितश्चास्मिसांप्रतं तथापिकिंचिद्वक्तव्यमस्तिदभ्राप्रियंभवेत् ३४ कथंत्वामप्रियंवक्ष्येकृशाङ्गोत्यतिथिरागतः
नवक्तव्यंमयानैवश्रोतव्यमपितत्त्वया ३५ क्वचत्वंप्राकृतोलोकः क्ववयंतद्विलक्षणाः अलौकिकस्यवचनंलौकि
कायनरोचते ३६ भोजयान्यान्नाहंगत्वामातेशोकोस्तुमत्कृते इत्युक्त्वाभूत्प्रतिष्ठासुस्तस्यमाहेश्वरोग्रतः ३७ इ
तिश्रीस्कांदोपपुराणेभक्तविलासेषष्टितमोऽध्यायः ६०॥ ❀ ॥ ॥श्रीअगस्त्यउवाच ततोजिगमिषुंक्वापिप
दाग्रस्पृष्टपादुकं मात्रायष्टिधरंदेवंनत्वाभक्तस्तमब्रवीत् १ मामेवंवदवक्तव्यंप्रतिशंकास्तुमामपि कर्तास्मि
तद्यथावक्तेयल्लौकिकमथापरम् २ दूरेनिरस्यसंदेहंकर्तव्योमय्यनुग्रहः वदंतमेवंबहुधागृहीतचरणंमुहुः
३ आस्वेतिमुनिवृक्षस्यमूलेमाहेश्वरोवदत् घोरमाहारनियममाकर्णयसुदुष्करम् ४ ॥ ❀ ॥ ❀ ॥

नस्वदते विजातीयवचनंनप्रियंकरमितिभावः ३६ भोजयेति प्रतिष्ठासुः प्रस्थातुमिच्छुस्तस्यभक्तस्य अग्रतः पुरतः ३७ इतिश्रीमानवल्लु
पनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांषष्टितमोऽध्यायः ६०॥ ❀ ॥ ॥ ततइति जिगमिषुं गन्तु
मिच्छुं १ मामेति वक्तव्यंनिन्दाकरं २ ३ आस्वेतिमुनिवृक्षस्य अगस्त्यतरोः ४ ❀ ❀ ❀ ❀

५ नेति पचेलिमं पक्वं विरसं रसहीनं आमयो रोगः ६ उद्दिष्टमिति पंचषड्वा पंचषाः बहुव्रीहौ संख्येये डच् इति डच् टिलोपः पंचषाः हायना वर्षा यस्य अग्रजातो ब्राह्मणः लक्षण्यो लक्षणेषु साधुः ७ विद्येति कुलतन्तुः कुलस्यैक एवेत्यर्थः ८ स्यादिति विश्रमयित्वा ९ पचेति अव्यस

नान्नं न दधि न क्षीरं न सर्पिर्न मधूत्तमं मनःप्रीतिकरं विद्धि दम्भभक्त ममाश्नतः ५ न कल्पक फलं वामे त्वद्दत्ते यत्पचे लिमं विरसं चामयकरमन्यच्छाकादिकं पुनः ६ उद्दिष्टं मनसान्नं तच्छृणु तां दम्भभक्त मे अग्रजातश्च लक्षण्यः पुत्रः पंचषहायनः ७ विद्याविनयसंपन्नः कुलतंतुर्महामतिः मातापित्रोः प्रियतमः सर्वेषां नयनप्रियः ८ स्याच्चेत्तं मातुरुत्संगस्थापितं खड्गधारेण पिता विशस्य प्रक्षाल्य नखरोमादिवर्जितम् ९ पचेति पत्न्यै दद्याच्चेत्सचेदव्यसनाचरा सम्यक्कुर्वीत पाकं सा तदंगैः सह भर्जितम् १० समं सैंधवमादाय दर्व्या मे दीयतां हविः एवं चेद्दुर्वितादसि यस्मै द्रोज्यमरोचकम् ११ यदि शक्नोषि तत्कर्तुमस्तु भिक्षा त्वदालये नो चेत्तत्र गमिष्यामि दातारो यत्र चार्थिनाम् १२ अर्थं श्रावयितुं चेमं नामसंधृतसंशयः कौतूहलं चेद्यशसि पत्न्याश्च न विलंब्यताम् १३ स्मयमानस्तथेत्युक्ता दम्भभक्तोपि धीरधीः निःशंकमेव स्ववेश्म गत्वा भार्यां तिकं ययौ १४ अथाभिमुखमायांतीं श्वेतवननायिकां मूर्तामिव निजश्रद्धां भक्तिं माहेश्वरीमिव १५ सर्वदा समनुष्याणां छायां सहचरीमिव शोकांबुधेरपारस्य संता

ना पुत्रशोकरहिता १० सममिति अरोचकं अरुचिजनकं ११ १२ अर्थमिति यशसि कौतूहलं चेत्तर्हि असंधृतसंशयः सन् इममर्थं तां श्रावयितुं न विलंब्यतां पत्न्या च त्वदाज्ञाकरणेन विलंब्यतामिति अन्वयः १३ स्मयमान इति हसन् १४ अथेति श्वेतवननायिकां तदभिधानां भक्तिमित्यत्रापि मूर्तामिति संबध्यते १५ सर्वदेति सुतरां शोभ नां नावं १६

करुणावतीति अगस्त्य उवाचेत्यादिः कलः अव्यक्तमधुरः अलकाः केशाः नीरजपत्रं पद्मपत्रं १७ नीरंध्रयोर्घनयोर्वक्षोजयोः स्तनयोर्भरेणानतमंगं यस्यास्ता दृशि नीहारवत् शीतः श्वेतो हारो यस्याः सा अवतु त्वामिति शेषः १८ सुकेशीति सूनास्त्रस्य कामस्य महापताके

करुणावतिकल्याणि कलकंठि प्रसीद मे १७ नीलालके निर्मलमंदहासे नीतिस्थिते नीरजपत्रनेत्रे नीरंध्रवक्षोजभरानतांगिनी हारहारे वतु नीलकंठः १८ सुधारसोक्के बहुसूक्ष्ममध्ये सुनासिके सुंदरगात्रि सुभ्रु सुकेशि सूनास्त्रमहापताके सुधांशुमौलिस्तव सन्निधत्ताम् १९ वीणागुणालापिनि वीतरोषे वीरुद्भुजे विश्वजनान्नदात्रि वीरः समाहेश्वरवीतिहोत्रो वीरासनस्थो न्नमिहार्थति त्वाम् २० त्वय्येव गुणशालिन्या भवनं मम भूषितं नंदनं कल्पवल्लीव पूरिताभ्यागताशया अनुकूलं न यस्यास्ति कलत्रं साध्वि मंदिरे २१ अरण्यमेव तस्याहुः शरणं गृहमेधिनः पतिप्राणान्परित्यज्य रक्षंति हि पतिव्रताः २२ इति गाथाः पुराणेषु साध्वि साक्षात्कृतास्त्वया शृणु कर्त्तव्यमधुना विधिना विहितं मम २३ सर्वदा ह्यतिथिः पूज्यः गृहिणेत्यनुशासनं दृष्टादृष्टानि भाग्यानि नश्वराण्येव पश्यतः २४ प्रायः कलत्रपुत्राश्च पशवः सर्वसंपदः अतिथिभ्योर्थिता देया न चेन्नश्यंति हि स्वयम् २५ विषया न परित्यक्ताः स्वयं पुंसां गता यदि शोकशूलं हृदि न्यस्य गच्छंत्येव पतिव्रते ॥ २६ सुधिया चेत्स्वयं त्यक्ता दद्युः सौख्यमनंतकं शिबिर्वपुस्त्वं श्येनाय कपोतत्राणतत्परः २७ अलर्कोदात् द्विजे नेत्रे व्याधयां कंकपोतकः

मौलिभूते वीरुल्लता १९ वीरइति अर्थते याचति २० नंदनमिति पूरिता अभ्यागतानामतिथीनां आशायेति पूर्वेणान्वयः २१ २२ २३ सर्वदेति नश्वराणि नाशशीलानि २४ प्राय इति न चेन्न दीयंते चेदित्यर्थः २५ विषयाणां नश्वरत्वावश्यंभावेन अत्यक्तनाशे नरस्य दुःखं

२३ रुधिरमिति करके कमंडलौ २४ पचेति इयं शंभोः भक्तिपरीक्षैवेति कृतः आशयो यया २५ पचतीति धात्रीमाता २६ २७ २८ २९
३० कांडेति कर्मकांडोपासनाकांडद्वयार्थके त्वर्थः पादुके मुहुः शब्दब्रह्ममयः आरावो ययोस्तौ शब्दवन्मणिविशिष्टो नूपुरो यस्मिन् कर्म
णि तथा धृत्वा ३१ भस्मेति भस्मनः अंगरागो यस्य तादृशः अलं अर्जुनं श्वेतं अल्लकं कौपीनं बिभ्राणः डमरोः ध्वनितस्य आटोपेन मुखरीकृतानि

अथोन्नमः शिवायेति खड्गेनाखंडयच्छिरः ततः पादौ ततः पाणी श्रीपतेर्विचकर्त्त च २३ रुधिरं नूतनं चापि क
रके न्यस्य दापयत् त्वचमाच्छिद्य मुंडं च नखकेशादिवर्जितम् २४ पचेति भार्यामवदत्सा च साध्वी तथाकरो
त् इयं भक्तिपरीक्षैव शंभोरिति कृताशया २५ पचति स्म शिरो धात्री गृहीत्वा क्षिप्रमर्भकं मरीचैर्जीरिकाद्यै
श्च कुस्मनिबद्दलैरपि २६ सद्यो घृतेन बहुना भर्जितं समसैंधवं अर्भकांगमशेषं च पचति स्म पतिव्रता २७
संपन्नमिति भर्त्तारमुवाच मुदिता सती उपलिप्यालयं सम्यग्भैरवं प्रत्यपालयत् २८ भक्तः शिवालयं गत्वा मू
ले मुनितरोः स्थितं महाभैरवमाहेदं संपन्नं संमितं हविः २९ आनेतासि मुचिरं देव माविलंबो विधीयतां इति त
द्वाक्यमाकर्ण्य हरो माहेश्वराकृतिः ३० कांडद्वयार्थके धृत्वा पादयोः पादुके मुहुः शब्दब्रह्ममयारावनिक्वणन्म
णिनूपुरम् ३१ भस्मांगरागो बिभ्राणश्चालमल्लकमर्जुनं डमरुध्वनिताटोपमुखरीकृतदिङ्मुखः ३२ रटत्क
रोटिसाहस्त्रकंठसूत्रभयंकरः दधानः सशिखं शूलं स्फुरत्फणिककुंडलः ३३

शब्दायमानानि दिङ्मुखानि यस्य ३२ रटन् शब्दवत् करोटिनां मुंडानां सहस्त्रमेव साहस्त्रं यस्मिन् तादृशेन कंठसूत्रेण भयंकरः मुंडमालाध
र इत्यर्थः शिरोस्थिनि करोटिः स्त्रीस्यमरः सशिखं सज्वालं स्फुरंतः फणिनो ययोस्ते स्फुरत्फणिककुंडले यस्य तथा ३३

रोचनेति ललाटस्थितत्वेनरोचनातिलकश्रियंबिभ्रत् तार्तीयीकं तृतीयंविलोचनंयस्यसतादृशः कपालमालिकायानद्धायासुतादृशीभिर्जटाभिरुत्तंभिताः कुंतलायेन ३४ अरुणेति क्रोधेन अरुणापांगकणिकयावित्रासितंजगत्त्रयंयेन तदालयंदभ्रभक्तगृहं ३५ अथेति अवनिज्य प्रक्षाल्य निजिर् शौचपोषणयोः तदीयंजलमितिशेषः ३६ सुवर्णेति अस्यपादारविंदेसुवर्णपुष्पादिभिःपूजांविधायभगवं



रोचनातिलकश्रीभृत्तार्तीयीकविलोचनः कपालमालिकानद्धजटोत्तंभितकुंतलः ३४ अरुणापांगकणिकावि
त्रासितजगत्त्रयः आलंबदभ्रभक्तस्यहस्तमागात्तदालयम् ३५ अथावनिज्यांघ्रिसरोरुहद्वयंतदीयमाधायसु
वर्णभाजने दधारमूर्ध्नांतरपःस्वभार्ययाजमादधन्योस्मिचिरादपीतिसः ३६ सुवर्णपुष्पैरपिचंदनेनविधायपू
जामपिदभ्रभक्तः पादारविंदेभगवंतमस्यप्रदक्षिणीकृत्यननामभूयः ३७ उपवेश्यासनेहैमेमायामाहेश्वरंह
रं रंभापत्रद्वयंसाग्रंविदधेविपुलंतले ३८ पशुमांसोपहारंतत्पात्रेपूर्वमुपस्तृते ददौभक्तिमतीसाध्वीपश्चा
दन्नंघृताप्लुतम् ३९ कर्पूरवासितंहस्तेदभ्रभक्तोप्यदाज्जलं अथमाहेश्वरोमौलिंचालयन्नाहतंपुनः ४० पक्कं
शीर्षंनपश्यामियन्मेप्रियतमंभवेत् तौदंपतीतथाभीतौपश्यतस्ममुखंमिथः ४१ पशुशीर्षंततोधात्रीकृतपा
कंचभर्जितं स्वामिनेप्रददौसास्मैतत्पात्रेपर्यवेषयत् ४२ उक्तास्त्वमृतमित्याहभुज्यतामितितापसं भैरवःप्रा
हतंभूयःत्वराकार्यानमेत्वया ४३ शृणुचैवंवचोभक्तनवेत्सिनियमंमम नाश्नीयामेकएवाहंक्वापिचंडालकर्म

तंप्रदक्षिणीकृत्य भूयोननामेत्यन्वयः ३७ ३८ पश्विति पूर्वेउपस्तृते अभिघारिते ३९ कर्पूरेति माहेश्वरः तंपुनःआहेत्यन्वयः ४० पक्क मिति यत्शीर्षं प्रियतमं अतिशयेनप्रियंपश्यतःस्म अपश्यतामित्यर्थः लट्स्मद्वृतिस्मयोगाद्भूतेलट् ४१ पश्विति धात्र्यामात्राकृतःपाको

त्यक्तेषु सुखमेवेति प्रतिपादयति सदृष्टांतं त्रिभिः विषयादित्यादिना २६ २७ अलर्केइति द्विजेविषये अंकमुत्संगं कथास्त्विमाइमामहा भारतादिषुप्रसिद्धाः २८ अथेति अमुष्मिन्लोके स्वर्गलोके २९ चिकीर्षुरिति मद्विरुद्धमद्यस्नेहादिनात्वयानैवकार्यमितिभावः ३० इति श्रीमानवस्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायामेकषष्टितमोऽध्यायः ६१॥ ७ ॥ ॥ अपू

अथमाहेश्वरेप्राप्तेकिमदेयंभवेन्मम २९ त्वदानुकूल्येननकिंचिदस्तिलोकेदुरापंत्विहमप्यमुष्मिन् चिकीर्षु रस्यास्त्वियदत्रसाध्वीत्वयैवमेतद्वशीकरोति ३० इतिश्रीस्कांदोपपुराणेभक्तिविलासेएकषष्ठितमोऽध्यायः ६१॥ श्रीअगस्त्यउवाच एवंसंबोधितातेनसाश्वेतवननायिका प्रांजलिःस्मयमानाहप्रणम्यप्राणनायकम् १ नाथसंबोधनमिदंकिमपूर्वंकृतंमयि कर्णयोर्मेसिधारेवभवद्वाग्युक्तिचातुरी २ सर्वदासापराधाहंशिक्ष णीयाननुत्वया कर्त्तव्यमादिक्षिप्रंनचेत्तत्रानुकूलता ३ त्वजसद्योजनमिमंशून्यंभांडमिवांतरा दत्रभक्तस्त तःश्रोतस्तदंसेहस्तमर्पयन् ४ तमाहेश्वरसंकल्पंतस्याःकर्णेन्यवेदयत् साध्वीतद्वाचमाकर्ण्यवज्रपातसमा क्षरम् ५ अपिस्मव्यथतेनैवगंगेवाश्मनिपातनात् आनयार्भकमत्रेतिनियुक्तोनिजभार्यया ६ जपन्पंचा क्षरीमेवबालशिक्षागृहंययौ अथसःश्रीपतिःस्वप्नेचिन्हंकेतकधारया ७ कृष्टोनमःशिवायेतिचुक्रोशोच्चैःगु रोःपुरा आहूयपृष्टेगुरुणाजगादस्वप्नविस्मयम् ८ सर्वदावतुशंभुस्त्वांदीर्घाःसंतुतवाशिषः माभैरितितमाभाष्य

र्वाक्चनचातुरीमस्याकार्येकार्येस्यगुरुत्वंमन्यमानायास्तस्यावचनमवतारयति एवमित्यादि १ नाथेति पत्न्याअनुशासनीयतयानु सरणमयुक्तमित्याह कर्णयोरिति २ ३ ४ तमिति वज्रपातसमानिअक्षराणि यत्रतादृशं ५ अपीति अश्मनोनिपातनात् ६ जपन्निति

मध्येइति कलानांनिधिंचद्रं १० ११ उपास्यइति सपर्ययापूजया १२ १३ १४ उश्राप्येति त्वयिसतामाशिषः सफलाःसंतु गौरीपतेरनवधिः 
प्रसादोस्तुइत्यन्वयः १५ आयुरिति दीर्घमित्यनुषज्यते १६ १७ अभिषिच्येति असूषुयत् स्वापयामास १८ आहूयामासेति तीक्ष्ण

मध्येस्थितंश्रीपतिमर्भकाणांनिधिंकलानामिवतारकाणां उमापतेस्तोत्रशतंपठंतंतत्रात्मजंभक्तवरोददर्श १० पितुर्मुखालोकनजातहर्षःजातस्मितस्तोत्रमुदाजहार सश्रीपतिर्देशिकचोदितःसन्नुच्चैस्तरांवाचयतिस्मपद्यम् ११ उपास्यएकोधिपतिःपशूनांसमर्चनीयाश्चतदीयभक्ताः प्रीतःशिवोभक्तसपर्ययास्याच्छिवप्रसादेनशुचंतरंति १२ पद्यमाकर्ण्यपुत्रोक्तंमज्जन्नानंदसागरे प्रेषणीयोगृहेबालइतितद्गुरुमाहसः १३ श्रीपतेगच्छसदनंपित्रोरानंदमावह इत्याकर्ण्योत्थितोदासःसगुरुंप्राणमत्तदा १४ उत्थाप्याघ्रायतन्मौलिंवितेनेगुरुराशिषः १५ संत्वाशिषस्त्वयिसतांसफलाःप्रसादोगौरीपतेरनवधिःसुमतेस्तुदीर्घं आयुश्चवज्रमिवतेवपुरस्तरोगंऐश्वर्यमक्षतमुपैतुकुलंचवृद्धिम् १६ दृग्भक्तःसमादायगुरुणाविहिताशिषं नीत्वालयंस्वभार्यायैददावाहत्वयैतामिति सुगंधिनातमभ्यज्यतैलेनतनयंसती १७ अभिषिच्यसुखोष्णेन वारिणावारिजेक्षणं भोजयित्वानिजोत्संगेलालयित्वाप्यसूषुपत् १८ आहूयामासभर्तारमचंचलमनाःसती सतीक्ष्णाधारासिधरःसहसांतिकमाययौ १९ भूषितंसर्वगात्रेषुधृतभस्मत्रिपुंड्रकं ददर्शजहारकरयोःपाणिभ्यांपादयोरपि २० साध्विमेस्त्महाभिक्षोर्माभूद्वाष्पेणदूषितं पत्युक्तेयंस्मरच्छंभुंसाश्वेतवननायिका २१ उदस्तदक्षोनाविंददृग्भक्तःस्वपाणिना बरेदत्तेचदेवेनकैलासनगवा

धारंअसिंधरतीतिसः १९ २० साध्वीति भैक्ष्यंभिक्षेत्यर्थः समूहस्यान्नासंभवात् २१ उददति तदक्षः तन्नेत्रं उदः उदकंनाविंदत् नलेभेइ

त्यर्थः दृग्भक्तः स्वपाणिनाविचकर्तेत्युत्तरेणान्वयः २२

अभ्यागतइति अतिथिरन्योवा कश्चिदाहूयतामित्यन्वयः ४५ ४६ सांजलिरिति तत् भुक्तशेषंमयिदीयतांप्रसाद बुद्ध्येतिशेषः ४७ दभ्रे
ति भवानेवभक्तःतत् तस्मात् त्वयैवस्थीयतामित्यर्थः ४८ ४९ ५० शिलेति तत् तस्मात् विलंबः कालयापनमास्त्वित्यर्थः आस्वतिष्ठ ५१ ५२ तमिति

अभ्यागतोतिथिर्वान्यःकश्चिदाहूयतामिह यावन्नायातिसाक्ष्येकोमयातावन्नभुज्यते ४५ इत्युक्तोबहिरागत्यः
विचिन्वन्परितःक्वचित् दभ्रभक्तोनवेक्ष्यान्यंभक्तंप्राप्तस्तदंतिकम् ४६ सांजलिःप्राहनैवास्तिक्वापिभक्तःप्रद
श्यते अतस्त्वमाशुश्राभोज्यंभुक्त्वातद्दीयतांमयि ४७ दभ्रभक्तमथोवाचदेवःपरमभैरवः भक्तोभवान्नकोप्य
न्यःस्थीयतांभोजनायतत् ४८ वधूमुखमथालोक्य दभ्रभक्तोप्युवाचतं विज्ञप्तिःश्रूयतांस्वामिन्नाजन्मा
स्तिव्रतंहितत् ४९ भुक्तवत्सुमहत्स्वेवभुज्यतेनुदिनंमया शिलान्यथाचेद्वोक्तव्याकथमेवंविधीयताम् ५०
शिलाभुजांवाभवतांभुक्तिर्भक्तैःसहोत्तमा विलंबोमातदास्त्विहनस्याद्वेदप्यपारणा ५१ पंक्तौमाहेश्वर
स्यार्थप्रीतयेभोक्तुमुद्यतः दभ्रभक्तःशिवंस्मृत्वाशिलाकबलमाददे ५२ तंगृहीतास्मकबलंनिरुध्याह
पुनर्हरः आस्तांतर्किचिदधुनाविस्मृतंयत्सुराशुधा ५३ अस्तिहिश्रीपतिर्नामतवपंचषहायनः पुत्रस्सुभो
जनेप्राप्तेकथमत्रनदृश्यते ५४ भुक्तपूर्वंचनमयासदनेपुत्रवर्जिते सर्वशास्त्रनिषिद्धंतदपुत्रगृहभोजनम्
५५ सरःसरोजेनविनाकृतंयथाविनाशशांकेननभस्थलंयथा अदृष्टसूर्यंदिवसंयथातथानिकेतनंभातिन
पुत्रवर्जितम् ५६ अलंकारोमुखस्याक्षिवेदविद्याद्विजन्मनः पातिव्रत्यंकुलीनायाःवेश्मनोभूषणंसुतः ५७ यःस्व
भोजनकालेन्नंपात्रेनिहितमर्भकः नभुं
क्तेसहतस्याम्भुभोजनंतत्तुभोजनम् ५८

आः इतिस्मृतौअव्ययम् ५३ अस्तीतिपंचषड्ढायनः पंचवार्षिकः ५४ ५५ ५६ ५७ यस्येति सहनभुंक्तेस्वेनेतिशेषः श्वभोजनंश्वनकभक्षणस्वतःसः श्वपाको
भवति चांडालइतिभावः ५८

५९ ६० ६१ ६२ ६३ ६४ विलोकयेति विलंबेनकृतं विलंबेनकर्त्तव्यमित्यर्थः ६५ ६६ ६७ ६८ सिद्धार्थेति सिद्धार्थाःसर्षपाः तदा
दिमंगलद्रव्यगंधीनीत्यर्थः पिनाकधनुषा शिवेनैव ६९ अम्बेति निद्रालुःनिद्राशीलः स्पृहिगृहीत्यादिना आलुच्प्रत्ययः ७० दिवीति



आच्छिद्यहस्तोपितुरादधानोबालोघृताक्तंकवलंमुखेस्वे करोतिचेदग्रतएवमातुस्तयोर्मुदाब्रह्मसुखंनतुल्य
म् ५९ मधुरंमृदु तःसूनोस्त्यर्जैकटुभोजनं मुखचालनमालोक्यमोदेतेननुदंपती ६० अहोदयाविहीनोसि
कुलतंतुंकुमारकं उद्युक्तोसिविहायैवभोक्तुंभक्तकथंतराम् ६१ कथंवातेदयानास्तिश्रीभ्वेत्तवननायिके भ
र्तुर्भोजनकालज्ञापुत्रंनाहूयसेयतः ६२ इअभक्तबहिर्गत्वाबालआहूयतांद्रुतं त्वमंकणेवागोष्ठेवाक्रीडते
हसतेसुतः ६३ विलोकयविलंबेनकृतमित्यन्वशास्तितौ अन्योन्यालोकितमुखौतौमाहेश्वरशासनात् ६४ यथा
नियोगंतत्कर्त्तुंशासनंनिर्गतौबहिः शिक्षाशालामुखौभूत्वादंपतीव्हयतांसुतम् ६५ श्रीपतेतूर्णमायाहिभोक्तुं
माहेश्वरआज्ञया आनंदयकलालापैःआवामप्यमृतैरिव ६६ ताभ्यामितितिराहूतःश्रीपतिःशिवशासनात् वी
थ्यामाविरभूद्बालःसर्वाभरणभूषितः ६७ सिद्धार्थजीरकमरीचिनवाढ्यगंधीन्यंगानिभूषणकलापविभूषितानि
बिभ्रत्पिनाकधनुषैवकृतानयश्रीसश्रीपतिःपुरतएवबभूवपित्रोः ६८ अंबनिद्रालुरेकेतेकदाहंनिर्गतो
बहिः इत्यालपन्मुहुस्ताभ्यामाश्लिष्यतमुदार्भकः ६९ दिविदुंदुभयोनेदुःपुष्पवृष्टिश्चखादभूत् रोमांचितां
गोगिरिजातदुक्तिंश्लाघतेस्मसा ७० शंभुरंतरधात्सद्योमहाभैरवरूपधृक् सहैवपशुमांसेनपात्रेतदवशेषित

खात् आकाशात्श्लाघतेस्म शश्लाघेइत्यर्थः ७१ शंभुरिति अंतरधात् अंतर्धानंजगामेत्यर्थः ७२

अथेति बालस्य आलिंगनेन निर्वृतौ सुखितौ ७२ताविति विस्मयेन अद्भुतेन आविष्टं प्रविष्टं हृदयं ययोस्तौ विचिन्वाते स्म अन्वेषणं चक्रतुरित्यर्थः ७३ ७४ ७५ ७६ जन्मनीति अपदानं कर्मवृत्तं ७७ समागममिति उदीक्षंतौ ऊर्ध्वं पश्यन्तौ ७८ ७९ ८०

अथ तौ दंपती भक्त्या बालालिंगननिर्वृतौ अंतर्भोजयितुं देवं माहेश्वरमुपागतौ ७२ तौ भैरवमपश्यंतौ मांसमप्यर्पितं पशोः विस्मयाविष्टहृदयौ विचिन्वाते स्म सर्वदा ७३ गतस्य लाभेन सुतस्य नेमतुर्दृष्टं तथा प्रापतुरेव दंपती अदर्शनेनास्य विभोर्यथा शुचं महत्तमं तापमवापतुश्चिरात् ७४ उपेक्षसे कथं शंभो भक्ताविष्टवर्षिणो ७५ जन्मन्यन्यत्र पूजायां शंभोर्विघ्नः कृतो महान् इति संचिंत्य संचिंत्य तच्चापदानमस्य तत् ७६ समागममुदीक्षंतौ दत्तदृष्टी बभूवतुः ७७ अथाविरासीद्भगवान् दयानिधिः पुरस्तयोर्देवगणैरभिष्टुतः सहैव गौर्या गजवक्त्रशक्तिभृन्निषेव्यमाणो वृषभोपरि स्थितः ७८ जयेति रक्षेति विलोकयेति देव प्रसीदेति पुराणवाग्भिः अभिष्टुतश्चंद्रकलावतंसः श्रीदभ्रभक्तांतिकमाससाद ७९ संपूजितस्तेन च भक्तिपूर्वं भार्यासमेतस्य च तस्य धात्र्याः वितीर्य मुक्तिं विबुधैर्दुरापामंतर्दधे शंभुरचिंत्यभूमा ८० चरितं दभ्रभक्तस्य येश्रृण्वंति पठंति वा पार्वतीशप्रसादेन तेतरंति भवार्णवम् ८१॥ ॥इति श्रीस्कांदोपपुराणे भक्तविलासे द्विषष्टितमोऽध्यायः ६२॥ ॥ ॥श्री अगस्त्य उ॰ अनवद्येषु भोगेषु करस्थेष्वपि निस्पृहाः ये चेति केवलं शंभुं तेषां मुक्तिर्न दुर्लभा १

फलस्तुतिपूर्वकमुपसंहरति वितीर्येति वितीर्य दत्वा अचिंत्यः चिंतयितुमशक्यः भूमा बहुत्वं यस्य पादोस्य विश्वाभूतानि इति श्रुतेः ८० ८१ इति श्रीमानवल्लुपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां द्विषष्टितमोऽध्यायः ६२॥ ॥ ॥संप्रति

सतामपि भोगसामग्र्यां तामुपेक्ष्य ये केवलं शिवमेवार्चयंति तेषां सुलभा मुक्तिरित्याह अनवद्येति १ अत्रार्थे पुरावृत्तमवतारयति इति
हासमिति क्षमावतः तन्नामकस्य २ पुरमिति महोदयं कुशपौत्रेण वसुना निर्मितं नगरं वसुश्चक्रे महोदयमिति रामायणे दर्शनात् ३
तत्रेति अपरः अन्यो राम इव दाशरथिरिवेति गुणसमृद्धिकथनमुपमालंकारस्य विषयः तेन शौर्यातिशयो व्यज्यते रामः शस्त्रभृतामहमि
तिभगवद्गीतावचनात् ४ आहुरिति पर राष्ट्रेषु शत्रुराज्येषु वदान्यो बहुप्रदः ५ आम्नायेति आम्नायाः वेदाः आगमाः शास्त्राणि तेषां मर्म

इतिहासमिह प्राहुरार्याः शिवकथाविदः चरितं वार्यते यत्र क्षत्रियस्य क्षमावतः २ पुरं महोदयमिति ख्यातम
स्ति जगत्त्रये नामांतरं च तस्याहुर्वीनीरपुरमित्यपि ३ तत्र कश्चिदभूद्राजा विक्रमोन्मूलिताहितः क्षमावानिति
विख्यातः श्रीमान्नाम द्वापरः ४ आहुः श्रीचेरनामानं परराष्ट्रेषु ये नृपाः स राजा नीतिचतुरः वदान्यो ब्राह्मणप्रि
यः ५ आम्नायागममर्मज्ञः सर्वक्रतुषु दीक्षितः सर्वसंशयसंछेत्ता सदस्पतिसंमतः ६ सदा संपूर्णकोशश्च
सामात्यबलवाहनः गृहेषु तस्य पर्यंकाः नवरत्नविचित्रिताः ७ पयःफेनोपमाः शय्याः दुकूलास्तरणोज्ज्वलाः श =
तसाहस्रसंख्याताः श्यामा हेमरुचः स्त्रियः ८ करदैरन्वहं दत्तं वर्द्धते मेरुवद्धनं स सर्वं तृणवत्पश्यंल्लिङ्गमेव समर्चयत् शिवरहस्यवित् ९

रहस्यं जानातीति तादृशः दीक्षितः संजातदीक्षः सदस्पतेः सभापतिनाम्ना प्रसिद्धस्य शिवस्य संमतो भक्तः ६ सदेति सम्यक्पूर्णः कोशः
धनौघो यस्य तादृशः अमा सह समीपे वा तिष्ठन्तीत्यमात्या मंत्रिणः बलानि सैन्यानि वाहनानि हस्त्यश्वादीनि तैः सह वर्ततइति त
था ७ पयइति पयसो दुग्धस्य फेनः डिंडीरः उपमा यासां तथाविधाः शय्याः किंच दुकूलानां श्वेतपट्टवस्त्राणां आस्तरणै रुज्ज्वलाः
प्रकाशमानाः श्यामाः षोडशवार्षिक्यः हेमरुचः सुवर्णकांतयः ८ करेति करं राजग्राह्यधनं ददतीति करदाः स्वाधीना नृपा इत्यर्थः तथावि

१० ११ १२ जानीहीति सर्वप्राणिभाषाज्ञानं तवास्त्विति वरं ददावित्यर्थः अत्र हेतुः मदनुग्रहादिति नन्वेतावता किं जातं अत आह यद्य
दिति यद्यद्वस्तु वांछसि तत्तद्विधास्यामि संपादयिष्यामि तत्र साभिप्रायमहमर्थे विशेषणं सर्वकृदिति सर्वं करोतीति सर्वकृत सर्वकर्त्तुः

जपन्मंत्राक्षरं नित्यं दिवसान्यतिवाहयत् सविसृज्याखिलान्भोगान्तपसे रण्यमास्थितः १० संप्रार्थितश्च सचि
वैः प्रवेशाय पुनः पुरे नानुमेने स्वयं राज्यं शिवपूजाविघातकृत् ११ ततः शिवाज्ञया स्वप्ने क्षमावान्भाषितो भवत्
अधिशाधि महीं शत्रून्जहि पालय च प्रजाः १२ जानीहि सर्वजंतूनां भाषाश्च मदनुग्रहात् यद्यद्वांछसि तत्तेहं
विधास्यामि च सर्वकृत १३ यथावच्छासनं शंभोश्चिकीर्षन्नथ भूपतिः प्रविवेश पुरं भूयः सचिवैश्चाभ्यषिच्यत
१४ विविधस्थालयामास सधेनून्ब्राह्मणानपि अजयद्द्विविधैर्यज्ञैरध्वराधिपतिं हरम् १५ पूजयामास विधिवद्रु
द्राक्षधारिणः क्वचिन्मृत्वा भरं दृष्ट्वा भस्मोद्धूलितविग्रहम् १६ प्रणमन्स्रजकं तेन प्रणतस्तमतोषयत् स्व
वंध्यसस्याभूरासीत्त्व धर्मनिरता जनाः १७ तस्मिन्सिंहासनारूढे क्षमावति महीपतौ सहालास्येश माहात्म्यश्रु
तातस्मिन्निविष्टधीः १८ सस्मार मनसा तस्य नाम दिव्यं स्तुतादिषु गोपिकातनयः कश्चिद्गुणभद्रसमाह्वयः ॥
१९ संनिधौ सुंदरेशस्य संजगौ धनवांछया त्रिसंध्यं वीणया गायंस्तस्य लीला मनोहराः २० ७ ७ ॥

सर्ववस्तुसंपादनं न विस्मयायेति भावः १३ यथावदिति शंभोः शासनं यथावत् यथोपदेशं चिकीर्षन् कर्त्तुमिच्छन् अभ्यषिच्यत
अभिषिक्तः राज्याधिपत्य इति शेषः १४ १५ पूजयामासेति भस्मरुद्राक्षधारिणः शिवभक्तानित्यर्थः १६ प्रणमन्निति तेन स्रजके
न प्रणतः नमस्कृतस्सन् तमतोषयदिति अन्वयः १७ १८ सस्मारेति स्तुतादिषु स्तवादिषु आदिपदेन जंआदिपरिग्रहः १९ २०

२१ देहीति चेराय चेरापरपर्य्यायायक्षमावतेराज्ञे २२ २३ २४ २५ २६ अश्रुएवन्निति प्रतिदिनंजायमानस्यनूपुररवस्य अस्मिन्दिने श्रवणाभावात्स्वात्मापराधेनैवशिवस्तथा चकारेतिनिजापराधानुमानेनस्वमात्मानंअपराधिनंमेने २७ निजेति कौक्षेयकंखड्गं खड्गकौक्षेयकौसमौइत्यमरः न्यरुण तनितरांरुरोध २८ सुंदरेति सुंदरस्यप्राग्वर्णितस्यप्रधानभक्तस्य स्तुतिषु स्तवेषु सक्तेनमयातांडवं



देवमानंदयामासमीनाक्षीरमणंविभुं स्वप्नेथबाणभद्रस्यदत्तैपत्रंकरेहरः २१ देहिचेरायतद्दत्तंगृहाणद्रविणंमहत् इत्यादिश्यतिरोभूतेदेवेसभयमुत्थितः २२ बाणभद्रःकरेदृष्टुपत्रमाश्चर्यवानभूत् महोदयपुरंप्राप्यसतसत्रक्षमापतेः २३ दत्वाचिन्हैर्विनाराज्ञादत्तंधनमवाप्तवान् बाणभद्रोथमधुरांधनंयावदपेक्षितम् २४ गृहीत्वाप्रययौहृष्टःपथियानैर्यथानृपः २५ पूजावसानेनुदिनंपुरारेःसनृत्यतोनूपुरशिंजितानि आकर्ण्यमोदकृताश्रुवर्षःकालंनिनायक्षणवन्महांतम् २६ सकदाचनपूजायांसमासाद्यामुपागतः अश्रुत्वानूपुररवंमेनेस्वमपराधिनम् २७ दोषस्यनिष्कृतिःशंभोःप्राणत्यागइतिस्मरन् निजोदरंविनिर्भेत्तुंदधौकौक्षेयकंकरे २८ न्यरुणत्साहसंतस्यवृषारूढोमहेश्वरः सुंदरस्तुतिसक्तेनविस्मृतंतांडवंमया संख्येतेसुदरेणास्तुसहितस्तेनसर्वतः २९ स्थलेषुसेवमानोमांपरांप्रीतिमुपेष्यसि आगमिष्यसिकैलासेयस्मिन्कालेसुंदरः ३० तदामदाज्ञयाकश्चिच्चतुर्दंतोमहागजः भविष्यतिसमीपेतेतमारुह्यामुनागजम् ३१ ॥

उद्धतनृत्यंप्रदोषेषुप्रतिदिनंक्रियमाणं विस्मृतं मधुरोद्धतभेदेननद्व्यंद्विविधंपुनः लास्यतांडवभेदेननाटकाद्युपकारकमितिदशरूपकोक्तेः स्त्रीकर्तृकंनृत्यंलास्यं पुंस्कर्तृकं तांडवमितिविवेकः २९ स्थलेष्विति यस्मिन् यस्मिन्कालेसुंदरः आगमिष्यतीतिशेषः तदात्वमपितेनैव

सहागमिष्यसीतिसंबंधः ३० तदागमनकालस्यचिन्हमाह नदेति चतुर्दंतः ऐरावतकुलीनः अमुनासुंदरेणसह ३१ वपुषेति सचिवेषु मंत्रिषुआरोपितानिक्षिप्ता क्षितिः लक्षणयाभूभारोयेन ३२ ३३ ३४ महोदयइति शतंमन्यवः क्रतवोयस्यसः शतमन्युरिंद्रः तस्यतेजइव तेजोयस्यसः मन्युर्दैन्येक्रतौक्रुधीत्यमरः ३५ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलास

वपुषायाहिमत्स्यानंदइत्युक्तांतरधाद्गुरुः क्षमावानथसंतुष्टःसचिवारोपितक्षितिः ३२ प्रतस्थेसुंदरंद्रष्टुंसभद्रबलवाहनः ३३ हालास्यनाथंचचिदंबरेशंद्रोणीपुरेशंचनिषेव्यमार्गे संप्राप्यसश्रीकमलालयंचस्तुत्वाहरंसुंदरमित्रमासीत् ३४ सतेनसर्वत्रनिषेव्यशंभुंप्रस्थाप्यमित्रंकमलालयाय महोदयेपूर्ववदेवराज्यंशशासभूयःशतमन्युतेजाः ३५ इतिश्रीस्कांदोपपुराणेभक्तविलासेत्रिषष्ठितमोऽध्यायः ६३॥ ॥ ॥श्रीअगस्त्यउवाच श्रीकर्मयेप्रकुर्वंतिध्यायंतःशंकरंविभुं शोकमोहविनिर्मुक्तास्तेयांतिशिवमंदिरम् १ आसीद्द्रोणपुरीनाथवामांगस्तन्यपायिनः दयालवाख्यविज्ञानोगणनाथाव्हयोर्जितः २ श्रीकर्मणिनियुक्तोभूद्गुरुणापरमेश्वरे स्वरूपंतत्रपप्रच्छप्रणम्यपरयामुदा ३ गौरीतृतीयतनयःसतस्मैतदुपादिशत् गुहपादाब्जभजनेनिरतं

प्रकाशिकायांत्रिषष्ठितमोऽध्यायः ६३॥ ॥ ॥शिवध्यानपूर्वकंश्रीकरंकर्मकुर्वतांसर्वानर्थनिवृत्तिपूर्वकमोक्षप्राप्तिरित्याह श्रीकर्मेति श्रीकरंचतत्कर्मेतिमध्यमपदलोपीसमासः श्रीशब्देन विपुलभोगसामग्रीसिद्धिः मुक्तिश्चेतिद्वयंतज्जनकंकर्मश्रीकर्मित्यनुपदमेववक्ष्यते शोकमोहाभ्यांविनिर्मुक्ताः ब्रह्मात्मैक्यभावनयारजस्तमःसंबंधाभावेनसत्वैकनिष्ठतयेतियावत् तरतिशोकमात्मवित् तत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतेः ज्ञानिनइत्यर्थः ज्ञानप्राप्तिश्चसत्वोद्रेकाधीनासत्वात्संजायते

ज्ञानमितिस्मृतेरिति वेदांतसांख्याभ्यामनुमतमेव रसिकानामपि मतेतस्यैव कादाचित्काभिव्यक्तिविषयस्य रसरूपताङ्गीकृता यद्वैतसु
कृतं रसोवैसः रसंह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः आकरेष्वपि सत्वोद्रेकादखंडस्वप्रकाशानंदचिन्मयः इत्यादिना अयमास्वाद्यते रसइ
त्यंतेन भग्नावरणाचिदेव रसः यथाशरावादिनापिहितो दीपस्तन्निवृत्तौ सन्निहितान्पदार्थान्प्रकाशयति स्वयंच प्रकाशते तथाऽ
ज्ञानसंवलितमात्मचैतन्यंविभावादिसमवधानेन तन्निवृत्त्यास्वयमेव स्वेनप्रकाशते अन्यत्प्रकाशयति चेतिपरेवस्तुतस्तस्य
ज्ञाप्यत्वमपिनेतिकारकज्ञापकाभ्यामन्यत्क्वचिद्दृष्टमितिचेन्नकचिद्दृष्टमित्यादिनास्पष्टमेव एतस्यसर्वस्य ज्ञानस्यरूपतयाऽज्ञानस्यचज्ञाननिवर्त्य
तयातद्वत्त्वंचशिवस्यैवेतिज्ञानंमहेश्वरादिच्छेदित्यादिनाप्रसिद्धमेव शिवमंदिरंयांतिमुच्यंतइत्यर्थः १ आसीदिति द्रोणपुरीना

**त्रिसंध्यमात्मलिंगार्चाभस्मरुद्राक्षधारणं स्वयंव्यक्तमहालिंगदर्शनंचप्रदक्षिणम् ५ रु**
**द्राध्यायजपश्चापिशिवाग्नौहविरर्पणं आतिथ्यभाग्यतारव्येचचरलिंगेशिवार्चनम् ६**

यस्यशिवस्यवामांगंगौरी तस्याःस्तन्यपायिनःगौरीस्तनंधयस्यगणेशस्येत्यर्थः दयालवेन कृपालेशेनप्राप्तंविज्ञानंबहुतरशिष्यशा
स्त्रादिज्ञानंयेन तादृशः गणनाथाव्हया तन्नाम्ना ऊर्जितःप्रसिद्धः २ श्रीकर्मणीति वक्ष्यमाणेकर्मणिगुरुणा नियुक्तःसन् आज्ञप्तः
सन् स्वरूपं श्रीकर्मणःस्वरूपंपप्रच्छेत्यन्वयः ३ गौरीति गौर्याःतृतीयतनयःगणेशकुमाराभ्यामन्यःतथाप्रीतिपात्रमित्यर्थःसःगुरुः त
स्मैगणनाथायतत् श्रीकर्मउपादिशत् उपदिदेशतस्यैवस्वरूपंप्रतिपादयति गुरुपादाब्जभजनमित्यादिना श्रीकर्मपरिकीर्त्तितमि
त्यंतेनश्लोकदशकेन ४ त्रिसंध्यमिति आत्मनः लिंगस्य नित्यपूजागोचरस्य अर्चाऽर्चनं स्वयंव्यक्तानां स्वयंभुवां महालिंगानां पा
र्थिवादीनांदर्शनं ५ रुद्रेति रुद्राध्यायस्य शतरुद्रीयस्यजपश्च सर्वपापप्रायश्चित्तमेतत् भस्मकुन्तोभस्मशय्याशयानोरुद्राध्यायी

मुच्यते सर्वपापैरितिश्रुतेः शिवाग्नौ हविरर्पणमिति अत्र समय मत सिद्धांतवेदिभिः श्रीमदाचार्यशंकरभगवत्पूज्यपादैः आनन्दलहर्यां स्मरयोनिं लक्ष्मीमिति श्लोके शिवाग्नौ जुहुतः सुरभिघृतधाराहुतिशतैरित्यनेन प्रपंचितं तदेव तट्टीकाकर्त्रा लोलल क्ष्मीधरेण सम्यगेव विशदीकृतं तथाहि शिवाग्नौ शिवा शक्तिः त्रिकोणमितियावत् तत्र संस्कृतोऽग्निः शिवाग्निः शिवायां संस्कृतोऽग्निः शिवाग्निरिति मध्यमपदलोपी समासः बैन्दवस्थाने स्वाधिष्ठानाग्निमवयुज्य तत्र निक्षिप्य पाशांकुशाभ्यां संनिरुध्य भुवनेश्वर्यां ग्वकुण्ठ्य अग्नेर्जातकर्मादिषोडशसंस्कारा यत्र क्रियन्ते स शिवाग्निरिति रहस्यम् अयमाशयः त्रिकोणे बैन्दवस्थाने स्वाधिष्ठानाग्निं निक्षिपेत् यद्यपि बैन्दवस्थानं चतुष्कोणं तथापि पुरश्चरणात्मकक्रियायां संवित्कमले त्रिकोणमारोप्य सहस्रकम

श्रीमज्जनांबुदानं च तद्द्रव्यस्य समर्पणं गंधकुंकुमकर्पूररोचनादिसमर्पणम् ७ दध्याज्य क्षीरतैलाद्यैः फलैर्लिंगाभिषेचनं ॥ अशांतदीपारोपश्च पूजापात्रविशोधनं ८ ॥ ० ॥

लेबैन्दवस्थानस्थां कामेश्वरीमवरोप्य पुरश्चरणं कार्य्यमिति समयमतरहस्यमिति आचार्य्याणामाशयः इदं च योगीश्वराणां कर्म्म तत्र हविरर्पणं ममेदं मंशाख्य होमद्रव्यत्यागः तदुक्तं गायत्रीभाष्ये भगवत्पूज्यपादैः गुहाशयब्रह्महुताशने हं कर्त्तैदमंशाख्य हविर्हुतं सत् विलीयते तेनेदमहं भवानि इत्येष प्रकारस्तु विभिद्यते त्रेति चरलिंगे शिवभक्तादिरूपे शिवार्चनं पाद्यार्घ्यादिदानेन तेषां प्रीतिजननं ६ श्रीमदिति श्रीमतां लक्ष्मीवतां जनानां अम्बुदानं जलसमर्प्पणं अयमाशयः ये धनिकाः शिवाभिषेकाय पिपासितेभ्यः घांथेभ्यो वा द्रव्यद्वारा जलपर्य्येयंति तद्धि नियोगः तस्मिन्कर्मणि नियुक्तेन अवश्यं कार्य्य इति गंधेत्यादि रोचना गोरोचना आदिपदेन दधि दूर्वाप्रभृति मंगल्यद्रव्य समर्प्पणम् उपलक्षितम् ७ दधीति अशांतदीपस्य अखंडदीपस्य आरोपः ८ ०

९ १० ११ शैवेति पद्मपुराणादिप्रसिद्धानां शिवसंबंधिनामागमानां अर्थश्रवणं गुरुमुखादितिशेषः तत्कोशानांतद्ग्रहस्यार्थप्रति पादककोशानांसंग्रहः १२ १३ पालनमिति गणाग्रणीःगणनाथः १४ महोत्सवेति बोधनात् अन्यदत्तैःस्वधनैश्चशिवयोः म होत्सवविधानंभूषणानिचकारयामासेत्यन्वयः १५ १६ उपसंहरति स्मरन्निति कैवल्यं विदेहमुक्तिं अवाप्तवान् अन्योपि य

निर्माल्यंपाद्यजातानांशंभोर्दाससमर्पणं पठनंनृत्यगीतादेरालयालेपमार्जनम् ९ नित्यंशिवपुराणानांश्र वणंश्रावणंतथा पुष्पारामविधानंचचित्रवस्त्रसमर्पणम् १० रंभादाडिमजंबीरनारिकेलादिभूरुहां उद्यानवाटीरचनंतटाकरचनंतथा ११ शैवागमार्थश्रवणंतत्कोशानांचसंग्रहः निर्माणमंडपादीनांरथ वाहनकल्पनम् १२ कैंकर्यकारिणांनित्यंपोषणंदेहिनामपि अन्येषामेवमादीनांशिवप्रीतिविधायिनाम् १३ पालनंसर्वधर्माणांश्रीकर्मपरिकीर्तितं इत्यादिष्टःस्वगुरुणातथाचक्रेगणाग्रणीः १४ महोत्सवविधा नंचशिवयोर्भूषणानिच स्वधनैःकारयामासचान्यदत्तैश्चबोधनात् १५ अभून्यंगमयामासयावदायुर्ग णाग्रणीः देहावसानेदेवस्यप्रसादाद्गिरिजापतेः १६ स्मरन्गुरुपदांभोजंसकैवल्यमवाप्तवान् १७ इतिश्री स्कांदोपपुराणेभक्तविलासेचतुःषष्टितमोऽध्यायः ६४॥ ७ ॥श्रीअगस्त्यउ॰ दृढभक्तिमताशंभुःसेवितोवि जितारिणा प्रसन्नइहचामुत्रप्रदद्याद्देववांछितम् १ पुरंपुष्करनामास्तिप्रथितंभुवनत्रये तत्रासीन्नृपतिःश्री

येवंकरोतिसोपिविमुच्यते इत्यभिप्रायः १७ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्र काशिकायांचतुःषष्टितमोऽध्यायः ६४॥ ॥ ॥संप्रतिजितेंद्रियेणदृढभक्तिमतासेवितःशिवःलोकद्वयसुखमपिअवश्यंदास्यती

साह इरुइति १ पुरमिति परांतकमिति परेषांशत्रूणामंतकः अतएवतन्नाम्नाप्रसिद्धः जातआभूदित्यर्थः २ सइति स्त्रैणंस्त्रीसमूहः तृणंतृणतुल्यंधियायेनतुलितमित्यन्वयः अग्रेप्येवम् ३ अजन्मेति तस्यराज्ञः हरिध्वजंसिंहध्वजंदृष्ट्वा अरयइतिशेषः अकस्मात् अ

सधीराणांचवीराणांप्रथितोग्रेसरोभुवि स्त्रैणंतृणंधनंलोष्टंयेनासीत्तुलितंधिया ३ आजन्मसिद्धवैराग्योप्यासीत्क्षत्रियवृत्तिमान् रणेदृष्ट्वापलायंतेतस्याकस्माद्धरिध्वजम् ४ मृगराजमिवारण्येदूरेदृष्ट्वामहागजाः शत्रून्विद्राव्यनृपतिःव्याघ्रोमेषव्रजानिव ५ स्वविक्रमार्जितंदिव्यमध्युवासनृपासनं पुंडरीकपुरेस्थित्वासेवमानोनटेश्वरम् ६ कैंकर्यंबहुधातस्यवितन्वानपरांतकः तत्कैंकर्येणमुदितःचिदंबरसभापतिः ७ बभूवभक्तवात्सल्याद्वचःसामर्थ्यगोचरः स्वप्नेकदाचित्तंप्राहत्रिपुरारिःपरांतकम् ८ स्यात्किरीटाभिषेकस्तेजितापद्भवतामही इत्यादिष्टोमहेशेनतथाकर्तुमनोदधे ९ यज्वनोमेलयित्वाथपुंडरीकपुरेस्थितान् किरीटधारिणंयूयंविधत्तेत्याहभूपतिः १० तेतमूचुर्महात्मानश्चोलवंशपुरोहिताः वयंनास्यस्यमुकुटंदध्मइतिसंगताः ११ शंकितश्चस्वयंवोढुमभून्मौलौपरांतकः अथस्वप्नेनटेशानोमूर्ध्नितस्यमहीपतेः १२ न्यधत्तचरणद्वंद्वंतदभून्मुकुटंमहत् प्रातस्तंपूजयामासुर्यज्वानोविस्मिताशयाः १३ त्वमेवभक्तइत्युक्त्वातस्माद्विभुर्यथेश्वरात् महानटपदांभोजविन्यासमुकुटोज्ज्वलः १४ भोगान्भुक्त्वेहनृपतिःशिवसायुज्यमाप्तवान् १५ इतिश्रीस्कांदे

कारणादेवपलायन्ते ४ तुलयेतिमृगराजमिवेति ५ ६ ७ ८ ९ यज्वनइति विधिनेष्टवंतः मेलयित्वायूयंमामितिशेषः किरीटधारिणंमुकुटधारिणंविधत्तकुरुतेत्यर्थः १० तेइति अस्यअस्य ११ १२ १३ त्वमिति ईश्वरात् यथाशिवादिव १४ उपसंहरति भोगानिति १५

इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांपंचषष्ठितमोऽध्यायः ६५॥ ॥ ॥



संप्रतिमाहेश्वरसूत्रघटितव्याकरणव्यवसायादपिकालमृत्युमतीत्यमुच्यन्तइत्याह शब्दब्रह्मेति शब्दब्रह्मव्याकरणंतदेव सुधांबोधिः दुग्धसागरः तत्रवल्गातः चलतः तव्यासक्तस्येत्यर्थः चेतोमीनस्य चेतश्चित्तंतदेवमीनः तस्यसदाशिवध्यानं कालएवबडिशः

श्रीअगस्त्यउवाच शब्दब्रह्मसुधांभोधौचेतोमीनस्यवल्गातः सदाशिवपदध्यानंस्याकालबडिशापहम् १ अस्तिवेदपुरंनाम वेदागमविदांपदं नगरंयत्रविख्यातावाणीलक्ष्म्योःसहस्थितिः २ सत्यदासाव्हयस्तत्र द्विजानामग्रणीरभूत् शिवपादांबुजेभक्तिरासीत्तस्यैवसोदरी ३ त्रिसंध्यंपूजयंश्शंभुंवेदशास्त्रार्थपारगः आरराधगिरांदेवींमंत्रेणत्र्यक्षरेणसः ४ समर्चिताद्वादशवर्षैर्मीश्वरीगिरांप्रसन्नाशरदिंदुनिर्मला सासत्यदासंतमपाययत्पयःसमागतास्वप्नदशांतरेस्वयम् ५ सद्यःसमुत्थितस्यासीदमृतासारवर्षिणी लहरीवचसांशंभोःकपर्दादिवजान्हवी ६ सगुरुंप्रातरभ्येत्यस्वप्नवृत्तंनिवेद्यच वाचाजन्मफलंकिंस्यादित्यपृच्छन्महामतिः ७ सचसंतुष्टहृदयःशिष्यंप्राहपदानतं सत्यदासकृतार्थोसिजन्मतेचरमंध्रुवम् ८ चतुर्णामपिवेदानामागमानांचनिश्चितं तात्पर्यंशिवएवेतिमुनिभिर्ब्रह्मवादिभिः ९ स्तुहितस्मादुचैर्भिस्त्वंप्रसीदतुमहेश्वरः इत्याचार्ये

मीनबंधनजालंतदपहंतीतितादृशंस्यात् १ अत्रार्थेपुरावृत्तमवतारयति अस्तीतिवाणीलक्ष्म्योःपरस्परविरोधिन्योरपीतिभावः २३ त्रिसंध्यमिति त्र्यक्षरेणवाग्भवकामराजशक्तिकूटात्मकवर्णत्रयघटितेन मंत्रेणमननात्त्राणकर्त्रा बालात्रिपुरभैरवीमनुनेत्यर्थः ४ समर्चितेतिगिरामीश्वरी सरस्वतीसत्यदासं स्वप्नदशांतरेस्वयंसमागतासतीपयःविद्यामयंक्षीरंअपाययत् पाययामासेत्यर्थः

५ लघइति सम्युश्रितस्यस्वप्रादिति शेषः अमृतस्य आसारोधारासंपातः तंवर्षति तच्छीला ६ ७ ८ चतुर्णामिति सर्वेषां वेदांतानाम द्वैते ब्रह्मणि तात्पर्यमिति शिवमद्वैतं तुरीयं मन्यंते इतिश्रुतेश्चेतिभावः ९ १० उपसंहरति आवयइति आवयोरवधिचरमवयः समाप्तिपर्यंतमित्यर्थः सायुज्यं परमशिवाद्वैतं अवाप्तवान् प्राप्तवान् ११ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायां स्कांदोप पुराणव्याख्यायां भक्तविलासप्रकाशिकायां षट्षष्टितमोऽध्यायः ६६॥ ॥ ॥ अधुनायः शिवभक्तः परेषां शिवभक्तानां क

आवयोरवधि गौरीशं स्तुवन्सायुज्यमाप्तवान् ११ इतिश्री स्कांदोपपुराणे भक्तविलासे षट्षष्टितमोऽध्यायः ६६ ॥

श्रीअगस्त्य उ॰ यस्त्वयं शिवभक्तोपि शिवचिन्हभृतामपि नकदाप्यपराधः स्यादपराधे त्यजेदसून् १ राज्ञां चोलान्वय भुवां राजधानी महीयसी अस्यामोदपुरं नाम तत्राभूद्धर्मकेतनः २ भोगे शक्रसमो राजा त्यागे निधिपतेः समः योगे च क पिलप्रख्यः यामेष्वर्चितनिर्जरः ३ सनिर्जित्य दिशः सर्वा एकवीरो महीपतिः ईजे विश्वजिता देवं क्रतुना परमेश्वरम् ४ स्वमातुः कुलदेवस्य श्रीगोत्रस्थलवासिनः कैंकर्ये सुमहल्लुर्वञ्छिवभक्तानपालयत् ५ विंध्यपर्वतसंकाशा दिग्दंतिकुलसंभवाः सदामदमुचस्तस्य द्वार्यासन्द्विरदोत्तमाः ६ तस्यासंस्तरथाश्वीयसंख्यानं केन वर्ण्यते एतावत् ज्ञायते सर्वे मंदुरावि

दापि द्रोहं न करोति स यदि कदाचिदपराधे स्वयं प्राणांस्त्यजति सोप्यवश्यं मुच्यत इत्याह यद्विति १ इतिहासं प्रस्तौति राज्ञामिति राजधानी राजानो धीयन्ते यस्यामिति व्युत्पत्त्या प्रधाननगरी राज्ञां राजधानीति कथ्यत इति स्मरणाच्च राज्ञः सार्वकालिकनिवासस्थानमित्यर्थः धर्मकेतनः तन्नामको राजा २ भोगेइति यामेषु चतुर्षु प्रहरेषु अर्चिता निर्जरा देवा येन सः ३ सइति एकवीरः अद्वितीयशूरः ४ स्वेति श्रीगोत्रः श्रीशैलः तस्य स्थले वसतीति तच्छीलस्य ५ ६ तदिति पादातं पत्तिसमूहः अश्वीयं अश्वसमूहः मन्दुरा वाजिशाला ७

८ कदाचिदिति यन्त्राहास्तिपकेन ९ १० ११ १२ गच्छन्निति शृङ्खलानादेन सहितः १३ १४ शिवायेति चंद्रशालायां शिरोगृहे स्थितः



वेदमार्गरता विप्राः सायुधाः समरे भटाः दिशो जयंश्च सर्वत्र तस्मिन्भूमिं प्रशासति ८ कदाचित्तस्य मध्याह्ने पयः पाययितुं महान् यन्त्रानियुक्तो मत्तेभः प्रतस्थे सरितं प्रति ९ शिवदास इति ख्यातस्तदा कश्चिद्द्विजोत्तमः अवगाह्य महानद्यां घृतश्रीमज्जनोदकः १० धृतभस्मा सरुद्राक्षः कदलीपत्रसंपुटे कृत्वा बहूनि पुष्पाणि बिभ्राणो भक्तिमान्करे ११ प्रचचाल प्रतिगृहं महिम्नस्तुतिमुच्चरन् पार्श्वे तस्यो गजं दृष्ट्वा पथि यन्त्राप्रचोदितः १२ गच्छन्सशृंखलानादः तदा नृपतिकुंजरः कदलीदललोभेन हस्ताग्रादग्रजन्मनः १३ क्षिप्रं जहार हस्तेन ब्राह्मणश्च पलायितः तेनोपमर्दितेपत्रेपेतुः पुष्पाणि भूतले १४ शिवायेति वदंस्तानि द्विजो गान्निजमंदिरं चंद्रशालास्थितः सर्वमपश्यद्धर्मकेतनः १५ प्राप्तं मत्वा शिवद्रोहं छेत्तुमात्मशिवः करे दधार खड्गं सद्यो भूद्दिविवागशरीरिणी १६ पश्य पुष्पाणि तन्मौलौ त्वमनिमा साहसं कृथाः इत्याकर्ण्यालयं प्राप्य विलोक्य हरमूर्द्धनि १७ तानि पुष्पाणि तं विप्रममन्यत हरं परं स्वर्णपद्मसहस्रं च ददौ तस्य महीपतिः १८ गृहान्क्षेत्राणि धेनूश्च ददौ तद्दास्यभागभूत् गजं च तं महेशाय नित्यं श्रीमज्जनाय सः १९ सुवर्णकलशं वोढुं प्रददौ धर्मकेतनः तं नंदिकेशमपरं प्रोचुर्भक्त्या नृपं जनाः २० क्षांतो दांतो महावीरस्तथा जगदपालयत् तस्यैवं वर्त्तमानस्य सुमहान्समयो ऽत्यगात् २१ मेदिनीं राजधर्मेण रक्षतो भक्तसेविनः गिरिदुर्गाणि तं किंचिद्द्विजेतुं विद्विषं निजम् २२ चोदयामास सेनाभिः सह

धर्मकेतनो राजा १५ प्राप्तमिति स्वकीयगजेन कृतं शिवद्रोहं स्वगतं मत्वेत्यर्थः अशरीरिणी दिव्या वाक् १६ १७ १८ १९ २० २१ २२ २३

२४ २५ २६ क्रमेणेति जटान्वितं कं शिरः २७ स सर्वे विदिति अत्रापि पूर्ववत् स्वसेनापतिकृतं तापसशिरश्छेदरूपं स्वकीयं मत्वा आत्म
शीर्षत्यागेन निजशिरश्छेदेन निष्कृतिं प्रायश्चित्तं २८ २९ ३० ३१ इति श्रीमानवल्युपनामकनृसिंहविरचितायां स्कंदोपपुराणव्या

शिरांसि मौलिजुष्टानि सहस्रमनपद्विषाम् आनीतशत्रुवदनं गृहीतरिपुमोजसा २४ स्वसेनापतिमायातमा
लिलिंग मुदा नृपः तदा भक्तपरीक्षार्थे हरः कौतुकमादधे २५ छिन्नशीर्षो नरेकं चिच्चकार जटयाचितं ततः संद
र्शयामास छिन्नशीर्षाणि सप्रभोः २६ क्रमेण पश्यन् राजापि ददर्शैकं जटान्वितं २७ आः पापकिंवा विहितं त्वयेति
निर्भर्त्स्यं सेनापतिमीशभक्तः स सर्व विन्निष्कृतिमात्मशीर्षत्यागेन मेने दुरितस्य तस्य २८ दत्वा धनानि विप्रे
भ्यः सुतं राज्येभिषिच्य च अग्नौ संवर्द्धिते राजा प्रवेष्टुं स्वयमुद्यतः २९ मौलौ निधाय तच्छीर्षमग्निकुंडांतिकं य
यौ अंतर्हितं तदा शीर्षे राजा विस्मितमानसः नैवापश्यत्तदाद्राक्षीद्वृषभारूढमीश्वरम् ३० प्रणम्य प्रांजलिर्हृष्टः
तुष्टाव परमेश्वरं दत्वा कैवल्यमेतस्मै सद्यः शंभुस्तिरोदधे ३१ इति श्रीस्कांदोपपुराणे भक्तविलासे सप्तषष्टितमो
ऽध्यायः ६७ ॥ ॥ श्रीअगस्त्य उ॰ पतितः कितवो वापि भस्मांकितमुखो यदि शिवप्रसादमिच्छद्भिः सपूज्यः शंभुव
द्भवेत् १ अस्ति भाग्याकरं नाम पुरं भूतलभूषणं श्रीविहारालये यत्र नासीत्कुत्राप्यकिंचनः २ प्रतापसूर्यनामाभूत्तत्र रा
जा महीपतिः यत्कुलद्रूयजालानां दैवतं परमं शिवः ३ बाल्य एव जिताशेषसामंतः सर्वधर्मवित् शिवभक्तान्नदानेन धर्मपर

ख्यायां भक्तविलासप्रकाशिकायां सप्तषष्टितमोऽध्यायः ६७ ॥ ॥ ॥ संप्रति धूर्तपतितादीनपि भस्मधारिणः पूजयतः शिवभ
क्तस्य शिववत्पूज्यता भवतीत्याह पतित इति १ पुरावृत्तं प्रस्तौति अस्तीति अकिंचनो दरिद्रः २ प्रतापेति कुलद्रूयं मातापित्रोः तत्र

व्यंजनैरिति व्यंजनैः शाकसूपादिभिः प्रतिश्रयाणां अन्नशालानां सहस्राणि ५ तत्रेति चतुःषष्टिसमाः वर्षाः ६ ७ आसंगवमिति सूर्योद यानंतरं षड्घटिकापर्यंतं प्रातःकालः ततो द्वादशघटिकापर्यंतं संगवकालः तावत्पर्यंतं रसंपानकं ८ ९ १० ११ १२ द्विजइति पल्लवि



व्यंजनैः षड्रसोपेतैः शिवभक्तानभोजयत् प्रतिश्रयसहस्राणि मार्गे मार्गे च कारसः ५ तत्राधिकारिणं कृत्वा पांथानाम न्नदो भवत् वर्त्तमानस्य तस्यैवं चतुःषष्टिसमाययुः ६ एकदासीदनावृष्टिः सर्वप्राणिभयंकरा तस्यान्नदातुर्नगर माययुः सकला जनाः ७ आसंगवं नृपस्तेषां रसं दिव्यं यथेप्सितं ददावन्नं च सर्वेभ्यो धारयामास भस्म च ८ जना द्वादशसाहस्रसंख्याताः प्रतिवासरं आ द्वादशाब्दं बुभुजुस्तद्दत्तघृतभूतयः ९ तेन प्रीतः शिवः स्वप्ने तस्य पप्रच्छ कामितं त्वया भोक्तव्यमागत्य पंक्तिमध्ये द्विजन्मनाम् १० इतीशं याचते स्मायं स तथेति तिरोदधे अथ सुप्तोत्थि तो राजा स्मृत्वा स्वप्नस्य वैभवम् ११ दधार गात्ररोमांचं भक्त्या परवशोऽभवत् अथ मासत्रये तीते मध्याह्ने गिरि जापतिः १२ द्विजः पल्लविको भूत्वा तद्गृहद्वारमाययौ श्रोत्रियाणां द्विसाहस्रं तस्य पंक्तौ निवेशितम् १३ नखक्षतांकितं पार्श्वे मध्ये दंतक्षताधरः लाक्षावीटिरसांकेन सहरिद्रेण वाससा १४ आवृतो गजकृत्येव मृष्टार्द्धतिलकोलिके भस्मोद्धूलीकृतांलेखामाविभ्राणो मुखांतरे १५ खादंस्ताम्बूलकवलमपांगेक्षन्नतस्त नीं आलोकयन्जन्हुसुतां वहन्पर्युषितस्रजम् १६ पप्रच्छान्नं किमस्तीति गिरा गंभीरया किल प्रतापसूर्यस्त

कोविदः १३ नखेति सहरिद्रेण हरिद्रासहितेन १४ आवृत्त इति गजकृत्येव गजचर्मणेव स्थितेनेत्यर्थः अलिके भाले मृष्टं मार्जितं अ र्द्धतिलकं येन मुखान्तरे मुखमध्ये १५ खादन्निति जन्हुसुतां जटास्थितां गंगामित्यर्थः पर्य्युषितस्रजमुपभुक्त पुष्पमालाम् १६ १७

सइति अग्रजन्मनां ब्राह्मणानांमध्येतेषामेवविशेषणं वैश्वानरंस्तुवतामिति अहंवैश्वानरोभूत्वेतिमन्त्रेणेतिभावः १८ १९
२० २१ भुज्यतामिति ईर्ष्या अक्षमातया सहितं यथातथापश्यंतीति सेर्ष्यंदृशः २२ २३ २४ २५ २६ २७ २८ २९ इतिश्री

सतंप्रवेशयामासपंक्तिमध्येद्विजन्मनां मध्येवैश्वानरंदेवंस्तुवतामग्रजन्मनाम् १८ श्रृंगारस्येवलहरीत
स्याभूद्वैखरीगिरां अपाङ्गेयोयमायातइत्यपश्यन्मिथोद्विजाः १९ निवेशयित्वास्वस्थानेपादौप्रक्षाल्यभूप
तिः आनर्चचंदनैःपुष्पैःनृपतिर्धूर्तशेखरं २० राजभार्यातुतस्यान्नंसक्षीरंपर्यवेषयत् अथराजाददौहस्तेपी
तस्तोयंसुशीतलम् २१ भुज्यतामितिचोवाचद्विजास्सेर्ष्यदृशोभवन् मायाधूर्तोनृपंप्राहदध्यानश्चोदकंक
रे २२ ममप्रियतमादासीद्वारितिष्ठतिभूपते अत्रसाहूयतामस्तुतयामेसहभोजनम् २३ इत्युक्तेधिग्धिगि
त्यूचुर्जोत्यंधाब्राह्मणास्तथा राजासद्यःस्मृतस्वप्नः दासीमानयितुंक्षणात् २४ सयावदगमद्द्वारंतावदीशस्तिरोद
धे द्वारेदासीमनालोक्यद्विजपंक्तिमुपागतः २५ दृष्ट्वातिरोहितंदेवंबभूवव्यथिताशयः विप्रानिनिंदुःस्वात्मा
नंकर्माधाद्रोहकारिणः २६ अथराजाचभार्याचप्राणत्यागकृतोद्यमौ हस्तेथदधतुःखड्गमाविरासीदथेश्व
रः २७ राजादृष्ट्वावृषारूढंसोमास्कंदगजाननं देवंपशुपतिंराजाक्षमस्वेत्यनमत्सदे २८ अथप्रीतमनाःशंभुस्सयमा
नःसहोमयामुक्तिंदत्वासभार्यायतस्मैसद्यस्तिरोदधे २९ इतिश्रीस्कांदोपपुराणेभक्तविलासेऽष्टषष्टितमोऽध्यायः ६८॥छ॥

मानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांअष्टषष्ठितमोऽध्यायः ६८॥छ॥ ॥संप्र
तिशिवायअनेकप्राणिसमर्पणंनियमेनकुर्वतोनीचस्यापिमुक्तिर्भविष्यतीत्याह जीवेति इन्दुकलाधरायशिवायजीवानांप्राणि

नांउपहारंसमर्पणंकुर्वन् अन्तःचित्तेशिवमितिशेषःस्मरन् जात्याहीनोपियोवसतिसकर्मबंधेनविमुक्तोभवतीत्यन्वयः १पुराद्दत्त
मवतारयति अस्तीति २यत्रेति तरिव्रजैः देशांतरस्थवणिगाधारनौकासमूहैः आनीताइतिभावः तत्रस्थानांरत्नपरीक्षाया मतिनिपुण-
त्वात् ३ वणिगिति वणिजांकरेषुयन्मधूच्छिष्टंसिक्थकंतन्मध्येकनकरेणवःनिकषोपलनिघृष्टकनकरेखा संघट्टनेन लग्नाइतिभावः
प्राकृतलयेकार्यस्यकारणे लयनियमात् सर्वंवैकारिकंजगत् अव्यक्तेलीयतइतिसांख्यानुरोधेनोपमिनोतिप्रकृताविति ४ स्व-



हीनोपिजात्यावसतीहयस्तुसकर्मबंधेनभवेद्विमुक्तः १ अस्तिनागपुरंनामकुबेरनगरोपमं विख्यातंविपुलो
केषुप्रतीरेपूर्ववारिधेः २ यत्रांगणेषुवणिजांपरीक्षायैदिनेदिने राशयोनवरत्नानांप्रसार्यंतेतरिव्रजैः ३ वणि
करमधूच्छिष्टमध्येकनकरेणवः निलीयंतेन्वहंयत्रप्रकृतौदेहिनोयथा ४ स्वर्णानिरजतान्यासन्निष्टत्ताय
त्रपांसवः तत्रकश्चनकैवर्तःपूवाख्यःशफरांतकः ५ बडिशैरपिजालैश्चयत्कृत्यंमीनवेधनं कदाचित्त्याग
राजस्यप्रवृत्तेफाल्गुनोत्सवे ६ जनारथोत्सवंद्रष्टुंजग्मुर्नागपुरस्थिताः पूवोपिसहतैर्गत्वानिषेव्यपरमेश्वरम्
७ कमलालयसोपानमपरात्क्षेययौक्वचित् तत्रानचैद्विजःकश्चित्सोपानेपरमेश्वरम् ८ तदानींशफरःकः
श्चिन्निर्माल्याक्षतमंभसि जक्षतिस्मपरित्यक्तंपूवोजग्राहतंकरे ९ ॥

र्णानीति पांसवःपार्थिवरेणवःपृथिव्यारंभकानांरेणूनांतेजोजनकता देशमाहात्म्यादितिज्ञेयं तत्रनगरेकैवर्तोमत्स्योपजीवी शफ
रामीनाः ५ बडिशैरिति यस्यपूवाख्यस्यकृत्यंबडिशैःमत्स्यबंधनैर्जालैरानायैश्चमीनानांवेधनंआसीदितिशेषः ६ जनाइति रथो
त्सवंवार्षिकंपरंपराप्राप्तदिवसेक्रियमाणं ७ कमलेति कमलालयस्यतन्नामकशिवप्रासादस्यसोपानमवरोहणं ८ तदानीमिति

दृष्ट्वेति रूपं मत्स्यं धीवरः पूर्वाख्यः १० किमिति स धीवरः तं द्विजं द्विजः तेन पृष्ट इत्यर्थः जात्या अनयैव त्वं तत् असि ब्रह्मासि ॐ तत्सदि
तिनिर्देशो ब्रह्मणस्त्रिविधः स्मृत इति वचनात्तच्छब्दस्य ब्रह्मपरत्वं स्पष्टमेव असीति वर्त्तमानसामीप्ये भविष्यसीत्यर्थः अनेन तत्त्वम
सीति महावाक्यमपि पर्यायेणोपदिष्टमिति वेदितव्यं दाशसंभवं लवं अहिंसा परमो धर्म इति श्रुतेर्ब्रह्मज्ञानस्य द्विजाधिकारत्वेपि

दृष्ट्वागस्य द्विजस्तूर्णं मोचयामास तं रुषं त्यक्तमीनो द्विजं प्राह धीवरः संहताञ्जलिः १० किं मीनमोचनफलं ब्रूहीति त
मुवाच सः जात्या तत्त्वमसीत्यूचे द्विजस्तं दाशसंभवम् ११ द्विजो भस्म प्रदायास्मै न धर्मो मीनबन्धनं तथापि म
द्गिरा मीनं मुक्तवान्यदुवान ततः १२ त्यागेश्वरप्रसादोऽस्त्वित्युक्त्वा स्वभवनं ययौ तदारभ्य पूर्वो नित्यं सिंधौ वि
स्तार्य जालकम् १३ गृह्यमाणेषु मीनेषु शिवायेति रूपोत्तमं परित्यजन्सजीवं तं नित्यं नियमवानभूत् १४ परि
हासाय तं प्रोचुरिति भक्तश्च जालिकाः एवं नियमयुक्तस्य ययुः संवत्सरा दश १५ पतंत्यनुदिनं तस्य दूरे विच
रतोऽर्णवे जाले प्रक्षिप्तमात्रे तु शफरौघाः सहस्रशः १६ संक्षिप्य जालकं मीनं सजीवं वरमेककं मुक्त्वा
यमस्तु देवायेत्युज्झति स्म रुषान्तकः १७ मीनविक्रयसंपन्नं ववृधे तद्धनं बहु अतिभक्त इवाढ्योऽयमित्या
सीदुपमा लवः १८ भक्तिं परीक्षितुं तस्य शंभुः कौतुकवानभूत् अथैकस्मिन्नेव सायमेक एवास्य जालके १९

धार्मिकत्वगुणेन तदुपदेशाधिकार इति भावः ११ द्विज इति न धर्मः निजजातिधर्मो न भवतीत्यर्थः १२ १३ १४ परिहासायेति जालिकाः
अन्ये धीवराः तं लवं भक्तमिति प्रोचुरित्यन्वयः १५ पतंतीति अर्णवे दूरं विचरतस्तस्येत्यन्वयः १६ संक्षिप्येति सः पूर्वः जालकं संक्षिप्य सं
गृह्य १७ मीनेति अयं पूर्वः अतिभक्त इव आढ्योपि आसीदिति भक्त्याढ्यत्वयोरुपमा आसीदिति मध्यमणिन्यायेन संबंधः १८ १९

दिवसेइति दिवसेसर्वेस्मिन्निति भावः अलब्धमीनस्य २० २१ जालकमिति समं युगपदेव २२ आकर्षणइति सपूर्वः नौभिः निजाति कचरान् स्वसमीपचारिणः जालिकान् अन्यान् आकर्षणार्थमिति भावः आजुहाव आहूतवान् २३ २४ २५ २६ स्पर्द्धमानेष्विति



दिवसेलब्धमीनस्यजालेमीनोऽपतन्महान् दृष्ट्वैकंधीवरोधीरःशिवायेतिमुमोचतम् २० प्रीतस्तेनाभवच्छंभुःस र्वसाक्षीमहेश्वरः अथापरेद्युरुषसिक्षिप्तमेतेनवारिधौ २१ जालकंन्यपतत्तत्रमत्स्यानामयुतंसमं स्वर्णमी नश्चसुमहानेकःशंकरमायया २२ आकर्षणेसजालस्यनाशक्तोदुर्द्रुभारतः निजातिकचरान्नौभिराजुहा वसजालिकान् २३ अस्माकमर्द्धमत्स्यानामस्त्वेकंपार्वतीपतेः उत्तमंपरमंतेपीत्युक्तानेतुंसमागताः २४ धी वराश्चकृषुर्जालंनिम्नुःसिंधोस्तटंशनैःहि रण्यमीनमालोक्यदाशाहर्षययुस्तदा २५ अविभक्तोगृहीत्वातं सहजीवंमहार्णवे विसृज्यास्तुशिवायेतिनियमंपर्यपालयत् २६ स्पर्द्धमानेषुदाशेषुदेहितंनि ष्क्रयंत्विति तेभ्यःस्वार्धंददौधीमान्धीवराणांशिखामणिः २७ तदाप्रादुरभूत्तत्रगौर्यासहमहेश्वरः प्रणतस्यददौमुक्तिं पुनर्भवभयापहाम् २८ इतिश्रीस्कांदोपपुराणेभक्तविलासेएकोनसप्ततितमोऽध्यायः ६९॥ ॥ ॥श्रीअग स्त्यउवाच भस्मरुद्राक्षभाजांयेपदांभोजावनेजनं कुर्वंतिस्वयमेवेहतेषांनास्तिपुनर्भवः १ अस्त्येकंनगरंभूमौ प्रथितंकलशाह्वयं पुण्यंधामपुरारातेःपुरुषैःसद्भिराश्रितम् २ तत्रमानधनोनाममहानासीन्महीपतिः उद्वेजय

तस्यस्वर्णमीनस्यनिष्क्रयंमूल्यंदेहीतिस्पर्द्धमानेषुकलहायमानेषु २७ २८ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोप पुराणव्याख्यायांभक्तविलासप्रकाशिकायामेकोनसप्ततितमोऽध्यायः ६९॥ ॥ ॥संप्रति शिवभक्तपादप्रक्षालनफलंप्रस्तौति॥

भस्मेति अवनेजनं क्षालनं १ कथामुपक्रमते २ ३ ४ श्रुत्वेति श्रोतव्यो मंतव्य इति क्रमेण निदिध्यासनांतं कृत्वेत्यर्थः पर्यवसितं स
र्वेषां वेदांतानां अद्वैते ब्रह्मणि तात्पर्यमिति निखिलजगन्निषेधाधिष्ठानतया निश्चितं ५ त्रिकालमिति ब्रह्मण्यो ब्रह्मसुसाधुः ६ ७ ८

धर्मेण पालयामास धरणीमंडलं नृपः जन्मकोट्यर्जितैः पुण्यैस्तस्य भक्तिः शिवेऽभवत् ४ श्रुत्वागमपुराणार्थान्
सपर्यवसितं शिवे भक्तियोगं दृढतममुवाह गिरिजापतौ ५ त्रिकालमर्चयन् शंभुं ब्रह्मण्यो ब्रह्मवित्प्रियः स्व
देशस्थान् जनान् सर्वानप्यशासच्छिवार्चने ६ ये जपंति न पंचार्णं रुद्राध्यायं न ये द्विजाः उद्धूलनं त्रिपुंड्रं वा ध्रि
यते ये न भस्मना ७ येन विभ्रति रुद्राक्षं तेषां निष्कासनं भवेत् एवमुद्घोषयामास भेर्या दिक्षु स सर्वतः ८ राज
भीत्या जनाः सर्वे शिवभक्तिकृतस्तदा नृपं मानधनं नत्वा कंपमानतनुः कलिः ९ ययौ च सांजलिर्भूत्वा स्थानं
कचिदिहात्मनः यस्य भक्तिः शिवे नास्ति स तं तत्स्थानमादिशत् १० अलक्ष्मीः कलहः कामः क्रोधश्चाप्यनृ
तं यतः तदारभ्याभवद्राजा कलिं कंपाहृयः क्षितौ ११ नित्यव्रतमभूत्तस्य भक्तपादावनेजनं ये समायांति मध्या
ह्ने तत्पादाब्जावनेजनम् १२ सुगंधिशीतलैर्जलैः कृत्वा भोजयति स्म तान् वर्तमानस्य तस्यैवं ययुर्द्वादश वत्सराः १३
परीक्षितुमनास्तस्य भक्तिमासीन्महेश्वरः स पंचवार्षिको भूत्वा द्विजबालो धृतव्रतः १४ मध्ये राजगृहे भोक्तुमागतानां
महात्मनां आतिष्ठदथ मध्याह्ने भास्वद्भस्मत्रिपुंड्रकः १५ पृष्टः कस्त्वं कुतश्चेति द्विजैर्नोवाच किंचन कर्तुं चावसरे प्राप्ते
द्विजपादावनेजनम् १६ निर्ययौ नृपतिः श्रीमान् भार्या च तमनुव्रता हेमपात्रकरा तोयं ददाना तत्र साभवत् १७ द्विजेषु

राजेति भक्तिं कुर्वंतीति ते भक्तिकृतः ९ १० अलक्ष्मीरिति यतः यस्मिन्देशे एते पूर्वोक्ताः संति तत्स्थानं तं कलिं प्रत्यादिशदिति पूर्वेणान्वयः ११

१२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ इतिश्रीस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांसप्ततितमोऽध्यायः ७०॥ ॥ ॥संप्रतिशिवसन्निधौघृततैलादिदीपाराधनप्रस्तुस्वपूर्वंकथामवतारयति अस्तीतिजन्मरोगस्य जन्मैवरोगइतिरूपकम् जन्मपदंमरणस्याप्युपलक्षणं तेनजन्ममरणप्रवाहरूपसंसारस्येत्यर्थोलभ्यते जातस्यहिध्रुवोमृत्युरित्यादिस्मृतेः तस्यभिषजः चिकि

इतिपृष्टेननृपतिनामायावालोवदन्नृपं राजन्मेपितरौनस्तःकुलंवेद्मिनहिक्वचित् १९ संस्कारोमेकथंकार्यःकिमे तैस्तेवचःशृणु नाहमभ्यर्थयेकन्यामन्नंमेदीयतेनवा २० एवंबालस्यवदतःपादप्रक्षालनोद्यतं हस्तेगृहीत्वाभर्ता रंन्यरुणद्राजवल्लभा २१ सद्यःप्रकुपितोराजाखड्गमादायतत्करं चिच्छेदतावद्भगवान्सहगौर्योग्रतोभवत् २२ स्तुतस्ताभ्यांवृषारूढोदत्वामुक्तिंतिरोदधे २३ इतिश्रीस्कांदोपपुराणेभक्तविलासेसप्ततितमोऽध्यायः ७० ॥ श्रीअगस्त्यउ॰ अस्त्याधिशमननामनगरंलोकविश्रुतं जन्मरोगस्यभिषजःप्रियंधामपिनाकिनः १ कलिनीति रितिख्यातोनाम्नाभूच्चक्रिणांप्रभुः सपुराणेषुशुश्रावदीपारोहणवैभवम् २ शंकरालयमासाद्यतत्रत्यःप्रतिवा सरं दीपान्पंचशतंतैलैर्घृतैःपंचशतपरान् ३ कुर्वन्दिवानिशंभक्त्यासिषेवेसमहेश्वरं तैलप्रदीपामध्यान्हेतूल वर्त्तिषुजज्वलुः ४ तंतुवर्त्तिषुशुद्धासुघृतदीपास्तथानिशि दिवापंचशतंरात्रौदीपाःपंचशतंकृताः ५ तेनसंशोभया मासंसंनिधिंचांद्रशेखरं दीपानेवंददानस्यतस्यसप्तसमाययुः ६ शिवोभक्तिपरीक्षार्थंतस्यदारिद्र्यमादिशत् मितंपचस्स

सकस्यनाशकस्येत्यर्थः परमोदैव्योभिषगितिश्रुतेः पिनाकिनः शिवस्यप्रियंधामेति नगरविशेषणं १ कलीति चक्रिणांकुला लानां २ ३ ४ ५ तन्विति चांद्रशेखरं शैवंसंनिधिंप्रासादमित्यर्थः शोभयामास ६ शिवइतिमितंपचोदरिद्रः ७ ॥

तदिति अत्यवाहयत् अतिवाहयामास ८ ९ १० लब्धवानिति रोदिषि रोदनं करोषि किमर्थमिति शेषः ११ १२ हसन्निति निजासृजा स्व
रुधिरेण १३ कुर्विति तथा निजकर्णं छित्त्वा तद्रुधिरेणेत्यर्थः १४ १५ अत्रैव कथांतरमुपक्षिपति अभूदिति जघन्यजः शूद्रः १६ १७ कर्तै

तद्द्रव्यैर्विविधैर्दीपान्वर्षमात्रं गतं तथा विक्रीय भार्याभरणं षण्मासानत्यवाहयत् ८ अक्षतं च व्रतं तस्य तादृशं
पशुविक्रयात् तपःसाधनवित्तेषु गतेषु विलयं पुरे ९ याञ्चालब्धेन तैलेन मासं व्रतमपालयत् तथैकस्मिन्दिने का
पि न तैलं घृतमेव वा १० लब्धवान्सन्निधौ शंभोः कुलिनीतिस्तदारुदत् तदा कश्चित्खलो भूत्वा हरः पप्रच्छ रोदि
षि ११ निमित्तं व्रतभंगस्य तत्रोक्त्वा कारणं पुनः उच्चैः स्वरेण चुक्रोश रक्ष भग्नव्रतं त्विति १२ हसन्खलोपि तं प्राह रो
दनेनात्र किं भवेत् यदि भक्तिर्दृढा शंभो छित्त्वा कर्णं निजासृजा १३ कुरु दीपानित्युवाच मुहुर्मौलिं प्रकंपयन् तदा
कार्यं तथा कर्तुमुद्यते स्मिन्महेश्वरः १४ आरूढवृषभः साक्षात्सहगौर्या प्रसन्नया भक्ताय तस्मै सायुज्यं प्रदायेश
स्तिरोदधे १५ अभूद्ब्रह्मपुरे कश्चिच्छक्तिनामा जघन्यजः स शिवे भक्तिमाधाय शिवस्तुतिपरोभवत् १६ आसीदे
वं व्रतं तस्य दृढभक्तिमतः शिवे वेदवैदिकवेदांतशिवदूषणवादिनाम् १७ कर्तास्मि रसनाच्छेदमिति हेतिं दधौ क
रे तद्भयान्नगरे सर्वे स्तुवंतः परमेश्वरम् १८ बभूवुर्हतपाप्मानः क्रोधपीतामृता इव अथ शक्तिः प्रसादेन शंभोर्ब्रह्म
पुरेशितुः १९ पुनर्भवक्लेशहरं धाम शांकरमाप्तवान् २० इति श्रीस्कांदोपपुराणे भक्तविलासे एकसप्ततितमोऽध्यायः ७१॥

ति रसनाच्छेदं जिह्वाच्छेदं कर्तास्मि करिष्यामि इति निश्चित्येति शेषः हेतिं खड्गं १८ १९ पुनरिति पुनर्भवक्लेशहरं संसारदुःखनाशकं शांक
रं धाम मोक्षमित्यर्थः न स पुनरावर्तते यद्गत्वा न निवर्तंते इत्यादिश्रुतिस्मृतिभ्यः आप्तवान् प्राप्तवान् २० इति श्रीमानवल्युपनामक

नृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां एकसप्ततितमोऽध्यायः ७१॥ ॐ ॥

संप्रति चित्तैकाग्र्येण नित्यं शिवं स्तुवतः नीचस्यापि शिवस्वरूपता भवति इति वक्तुं इतिहासमुपक्रमते अन्विति कंपानाम्नी नदी तस्या
स्तीरं तटं तस्मिन्नित्यनुकंपातीरं कांचीपुरं प्रसिद्धं तस्य पर्यंते समीपे या अटवी तस्याः कोटौ अग्रभूमौ घोषसहस्रस्य आभीरपल्ली
सहस्रस्य नायकः १ वल्लवेति वल्लवान्वये आभीरवंशे संभूतः २ गुरोरिति करणानामिंद्रियाणां ओघं समुदायं अचालयन् जितें
द्रियः सन् ३ निधायेति आशये चित्ते गंगा च चंद्रार्द्धं च भोगींद्राः सर्पाश्चेति द्वंद्वः तेषां दाम्ना मालया नद्धः बद्धः जटाभरो यस्य तं ४ भा

श्रीअगस्त्यउ॰ अनुकंपानदीतीरमस्ति कांचिपुरं किल तत्पर्यंतारण्यकोटि घोषसाहस्रनायकः १ वल्लवान्वयसंभूतो
नंदगोपालजो यथा सिद्धेश्वरप्रसादेन लेभे पंचाक्षरीं च सः २ गुरोर्निदेशाद्दीप्तो सोकरणौघमचालयत् विरक्तः सर्व
भोगेभ्यो गोपानां राज्यमात्मजे ३ निधाय शंभोः श्रीमूर्त्तिं दध्यौ सततमाशये गंगाचंद्रार्द्धभोगींद्रदामनद्धजटाभरम्
४ भास्वत्तृतीयनयनं फणिकुंडलमंडितं सोमसूर्याग्निनयनं मंदस्मितमुखांबुजम् ५ कपालमालाभरणं का
लकंठं चतुर्भुजं वरशूलाभयैणांकं नागयज्ञोपवीतिनम् ६ भस्मोद्धूलितसर्वांगं भास्वद्व्याघ्राजिनांबरं शिं
जानमणिमंजीरपरिष्कृतपदांबुजम् ७ अंबालंकृतवामांकमवाङ्मानसगोचरं मनसा विषयी कुर्वन् स
पंचेंद्रियवृत्तिना ८ पंचपादद्युतिं प्राप प्रथां भक्तजनाग्रणीः पुंडरीकपुरे स्थित्वा स्तुवन्नित्यं महेश्वरम् ९ ९

स्वदिति भास्वत्प्रकाशमानं तृतीयनयनं यस्य तं ५ कपालेति वरश्च शूलं च अभयं च एणो हरिणश्च ते क्रमेण चतुर्भुजेषु
अंकाः चिन्हानि यस्य तं ६ ७ अम्बेति अम्बया उमया अलंकृतो वामांको यस्य तं अवाङ्मनसगोचरं यतो वाच इति श्रु
तेः सपंचेंद्रियवृत्तिना चक्षुरादिपंचेंद्रियव्यापारसहितेन मनसा विषयी कुर्वन् ध्यायन्नित्यर्थः ८ ९ ९ ९ ९

नटेश्वरेति नटेश्वरस्य सभापतिसंज्ञकस्य शिवस्य प्रसादेन शिवभूयं शिवत्वं कथांतरमुपक्षिपति अस्तीति १० गणइति एतस्य गणनामक
स्य ११ १२ शिवेति दीपसाधनस्य शैलाढ्यस्य कर्पूरपर्वस्येत्यर्थः १३ कालेइति शुष्कस्य उलपोघस्य वल्वजतृणसमुदायस्य स्तंबा

नटेश्वरप्रसादेन शिवभूयमुपागमत् अस्ति श्वेतनदीतीरे पुरं परिमलाह्वयम् १० गणो लवइति ख्यातस्तत्रा
सीच्छंकरप्रियः त्रिपूरुषा अप्येतस्य शिवभक्ता महत्तराः ११ श्रुत्वा शिवपुराणेषु शिवकैंकर्यवैभवं दीपान्
नुदिनं शंभोः स्वकीयैरकरोद्धनैः १२ शिवप्रसादान्निक्षेपमुपलभ्य महाधनः दीपसाधनशैलाढ्यक्रयार्थे
सर्वमादिशत् १३ कालेभक्तिपरीक्षार्थं शंभुना निर्धनीकृतः शुष्कोलपौघस्तंबानां शतेन शतदीपिकाः १४
प्रत्यहं व्यतनोदग्रे देवस्यासीद्गणो लवः त्रिवर्षं गमयामास तत्पुरेश्वरसंनिधौ १५ अथ प्रावृषिकस्याचिच्छु
ष्कोलपमनाप्य सः अग्निप्रज्वलितैः केशैः स्वकीयैर्दीपमादधे १६ गौर्या सह वृषारूढः प्रादुर्भूतस्तदा हरः
प्रादात्तस्मै सायुज्यं सह तेन तिरोदधे १७ श्रीअगस्त्यउ॰ अविकारीति कोप्यस्ति करकाख्यपुरे वसन् कवि
ताविद्यया राज्ञः स्तुत्वा निशामगाद्धनम् १८ प्राकारगोपुरादीनि श्रीकर्माणि पिनाकिनः विधाय तत्प्रसादेन शिवभूयं
गतोभवत् १९ श्रीअगस्त्यउ॰ राजा पांड्योभवत्कश्चिदभिरामइति श्रुतः विजितारिः स्तुतयशाः सदा विद्वज्जनैरभूत्
२० तृतीयतनयं देव्याः पूजयित्वासनादिभिः ज्ञात्वा तदुपदेशेन शिवतत्वं परात्परम् २१ ममतां ममतिं देहे विसृज्य विमलां
नरः सदाशिवप्रसादेन सह कैवल्यमापवान् २२ इतिश्रीस्कांदोपपुराणे द्विसप्ततितमोऽध्यायः ७२

नां तृणकांडानां शतेन १४ १५ १६ १७ अन्यां कथां वर्णयति अविकारीति १८ १९ कथांतरं वर्णयति राजेति २० तृतीयेति दे
व्याः तृतीयतनयं प्रागुक्तं हरदत्तनामकं भक्तविशेषं २१ २२ इतिश्रीमानवल्युपनामकनृसिंहविरचितायां स्कंदोपपुराणव्या

ख्यायांभक्तविलासप्रकाशिकायांद्विसप्ततितमोऽध्यायः ७२॥ ७॥ ॥मायूरेति तन्नामकक्षेत्रे १ २ सइति अंभएवजलमेव



श्रीअगस्त्यउ· मायूरेनिर्वेयानामभक्तः कोपिशिवप्रियः जघन्यवर्णजः शंभुंमनसासमपूजयत् १ संनिधोसकुटीं कृ
त्वाप्यालयस्याविदूरतः जपन्हृदैवपंचार्णभस्माजिनजटाधरः २ सोन्वहंसायमेवांभःपिबन्प्रसृतिसंमितं आद्वाद
शाब्दमीशेनसंसाराब्धेरमुच्यत ३ श्रीअगस्त्यउ· विशालाख्येपुरेकश्चिन्मानदोनामपादजः शूराणामग्रणीरा
सीत्अंबिकापतिभक्तिमान् ४ राज्ञःसेनापतिर्भूत्वानरसिंहाह्वयस्यसः सप्तकोटिधनंप्राप्यशिवभक्तानपालय
त् ५ गृहक्षेत्रांबराराममकन्याभूषणवाहनैः संपूज्यब्राह्मणान्शंभोर्भक्तान्मुक्तिमवापसः ६ श्रीअगस्त्यउ· अथा
टवीकानाथस्यसिंहाह्वस्यमहीपतेः वर्णयामिचरित्रंहिविचित्रंशृणुतद्विजाः ७ वल्लवानामधिपतिःसिंह
कोनामभक्तिमान् शिवपादाब्जयोर्नित्यंशिवभक्तजनप्रियः ८ ताराद्रुवशशांकस्यभार्यास्तस्याभवन्छतं अ
नपत्योनरपतिस्ताभिःसार्द्धमुमापतेः ९ स्थलेषुविचरन्भूमौप्रख्यातेषुसुतेच्छया श्रीपुरंप्रापसिंहाह्वोयत्र
त्यागेश्वरोविभुः १० स्नात्वातत्रमहातीर्थेपावनेकमलालये त्यागेश्वरस्यसेवार्थंसभार्यश्चालयंययौ ११ न्य
स्तंजवंतिकापुष्पंसोपानेहेमनिर्मिते गृहीत्वाचालयाद्वेकातस्यभार्यासुगर्विता १२ जिघ्रतिस्मविलोक्यैतत्साह
साकोद्विजोत्तमः उदस्यक्षुरिकांसद्यःतस्यानासांचकर्तह १३ छिन्नास्मीत्यपतद्भूमौजनाहाहेतिचुक्रुशुः छिन्नना
सासिकेनेतिपृष्टाद्विजमदर्शयत् १४ राजाभार्यांतमाहूयक्रुद्धःपृच्छन्महीपतिः त्यागेशस्यप्रियंपुष्पमाघ्रातमनया

तदपिप्रसृतिसंमितंअर्द्धांजलिपरिमितंपिबन् ३ कथांतरंवर्णयतिशालेति पादजःशूद्रः ४ ५ ६ कथांतरंवर्णयति अथेति ७ ८ ९

१६ १७ १८ १९ कथांतरंवर्णयति पुरमिति २० तत्रेति निधिपतिर्यथा कुबेरइव सामंतैःराजभिःउपहारीकृतं २१ २२ २३ २४ २५

अतस्तस्यापशुध्यर्थंमयेयंकृत्तनासिका अथराजाप्रणम्यैनंनालभेतदितिस्वयम् १६ खड्गमादायभार्यायाग्रही
तकुसुमंकरं चिच्छेदभक्तिमान्शंभोप्रसीदेत्यब्रवीन्नृपः १७ तदापुष्पाणि विबुधाववृषुश्चनृपोपरि छिन्नस्त
स्याःकरःसद्यःसमजायतकांचनः १८ नासिकापियथापूर्वमाश्चर्यमगमन्जनाः विधायपूजामीशस्यनृपस्त
त्रचिरंवसन् १९ महेश्वरप्रसादेनकालेमुक्तिमवाप्तवान् श्रीअगस्त्यउ॰ पुरंगवाकरंनामख्यातमस्तिमहीतले २०
तत्रकश्चिदभूद्राजात्यागेनिधिपतिर्यथा ददातिशिवभक्तेभ्यःसामंतैरुपढौकृतम् २१ अशेषंधनमादायवि
ख्यातोभूतिदाख्यया स्वकोशनिहितैर्द्रव्यैःचित्सभाधिपतेःसभाम् २२ यःकांचनसभांचक्रेविरक्तःसर्वभोगतः
धर्मेणतस्मिन्धरणींपरिपालयतिद्विजः २३ शिवभक्तःसहस्राख्यदानार्थंविभवंमम समयाचतदेहीतिकोशचौर्या
र्थमागतः २४ तंनत्वान्रृपतिःप्रीतःतावत्सेत्रंधनंददौ शिवस्यशिवभक्तानामेवंकृत्वामहीपतिः २५ निर्धूतमा
नसमलःतेनसायुज्यमाप्तवान् सिंहांकभार्यातास्यांचित्तपत्नीसाहसप्रिया २६ शिवद्रोहकृताशिक्षांवितन्वंत्क
मलालये आद्वादशाब्दंत्यागेशमुपास्यगतबंधना २७ त्यागराजप्रसादेनशांभवंप्राप्तसंद श्रीअगस्त्यउवाच
आसीत्कीर्तिसखोनामब्राह्मणोवेदपारगः २८ सहस्रकलशांभोभिर्धनवान्स्वयमाहृतैः कर्पूरैलालवंगाद्यैस्त्वहचाधिवा
सितैः २९ धाराभिषेकमीशस्यकुर्वन्व्रतमपालयत् सर्वांगाणांचानुलेपंचंदनेनसुगंधिना ३० निजारामभवैःपुष्पैर्लिंगमाछाद्यशां
करं कर्पूरदीपदानांते सिषेवे प्रसहं हरम् ३१

२६ २७ २८ २९ धारेतिसुगंधिना चंदनेनसर्वांगीणंसर्वाण्यंगानिव्याप्नोतीतिताद्दृशं अनुलेपंचकुर्वन्नित्यन्वयः ३१ तस्येति लयेयथाप्रलयकालइव ३२

अथेति निस्वः दरिद्रः ३२ ३४ ३५ ३६ ३७ ३८ ३९ ४० इति श्रीमानवल्लुपनाम कन्हसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांत्रिसप्ततितमोऽध्यायः ७३॥ ॥ ॥संप्रति शिवाय धान्यार्पणफलं वक्तुंपुराकृत्तमवतारयति पुरीति धुरंवहतीति धौरेयः वी

अथचतुःसप्ततितमोऽध्यायः ७४

तस्यभक्तिपरीक्षायै हरः कौतुकवानभूत् आ द्वादशाब्दमभवदनावृष्टिर्लयेयथा ३२ अथद्रव्येषुनष्टेषुनिःस्वः कीर्त्तिसखोभवत् अन्नतोयाद्यभावेनसोऽस्थिमात्रावशेषितः ३३ स्वयंदूरात्सरित्तोयमेककुंभाभिपूरितं अक्षतंसोऽव्रतंकुर्वन्ददौ शंभोर्दिनेदिने ३४ अथैकस्मिन्दिने शंभोः सन्निधौ सश्रमातुरः वारिपूर्णं वहन्मूर्ध्नि कुंभमातपपीडितः ३५ विह्वलाक्षश्चसोपानेपदेप्रस्खलितेसति पपातभुविमूर्छालुर्मनसाचास्मरच्छिवम् ३६ शिवोथसहसाभ्येत्यतस्यापोह्यपरिश्रमं उवाचनित्यंसोपाने निहितंकांचनंमया ३७ गृहीत्वाशिवभक्तान्स्वमात्मानंचानुपालय इत्युक्त्वांतर्दधेदेवो द्विजश्चासावबुध्यत ३८ गृहीत्वाचान्वहं दत्तंहरेण वरकांचनं विक्रीयाभोजयद्विप्रान्स्वयंकीर्त्तिसखो द्विजः ३९ शिवप्रसादेनचिरादगमद्धामशांकरं ४० इतिस्कं॰त्रिसप्ततितमोऽध्यायः ७३॥ ॥श्रीअगस्त्यउ॰

पुरीनटकुटीनाम पुण्यधाम पिनाकिनः तत्राभूद्वीरधौरेयो महान्भूपश्च भूपतिः १ शूरव्याघ्र इतिख्यातः शुनासीरसमोबले प्रवरः पादजातानां सुविक्रमजिताहितः २ स बभूव महाभागो भक्तिमान्परमेश्वरे इष्टदातेशभक्तानामेधमानधनः सदा ३ शिवालयेषु सर्वत्र धान्यराशीन्यथागिरीन् पूजार्थमादधे कोशेष्वखिलेषु महामनाः ४ स कदाचिद्दरिंजेतुं चोदितश्चोलभूभुजा प्रतिष्ठमानः स्वान्वंधूनिदमाह चमूपतिः ५ शिवार्थं कल्पिता एते युष्मदर्थममी पुनः धान्यको

राणांधौरेयः अतिवीर इत्यर्थः १ शूरेति शुनासीरसमः इन्द्रतुल्यः सुविक्रमेण शोभनपराक्रमेण जिताः अहिताः शत्रवो येन २ सइति महा

नभोगः शरीरं सुखं वा यस्य ईशभक्तानामिष्टदाता ३ ४ सदिति चोलभूभुजा चोलराजेन ५ शिवार्थमिति एते शिवार्थं अमी पुनः युष्मदर्थ
मिति विभज्य प्रदर्शनम् वैदिति निश्चयेन शंकराः शैवा धान्यकोशाः न स्पृश्याः नोपभोक्तव्याः ६ इतीति द्विषतां सैन्यानां बाहुल्येन आ
धिक्येनेति कालविलंबोक्तिः ७ ८ ९ १० शैवानामिति सविधं समीपं ११ निगूढेति निगूढं अंतर्मत्सरं हृदयं यस्य बहिः हृष्ट इ

इत्युक्त्वाजेतुमहितान् शूरव्याघ्रो जगाम ह बाहुल्येनाथ सैन्यानां द्विषतां चिरमावसत् ७ शूरव्याघ्रस्य बंधूनां
धान्यं कोशालयं ययुः पुनः प्राप्ते प्रदास्यामः शिवस्येति मनीषया ८ सर्वे गृहीत्वा धान्यानि शैवा निबुभुजुस्तदा
अथ शत्रून् विनिर्जित्य शूरव्याघ्रः ससैनिकः ९ पुनरासाद्य राजानं धनराशीन् समर्पयत् राज्ञा बहुमतश्चासौ
स्वगृहं गंतुमुद्यतः १० शैवानां धान्यकोशानां यः पुरा पालकः कृतः स तदा प्राप्य सविधं स्वस्य वृत्तं व्यजिज्ञप
त् ११ निगूढहृदयः श्रुत्वा बहिर्हृष्ट इवाभवत् कालियक्ष्वेलसंवीतो ह्रदो तर्यामुनो यथा १२ संप्राप्य सदनं शूरः
स्वजनान् सांत्वयं गिरा गमयामास दिवसं गंगाधरपदक्रियः १३ अथ रात्रौ समानीय शिवधान्यभुजो जनान् उत्क
ष्य कोशतः खड्गं समं शीर्षाणि चाच्छिनत् १४ छिन्नेष्वर्भकपर्यंतं शूरव्याघ्रेण रुष्यता अबलैका प्रजाता तमाच्छा
द्य वपुषार्भकम् १५ शूरव्याघ्रमिदं प्राह देहि तं दययार्भकं अनन्नप्राशनो ह्येष नापराध्यति ते शिशुः १६

वगंभीरत्वात् द्वेषाकारं अप्रदर्शयन्नित्यर्थः उपमिनोति कालियस्य तन्नामकसर्पस्य क्ष्वेडेन विषेण संवीतो व्याप्तः यामुनो यमुनासंबंधी
ह्रद इव अगाधजलराशिरिव स यथा अन्तर्विषः बहिः स्वच्छजलः तद्वदिति भावः संप्राप्येति गंगाधरपदयोः शिवचरणयोः अर्पिताः
क्रिया येनेत्यर्थः १३ १४ छिन्नेष्विति प्रजाता नवप्रसूता एका अबला नारी १५ शूर इति अनन्नप्राशनः अप्राप्तकालत्वात्संस्काररहि

तः तेनुभ्यंनापराध्यति १६ इतीति सकरुणां दैन्यसहितां वाचमाकर्ण्येत्थियं प्रत्याहेत्यन्वयः स्वयंछेदनहेतुंप्रतिपादयतिशिवेति १७।१८।१९ २० इ
तिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायांचतुःसप्ततितमोऽध्यायः ७४॥ ॥

इतिवाचंसकरुणामाकर्ण्योहसचस्त्रियं शिवधान्यभुजस्तन्यंयस्यात्पीतंतवामुना १७ तस्मान्निष्कृतिरेत
स्यछेदस्तुशिरसोयथा इत्युक्त्वाबालकशिरोयावच्छिच्छेदसाहसी १८ शंभुस्तावद्वृषारूढः सहदेव्याग्र
तोभवत् अपराधंक्षमस्वेतिनमतस्तस्यशंकरः १९ दयादृशासमुज्जीव्यवंधूनयेनिहताः पुरा दत्वातस्मैच
सायुज्यंतिरोभूदंबयासह २० इतिश्रीस्कांदोपपुराणेचतुःसप्ततितमोऽध्यायः ७४॥ ॥ श्रीअगस्त्यउ॰॥
बहुजन्मार्जितैःपुण्यैर्जन्तोर्भक्तिमतःशिवे भवेदपुनरावृत्तिःशिवलिंगप्रतिष्ठया १ अस्त्यग्रहारःसुमहान्
निर्णायाख्योद्विजाश्रयः भवेन्निःसंशयोयत्रसर्ववेदार्थनिर्णयः २ तत्रकश्चिद्द्विजवरःशंभुचित्तइतिश्रु
तः यस्यचित्तंसदाशंभौनिश्चलंभक्तिनिर्मलम् ३ पुराणमर्मधर्मज्ञःशिवलिंगप्रतिष्ठया प्रहास्यजननक्लेशसा
धनंनिधनंययौ ४ अलाभाद्द्रव्यजातस्यमत्वासर्वंमनोमयं मनसैवालयंचक्रेसर्वलक्षणलक्षितम् ५ प्रा
कारमंडपशतप्रासादस्तंभगोपुरैः अलंकृतंमणिमयैर्नानावाहनमंडितम् ६ दासीदासायुतैर्युक्तंतस्यमध्ये
महेश्वरं लिंगमूर्तिंप्रतिष्ठाप्यचतुःषष्ट्युपचारकैः ७ गिरिशंपूजयामासगलितश्रममलादभूत् अथकांचीपुरे

संप्रतिशिवलिंगप्रतिष्ठाफलंदर्शयति बह्विति शिवेभक्तिमतःजंतोःशिवलिंगप्रतिष्ठयाअपुनरावृत्तिर्मोक्षोभवेदित्यन्वयः १ इति
हासमवतारयति अस्तीति २ ३ ४ बहिर्द्रव्यालाभेपि मानसोपचारैरर्पिततोधिकतरंपुण्यंभवतीत्याह अलाभादिति सर्वंमनोमयं॥

मनःस्वरूपंक्षयंमत्वा कामःसंकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिः अधृतिः श्री र्ह्रीर्भीरित्येतत्सर्वंमनएवेति श्रुतेः ५ ६ ७ गिरिशमिति मलात्पापात् एतत्कथासंबंधेनैवकथांतरंवर्णयति अथेति ८ निर्मातुमिति तद्विधेः तस्याःप्रतिष्ठायाविधेः इतिकर्तव्यतारूपविधान

निर्मातुमालयंशंभोःप्रतिष्ठांचमहाधनः तद्विधेरपरिज्ञानाद्दासीद्दालोचनापरः ९ अथस्वप्नेमहादेवस्तमाह धरणीपतिं शंभुचित्तंगुरुंकृत्वानिर्मायग्रामवासिनम् १० कुर्वालयंप्रतिष्ठांचममेतिजगदीश्वरः सद्यःसमुत्थितस्तत्रययौयत्रसभूसुरः ११ प्रणम्यतंशिवादिष्टंतस्मैसर्वंन्यवेदयत् पंचार्णतद्विधानंचतस्मैसगुरुरादिशत् १२ नृपःप्रस्थापितस्तेनस्वपदंपुनरेत्यसः कृत्वालयंप्रतिष्ठांचशंभोःसपदमासवान् १३ मनसेशसपर्यांसविधायद्विजपुंगवः मलत्रयविनिर्मुक्तोमहेश्वरपदंययौ १४ पांड्येषुसुकुमाराख्यभूपतिर्दुर्मतेस्थितं प्रापितंभक्तिमीशानेपित्राचोलेनसत्सुता १५ साध्वीपद्मावतीनामपीतावास्तन्यसेवया कारयित्वापतिंभक्तं चंद्रचूडस्यमाधुरे १६ हालास्येश्वरमाराध्यकालभीतिमतीतरत् श्रीअगस्त्यउवाच कांपिल्यनगरेकश्चिद्राजाकीर्तिरथोमतः १७ दुष्टदःशिवभक्तानामीशपादार्चनापरः कंथाकौपीनसंव्यानतैलभोजनदानतः १८ आजातमालयंसर्वमशून्यंदिवसंनयन् प्रतिष्ठाप्यशुभांकीर्तिंमतेशिवपदंययौ १९ इतिपंचसप्ततितमोऽ

स्य ९ अथेति शंभुचित्तंप्रागुक्तंब्राह्मणं १० ११ १२ १३ मनसेति मलत्रयेणप्राक्प्रतिपादितेनविनिर्मुक्तः १४ कथांतरंवर्णयति पांड्येष्विति तत्संज्ञकेषुदेशेषु १५ साध्वीति पीतंअम्बायाःस्तन्यंयेनता दृशस्यशिवभक्तस्यसेवयामाधुरेनगरे १६ कथांतरमुपक्षिपति कांपिल्येति १७ दुष्टदइति संव्यानमुत्तरीयं १८ १९ इतिश्रीमानवल्लुपनामकनृसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशि

कायांपञ्चसप्ततितमोऽध्यायः ७५॥ ॥ अधुनापशुप्रभृतीनामपि शिवार्चनप्रभावेनमुक्तिर्ध्रुवेत्याह शिवभक्त्येति १ इतिहासमव
तारयति आस्तेइति २ श्वेतेति यत्रक्षेत्रेवेदःश्वेतजंबूतरुर्भूत्वातपस्यति तस्यतरोर्मूलेजगतांमूलं जगत्कारणं यतोवाइमानिभूता
निजायंते इतिश्रुतेःमहेश्वरःसन्निधत्ते सन्निहितोभवतीत्यन्वयः ३ तमेवशिवंवर्णयति ज्योतिरिति तेजोलिंगाकृतिः तत्रसाभिप्रा



श्रीअगस्त्यउ॰ शिवभक्त्यैवपरयातिर्यंचोपिमहीतले कृत्वाशिवार्चनंतस्यप्रसादान्मुक्तिमाययुः १ आस्तेस्था
नंमहेशस्यगजारण्यमितिक्षितौ पार्श्वयोर्यत्रकावेरीप्रवाहोमालिकायते २ श्वेतजंबूतरुर्भूत्वायत्रवेदस्तप
स्यति तन्मूलेजगतांमूलंसंनिधत्तेमहेश्वरः ३ ज्योतिर्लिंगाकृतिःश्रीमान्ज्योतिषामवभासकः तमासाद्यगजो
नित्यंमग्नःकावेरिकाहृदे ४ स्वहस्तधृततोयेनाभिषिंचन्लिंगमूर्द्धनि अन्वहंपूजयामासभक्तिपूतेनचेतसा
५ तस्मिन्नेवतरौकाचिल्लूतानिजमुखोद्भवैः तंतुभिश्चातपत्राभैरुल्लोचमन्ववासरम् ६ कृत्वोपास्तेस्मतत्
स्यापिप्रसन्नोभवदीश्वरः लूताकृतवितानानिकरिण्यन्नभिषेचनम् ७ आछिनत्सन्वहंदंतीतेनलूताचकुप्य
ति कदाचिदभिषेकार्थंहरस्यारण्यकोद्विपः ८ आगत्योल्लोचमाछिद्यचाभ्यषिंचन्महेश्वरं तदानींकुपिता
लूतातद्धस्तेचापतत्तज्ञः ९ सद्यस्तेनाप्यविज्ञाताप्रविवेशकरांतरं अवग्रहादधःस्थित्वाब्रह्मामारायहस्तिनः
१० सन्निधौपरिवृत्याथपतितस्त्यक्तजीवितः करमंतर्मुखंकृत्वात्यक्तासुर्मूर्ध्निदंतिनः ११ ॥ ॥

यविशेषणमाहज्योतिषामिति तस्यभासासर्वमिदंविभातीतिश्रुतेःयच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमितिस्मृतेश्च ४ स्वेति
स्वस्यहस्तेन शुण्डादण्डेन धृततोयंजलंतेन ५ तस्मिन्निति लूता तन्तुवायःकीटविशेषः उल्लोचं वितानं ६ ७ ८ ९ सद्यइति

करान्तरं शुण्डामध्यं अवग्रहात् ललाटात् अवग्रहो ललाटं स्यादित्यमरः १० सन्निधाविति गजइतिशेषः करं अंतर्मुखं वदनमध्ये कृ
त्वासक्तासुः मुक्तप्राणः पतित इत्यन्वयः ११ अलब्धेति अलब्धं अप्राप्तं निर्गमद्वारं निःसरणमार्गो यया सा लूतापि प्राणान् अत्यजत् १२ ग
जमुक्तिप्रदानानंतरं लूतायाश्छत्रविधानफलं वर्णयति येतिसंम्राजः मंडलाधिपतेः जठरे गर्भो गर्भस्थजन्तुः कुक्षिभ्रूणार्भकागर्भा इत्य

अलब्धनिर्गमद्वारा प्राणान्लूतापि सात्यजत् ददौ मुक्तिं गजेंद्रस्य दयया परमेश्वरः १२ या लूता पिदधे नित्यं तंतु
भिश्छत्रमुन्नतं स सम्राजो बभूवांतर्जठरे गर्भरूपभृत् १३ अथ वै जनने प्राप्ते सौमनस्य महीपतेः ज्योतिर्विन्म
हिषीं प्राह यदि जातो धुना सुतः १४ म्रियते दशरात्रे स चेन्मुहूर्त्तादनंतरं जायेत संम्राड्दीर्घायुर्भविता नात्र सं
शयः १५ इत्याकर्ण्य वचो राज्ञी भूत्वा स्वयमधःशिराः तुलांतरौ निबध्वांघ्री सा मुहूर्त्तादनंतरम् १६ जनयामा
स तनयं दृष्ट्वा तं दृशिलोहितं लोहिताक्षं च नाम्ना तं कृत्वा वेदनया तया १७ प्राणांस्तत्याज सा राज्ञी वव्रधे चंद्र
वच्छिशुः वर्द्धमानं महाबुद्धिं लोहिताक्षं महीपतिः १८ शुभे दिने भिषिच्य स्वे पदे वनमुपागमत् तपोवनगते
ताते लोहिताक्षः समंत्रिभिः १९ सहितः पृथिवीं सर्वां न्यायतः पर्यपालयत् भूत्वा जातिस्मरो राजा गजारण्यमुपे
त्य सः २० श्रीकर्म कारयामास जंबूनाथस्य शूलिनः समुन्नतमहासालगोपुरादिपरिष्कृतम् २१ ॥ ७ ॥

मरः तद्रूपभृत् बभूवेत्यर्थः १३ अथेति वैजनने सूतिमासे सूतिमासो वैजनन इत्यमरः सौमनस्य तन्नामकस्य १४ म्रियतइति सः बाल
कः मुहूर्त्तादनंतरं जायेत चेत् संम्राट् दीर्घायुश्च भविता १५ इतीति अधःशिराः तुलांतरौ तुलावृक्षे अंघ्री चरणौ अर्थादूर्ध्वमित्यर्थः १६
१७ १८ १९ सहितइति मंत्रिभिरित्यनेन संबन्धः जातिस्मरः पूर्वजन्मजातिस्मरणवान् २० श्रीकर्मेति पूर्वोक्तं शुभवर्द्धनं कर्म २१

२२ २३ उपसंहरति पालयित्वेति सागरांबरां समुद्रपर्यंतां मेदिनीं धर्मेण पालयित्वा महेशस्य प्रसादेन ज्ञानेनेत्यर्थः ज्ञानं महेश्वरादिच्छेदिति स्मृतेः मृत्युं अविवेकलक्षणं संसारं अत्यतरत् अतिचक्राम मुक्तोभूदित्यर्थः तमेव विदित्वा तिमृत्युमेति नान्यः पन्था विद्यतेयनायेति श्रुतेः २४ इति श्रीमानवल्लुपनामकनृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्तविलासप्रकाशिकायां षट्सप्ततितमोऽध्यायः ७६॥ ॥ ॥ संप्रति शिवसंनिधौ भक्त्या गानं कुर्वतो वाञ्छितार्थः सिध्यतीत्याह आसीदिति कुशीलवः गायकः

निर्मायालयमीशस्य महोत्सवमकारयत् अन्येषु शंभुस्थानेषु महोत्सवमपि व्यधात् २२ पुंडरीकपुरं प्राप्य संनिधौ सभापतेः दृष्ट्वा दशाब्दं रचयन्कैंकर्यं विविधं नृपः २३ पालयित्वा च धर्मेण मेदिनीं सागरांबरां प्रसादेन महेशस्य मृत्युमत्यतरत्स्वयम् २४ इति श्रीस्कांदोपपुराणे भक्तविलासे षट्सप्ततितमोऽध्यायः ७६॥ ॥ श्री अगस्त्य उ॰ आसीत्कुशीलवः कश्चिद्गीताकर इति श्रुतः वीणागानेन यस्याभूत्सुप्रीतो मधुरेश्वरः १ संनिधौ द्वादशसमा वीणागानं वितन्वतः भक्तसंघासनारोहं व्यतरच्चास्य वाञ्छितम् २ संतोषयित्वा त्यागेशं वीणागानामृतेन सः उत्तरद्वारमार्गेण गत्वा तस्य प्रियोभवत् ३ गौरीस्तनयविवर्तानां शिवव्रतभुवो गिरां गुंफं गृणयामास विपंचीं मंजुवादिनीम् ४ द्रोणीपुरे महादेवं मधुवीणाभिरुक्तिभिः संतोषयित्वा प्रत्यक्षं ददर्श शिवया सह ५ ॥

१ सन्निधाविति द्वादशसमाः द्वादशसंवत्सरेषु कालाध्वनोरिति द्वितीया भक्तसंघस्य भक्तसमुदायस्य आसनारोहः पीठारोहणं यस्मिन्तादृशं वाञ्छितं व्यतरत् ददौ २ ३ गौरीति गौर्याः स्तन्यस्य क्षीरस्य विवर्तानां रूपांतराणां शिवव्रतभुवः शिवव्रतपुत्रस्य भक्तशिरोमणेः गिरां गुंफं संदर्भं गृणयामास शब्दापयामास विपंचीं सप्ततंत्रीं वीणां ४ ५ ७ ७ ७ ७

गुरुप्रसादेनेति निर्धूतमायामलसंबंधिनां पाशानां प्राक्प्रतिपादितानां द्विपंचाशत्संख्याकानां गंधः संबंधो येन तादृशः गंधो गंधक आमोदे लेशे संबंधगर्वयोरिति विश्वः ६ अथ प्रतिपादितकथानुक्रमं संख्यापूर्वकमुपदिशति भक्तादिति हे भक्ताः मुनयः विशुद्ध्या जगदीशस्य शिवस्य भक्त्या विच्युतकर्मबंधा नष्टकर्माशयाः त्रिषष्टिः त्रिषष्टिसंख्याकाः भक्ताः मया उदिताः येषां भक्तानां चरितानि स्मृतानि — — स्मरणविषयीकृतानि महान्त्यघानि ब्रह्महत्यादिमहापातकानि निघ्नंति नाशयन्ति ७ अन्यानपि शिवप्रसादेन मुक्तान्

गुरुप्रसादेन शिवप्रसादमवाप्य गीताकरभक्तवर्यैः निर्धूतमायामलपाशगंधो बंधाद्विमुक्तो ह्यभवन्मुनीन्द्राः ६ श्रीअगस्त्य उ० भक्तास्त्रिषष्टिर्जगदीशभक्त्या विशुद्ध्या विच्युतकर्मबंधाः मयोदिता यच्चरितानि लोके स्मृतानि निघ्नंति महान्त्यघानि ७ जटिलो मिथिलो दाल्भ्यः सौरभेयो जितासनः बालसिद्धः सिद्धयोगो वषड्डुः कवषो षितः ८ एते दश महाभक्ता मनसा पूजितेश्वराः मुक्तास्तस्य प्रसादेन बभूवुर्लोकवंदिताः ९ शिवोपदिष्टविज्ञानलीनाविद्याघवृत्तयः ददृशुः सर्वभूतेषु स्थितं साक्षिणमीश्वरम् १० श्रीऋषय उ० कदा कुत्रोपदिष्टं तद्विज्ञानं त्रिपुरद्विषा तेभ्यस्तद्ब्रूहि शेषेण यथावत्कुंभसंभव ११ श्रीअगस्त्य उ० कैलासशिखरे देवं सुखासीनं सहोमया प्रणम्य पादयोर्भ

दशभक्तान्निर्दिशति जटिल इत्यादिना ८ ९ तेषां फलमाह शिवेति शिवेन उपदिष्टं यद्विज्ञानं ब्रह्मज्ञानं तेन लीना नष्टा अविद्यासंबंधिनी अघवृत्तिः पापवृत्तिः येषां तादृशाः सन्तः यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति भगवद्वचनात् सर्वभूतस्थितं साक्षिणं द्रष्टारं ईश्वरं ददृशुः एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति श्रुतेः १० संप्रति विशेषकथनेन जातकौतूहलाः ऋषयः सविस्तारं पृच्छन्ति कदेति ११ ॥

तदुत्तरप्रकारमाह कैलासेति १२ १३ विलीनेइति एकोभवान् अद्वितीयःपरमात्मा अवशिष्यते एकएव रुद्रोनद्वितीयायतस्थेइतिश्रुतेः इत्थंवेदान्तावदन्त्येवतु किंत्वित्यर्थः अविरोधः अनेकरूपतया दृश्यस्य प्रपंचस्य एकरूपतयास्थितस्यात्मनश्चअविरोधःकथंभवेदित्यर्थः १४ भिद्यते हृदयग्रन्थिरितिश्रुत्यापरमेश्वरदर्शनस्य सकलसंदेहनाशकतानिश्चिता युष्मद्दर्शनानंतरमपियदि संदेहः तर्हिकोन्यःशरणमितिशंकते दृष्ट्वापीति कालोमृत्युः कामोमदनः तौहंतीतितादृशंपरं अन्यंशरणंप्रयास्याम इत्यन्वयः१५ संदेहप्रकारमेवदर्शयन्ति आसीदिति त्वयितेजोरूपेपरब्रह्मणि दृश्यंज्ञानावरकत्वेन तमोरूपंजगत्कथमासीत् विरुद्धस्वभावत्वात्

देवदेवदयासिंधोदक्षाध्वरविभंजन श्रुताश्चसर्वैवेदांताःप्रपंचोयंनलीयते १३ विलीनेसकलेलोकेभवानेकोवशिष्यते वदंत्येवहिवेदांतास्त्वविरोधःकथंभवेत् १४ दृष्ट्वापितेपदांभोजंभूयश्चेदपिसंशयः शरणंकंप्रयास्यामःकालकामहनंपरम् १५ आसीत्त्वयिकथंदृश्यंकथंत्वय्येवलीयते वदैतद्भगवन्येनच्छिन्नास्युःसर्वसंशयाः १६ श्रीमहेश्वरउ॰ ज्ञानयोगंमुनिश्रेष्ठाःसविज्ञानंनिबोधत गोप्यंयत्स्थूलदृष्टीनांनविदुर्ये

अध्यासएवनसंभवतीतिशंकार्थः त्वय्येव कथंलीयते हेतुःपूर्ववत् येनोपदेशेन १६ एवंमहर्षिभिरुक्तांशंकांज्ञात्वा परमकारुणिकोभगवान्परमेश्वरःतदनुजिघृक्षया ज्ञानयोगमुपदिशन्मुनीनवहितीकरोति ज्ञानयोगमिति सविज्ञानंफलीभूतविशिष्टज्ञानसहितंज्ञानंयोगंनिबोधत जानीतयद्वस्तुस्थूलदृष्टीनांदेहात्मबुद्धीनांगोप्यंरक्षणीयंपामरेभ्योनोपदेष्टुमित्यर्थः येपामराःगुहाशयंहृदयाकाशवर्त्तिनंपरमात्मानंनविदुःसद्गुरूपदेशादिनानजानंति १७ अद्वैतवस्तुसिद्ध्यर्थंसृष्टेःप्राक् केवलात्मनोमिथ्याजगदुत्पत्तिंवर्णयन्ति निर्विकारेइति अविद्यासंसर्गाभावात्सद्भावविकाररहितेनिराधारेस्वस्यैवसकलजगधिष्ठानतया आ

धारांतरनिरपेक्षे निर्मले प्रागुक्तमलत्रयरहिते गगनाकृतौ आकाशशरीरे ब्रह्मणि आकाशशरीरं ब्रह्मेति श्रुतेः एवमखण्डसच्चि
दानन्दस्वरूपे अद्वितीये जीवाः स्फुलिंगरूपाः उत्पद्यन्ते विलीयंते च तत्रोपमा वार्ध्यूर्मयो यथेति वार्द्धेः समुद्रस्य ऊर्मयो यथा तरंगाद्
व तरंगाणां सामुद्रत्वेपि समुद्रस्य न तारंगत्वं यथा तथैव जीवानां ब्रह्मांशत्वेपि ब्रह्मणो न जीवांशत्वमिति भावः १८ पामराणां जगत्स
त्यत्वभ्रांतिमपनुदति आद्यन्तयोरिति आदौ सृष्टेः प्राक् अन्ते परतश्च असद्भावात् अविद्यमानत्वात् अन्तरा मध्ये अवभासितं
आभासतया दृश्यमानं दृश्यं जगत् अधिष्ठानस्य ब्रह्मणो अपरिज्ञानात् रज्जुज्ञानाभावात् सर्पद्वत् यथार्थवत् सत्यमिव भाति वस्तुतो
न परमार्थसदिति भावः एतेन दृश्यं मिथ्या आद्यन्तयोरसत्वे सति भासमानत्वात् स्वप्नगजादिवत् इत्यनुमानेन जगतो मिथ्यात्वं सा

निर्विकारे निराधारे निर्मले गगनाकृतौ उत्पद्यंते विलीयंते जीवा वार्ध्यूर्मयो यथा १८ आद्यंतयोरसद्भावादवभा
सितमंतरा अधिष्ठानापरिज्ञानाद्भाति दृश्यं यथार्थवत् १९ भक्त्या जानंति परया मयि कर्मार्पणेन च सविज्ञान
मिदं ज्ञानं जायते मदनुग्रहात् २० अनन्यकारणं कार्यं पश्यतां निर्मले हृदि दृश्यं विश्वं च मय्येव कश्चित्पश्यति योगतः २१

धितमिति बोध्यं न यदिदमग्र आसन भविष्यदतो निधनादनुमितमंतरा त्वयि विभाति मृषैकरसे इत्यादि प्रमाणमनुसंधेयं अत एव दे
हात्मप्रत्ययो यद्वत् प्रमाणत्वेन निश्चितः लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादित्याकरे दृश्यते १९ संप्रति ज्ञानसाधनमुपदिशति भ
क्त्येति परया उत्तमया भक्त्या अंतरंगसाधनभूतया मयि परमेश्वरे कर्मार्पणेन विहितकर्मसमर्पणेन च यत्करोषि यदश्नासि यज्जुहोषि
ददासि यत् यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति भगवदुक्तेः सविज्ञानमिदमात्मज्ञानं मदनुग्रहाज्जायते अध्यवोचदधिव
क्ता नान्यः पन्था विद्यतेऽयनायेत्यादिश्रुतेः २० तर्हि सर्वे किं न जानन्ति अत आह अनन्येति कार्यं असद्रूपं विश्वं कृत्स्नं दृश्यमिदं जगत्॥

 

अनन्यकारणंनविद्यते आत्मनोअन्यकारणंयस्यतादृशंनिर्मलेहृदिपश्यतां ज्ञानदृष्ट्यावलोकयतांवाचारम्भणंविकारोनामधेयमितिश्रुतेः आत्मैवैकस्सत्यमितिनिश्चिन्वतां ज्ञानयोगसिद्धानांइत्यर्थः तेषामपिमध्येकश्चिदेवयोगीयोगतःचित्तवृत्तिनिरोधात् मय्येवपरिशिष्येय ततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतइतिस्मृतेः २१ ७ ॥ ॥त्वयिदृश्यमानस्यजगतः मिथ्यात्वेव्यवहारोपपत्तिः कथमित्याशंक्य या वदात्मसाक्षात्कारंसत्यतयाभासमानस्यकूटकार्षापणादिवत् व्यवहारोपितावत्सर्वंतंचलति वस्तुतोनास्तीत्याह अध्यारोपेणेति अध्यारोपेणचिज्जडयोः परस्पराध्यासेनसकलंजगद्भाति अपवादेनिषेधेसतिनाभाति अध्यारोपापवादाभ्यां निष्प्रपंचंप्रपंच्य ते इत्युक्तेःतदपिकियत्पर्यंतंतदाह यावदज्ञानमिति अज्ञानंज्ञानविरोधितन्निवर्त्यभावरूपंमायाख्यमित्यर्थः तद्यावदस्ति आत्मसा

अध्यारोपेणसकलमपवादेनतज्जगत् यावदज्ञानमाभातितन्नाशेमयि
लीयते २२ अध्यारोपप्रकारंतद्वधाज्ञान्निबोधत॥ ७ ॥ ७ ॥

क्षात्कारावधिमामेवयेप्रपद्यन्तेमायामेतांतरन्तितेइतिस्मृतेः तन्नाशेसति अज्ञाननाशेसतिमयिलीयते भिन्नस्वरूपानवभासेनम देकरूपतांप्रपद्यतइत्यर्थः २२संप्रति प्रतिपित्सुबुध्यारोहायश्रोतॄन् सावधानयति अध्यारोपेति तावदिदानीं अध्यारोपस्यअध्यासः स्यप्रकारंभेदंबंधमित्यर्थः अत्रकेचित् अहंक्षेत्रादि बाह्यविषयशरीरेंद्रियप्राणान्तःकरणभेदेनपंचविधाध्यासोबंधःसच अनात्मन्यात्मबु द्धिरूपःअध्यासएव अविद्यासैवचदोषरूपेणनिद्रया स्वप्नवत् कल्पितस्यापिप्रपंचस्यप्रयोजिकानित्यानित्यवस्तुविवेकः इहामुत्रा र्थफलभोगविरागः शमादिषट्कसंपत्तिःमुमुक्षुत्वंचेतिसाधनचतुष्टयसंपत्त्याकृतश्रवणमनननिदिध्यासनस्यस्वात्मसाक्षात्काररूपवि द्योदयेन स्वप्नप्रपंचप्रबोधेनैव स्वविलासरूपप्रपंचसहिता अविद्यानश्यतिततःशुद्धबुद्धमुक्तस्वभावसच्चिदानन्दरूपःपरमात्मरूपे

णप्रकाशते तथाचश्रुतिः तरति शोकमात्मविदिति तथैवञ्जगस्त्यंप्रतिभगवान् हयग्रीवः नावासव्योभिलब्धत्वात् नज्ञेयोज्ञानविग्रहः नका
र्योनित्यसिद्धत्वात् आत्मस्वज्ञानसंक्षयः अविद्यानिवृत्तिर्मुक्तिरितिवदन्ति एतदपिप्रपंचस्यअज्ञानविलसितत्वनिरासेनपरमार्थत्वस्य
व्यवस्थानात् अध्यासस्यवक्तुमशक्यत्वात् अन्येतुधर्मेणस्वर्गादिगमनंअधर्मेणच अधोलोकगमनंपुरुषस्य विवेकख्यात्याताप त्रयरू
पदुःखत्रयनिवृत्या आत्मनोमोक्षःविवेकख्यातेःपूर्वंप्रकृत्याभोगात्बंधः विवेकख्यातिपर्यंतंविहितंचित्तचेष्टितमितितदेवबंधःस
चत्रिविधः प्राकृतोवैकृतोदक्षताचेतितत्र आत्मबुद्ध्याप्रकृत्युपासकानां प्रकृतिकृतोबंधःप्राकृतः पुरुषबुद्ध्यामहदादिविकारो
पासकानांविकारकृतोबंधोवैकृतःपुरुषतत्वानभिज्ञतया इष्टापूर्त्तकारिणांदक्षतापादकोबंधः विवेकख्यात्युत्तरंतुतत्वज्ञानाग्नि

आसमग्रेहमेवैकोनान्यदासीदसत्त्वसत २३

नासंचितदाहे आगामिनश्चबाधे भोगेनप्रारब्धनाशेचआध्यात्मिकादिदुःखत्रयविगमरूपामुक्तिः तथाचसूत्रं त्रिविधदुःखात्यंतनि
वृत्तिरत्यंतपुरुषार्थइति शरीरादिप्रयुक्तमाध्यात्मिकंभूतप्रयुक्तंतुआधिभौतिकंदेवादिप्रयुक्तमाधिदैविकं दुःखत्रयस्य सर्वथा
नाशोमुख्यपुरुषार्थइतितदर्थः एतादृशदुःखत्रयनिवृत्तिरेवमुक्तिरितिवदन्ति अपरेतुप्राकृतकर्मनिवृत्तोऽविवेकनिमित्तोवा
दुःखभोक्तृत्वलक्षणसंसारो बंधःपुण्यवशात् चित्तवृत्तिनिरोधरूपयोगसाध्येनिर्विषयत्वेसतिभगवदनुकंपया आत्मस्वरूपे
अवस्थानंमनसोमुक्तिः तथोक्तंपाराशरस्मृतौमनएवमनुष्याणांकारणंबंधमोक्षयोः बंधायविषयासक्तंमुक्त्यैनिर्विषयंमनइ
तिसूत्रंच स्वरूपप्रतिष्ठावाचितिशक्तिरितएवस्वरूपेणावस्थानंमुक्तिरितिवदन्ति इतरेतुभोगायतनभोगसाधनभोग्यभेदभिन्नप्रपं
चत्रयसंबंधोबंधः तत्संबंधविलयोमोक्षोनतुप्रपंचविलयः नकदाचिदनीदृशंजगदित्युक्तेः नचमुक्तस्यमहात्मनोनिरानंदइतिं नहिब

इत्येवमुक्तस्यापिजन्यानन्दः जन्यस्यविनाशनियमेनमुक्त्यवस्थायामप्यानंदनाशप्रसंगात् किंतु बंधदशायांसंसारेणाभिभूतस्यस्वाभाविकानंदस्यनिजाचरितैः नित्यादिकर्म्मभिः संसारनाशात् महतामनसोरजस्तमोभिभवेसत्वोद्रेकेचसतिस्वात्मानंदाविर्भावोभवतीतिवदन्ति तत्रापि आविर्भूतानंदोमुक्तिदशायांमननभूतोऽनुभूतोवानाद्यः तादृशानंदस्य विद्यमानस्याप्यकिंचित्करत्वात् अन्त्येतत्करणाभावेनकथमनुभवः नचमहतोमनसः करणत्वंशरीराद्यभावेनमनस्सदप्यकिंचित्करमेव किंचआत्मा आनंदस्वभावोनवा आद्येसंसारदशायांआनंदतिरोभावेन आत्मनोपितत्प्रसंगः अन्त्येआत्मनः पाषाणप्रायतापत्तिः निखिलप्रेमास्पदत्वाभावश्चेति युक्त्यनुभवविरोधेन निन्दाश्रवणेनचमनश्चांचल्यमेवेतितदेवं तांत्रिकमतभेदेन बहुधाप्रतिपादितं अध्यासभेदं अवधानात् चित्ते काग्र्यात् निबोधतनितरांजानीतसतिकुड्ये चित्रकर्मेतिन्यायेन अधिष्ठानेसत्यारोपइति तदेवदर्शयति आसमिति अग्रेसृष्टेः प्राक् अहमेकएव अद्वि



॥ ७ ॥ पूर्णत्वात्स्वप्रकाशत्वान्महादेवइतिश्रुतः प्रकृतिर्गुणसाम्याख्याचोदिताअवलोकनात् २५

तीयात्मस्वरूपः आसमभूवमात्मावाइदमग्रआसीन्नान्यत्किंचनमिषत् नासदासीन्नोसदासीत्तदानीं नासीद्रजोनोव्योमेत्यादिश्रुतेः तदेवविशिनष्टिनेत्यादिना असत् कारणरूपं अव्यक्तादिकं सत् कार्यरूपं महदादिकंच नासीत् आत्मातिरिक्तं किमपिनासीदित्यर्थः नचकिमपिनासीदित्युक्तरीत्या आत्मनोऽप्यसत्त्वंप्रसज्येत अस्तीत्येवोपलब्धव्यः असन्नेवसभवति असद्ब्रह्मेतिवेदचेदित्यादिश्रुतेः नचतस्याप्यभावेकिंवाच्यमितिवाच्यं शून्यवादप्रसंगात् निरधिष्ठानारोपप्रसंगाच्चेतिभावः २३ ॥ ७ ॥ ॥ तथाविधस्याखंडचिदात्मनः महादेवइतिसंज्ञानिमित्तानि दर्शयति पूर्णत्वादिति दीव्यतेः क्रीडाद्यर्थकतया मूर्त्यष्टकपरिग्रहेण सकलेजगतिपूर्णत्वात्स्वेनैवप्रकाशत्वाच्च महादेवइतिश्रुतः वेदेनप्रतिपादितइत्यर्थः तादृशस्याद्वितीयात्मनोऽनुग्रहरूपेण पंचमकृत्येनसृष्टिप्रवण

तां दर्शयति प्रकृतिरिति गुणानां सत्वरजस्तमसां साम्यं अन्यतमाधिक्याभावः आख्या यस्यास्तादृशी प्रकृतिः मूलप्रकृतिः अवलोक
नात् ईक्षणात् चोदिता प्रेरिता सृष्टाविति शेषः तदैक्षत बहुस्यां प्रजायेयेति श्रुतेः २४॥ ७ ॥ अथ प्रकृतिसृष्टिं वर्णयति असूतेति प्र
कृतिरिति शेषः गुणवैषम्यरूपं सत्वादितारतम्यस्वरूपं महत्तत्वं असूतेत्यन्वयः तत्र महत्तत्वे अंतःकरणाख्ये सत्वस्य गुणस्य विजृं
भणं तु साधिष्ठानायाः प्रकृतेः अनुबिंबितं दर्पण इव प्रतिफलितं २५ नामरूपविहीनस्य परमार्थवस्तुनो जीवेश्वरसंज्ञे दर्शयति ईश्व
र इति कारणं मूलप्रकृतिरुपाधिर्यस्य मायाप्रतिबिंबितचैतन्यस्य स कारणोपाधिरीश्वरः साक्षी अव्याकृत इति शब्दैरीरितः कथितः यत् रज

असूत गुणवैषम्यं रूपं तत्वं महच्च तत् विजृंभणं तु सत्वस्य साधिष्ठानानुबिंबितम् २५ ईश्वरः कारणोपाधिः साक्ष्यव्याकृत ईरितः विजृंभणं यद्रजसः साधिष्ठानानुबिंबितम् २६ तज्जीवतत्वं भोक्ताख्यं नश्वरे यदहं मतिः मदीक्षितस्य तमसो यदस्ति च विजृंभणम् २७ साधिष्ठानानुबिंबं च यद्दृश्यं तदुच्यते त्रिगुणात्मक आकाश तस्मादासीत्तदीक्षितात् २८ तस्यासीत्सत्वतः श्रोत्रं रजसो वागथान्यतः शब्दोऽभवत्ततो वायुर्नभसस्त्रिगुणात्मकः २९

सो गुणस्य साधिष्ठानानुबिंबनं २६ तज्जीवतत्वं भोक्तेत्याख्या यस्य कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इत्युक्तेः नश्वरे जगति अ
हमिति मतिर्यस्य तदहंकाराख्यं तत्वमभूदिति शेषः प्रकृतेर्महान् महतोऽहंकार इत्युक्तेः मया अहमा ईक्षितस्य तमसः गुणस्य वि
जृंभणं यदस्ति तदाकाश इत्यग्रेणान्वयः २७ इदं च भूतसृष्ट्यारंभतात्पर्येण यद्दृश्यरूपरहितत्वाद् चाक्षुषं तत्त्रिगुणात्मक आका
श इत्यर्थः तस्माद्वा एतस्मादात्मन आकाशः संभूत इति श्रुतेः २८ इंद्रियसृष्टिं वर्णयति तस्येति तस्याकाशस्य सत्वतः सत्वांशात् श्रो
त्रेंद्रियं रजसो गुणात् वाक् अथान्यतः तमसः शब्दः अभवदित्यन्वयः ततः नभसः आकाशात् त्रिगुणात्मको वायुरित्यर्थः आकाशाद्वायुरिति

त्वगिति तस्यवायोः सत्वतः त्वगिंद्रियंरजसोहस्तः पाणीन्द्रियं अन्यतस्तमसः स्पर्शश्चाभूदित्यन्वयः वायोःसकाशात् त्रिगुणात्मकंतेज स्तत्वमभूदितिशेषः ३० सत्वादिति अस्यतेजसःसत्वात् ईक्षणंचक्षुरिंद्रियंरजसः पादः अन्यतस्तमसोरूपंचाभूदित्यन्वयः वायोर ग्निरितिश्रुतेः तेजसःसकाशात् अपतत्वंजलतत्वं अभूदित्यन्वयः तस्यजलस्यसत्वात् रसनं इन्द्रियमजायतेत्यग्रिमेणान्वयः ३१ रसनमिति रजसोगुणात्पायुः तमसश्च रसःअभवदित्यन्वयः अग्नेरापइतिश्रुतेः तस्माज्जलात् त्रिगुणापृथ्वी अस्याःपृथिव्याःसत्वतःघ्रा णेंद्रियं अभवदितिसंबध्यते अद्भ्यःपृथिवीइतिश्रुतेः ३२ उपस्थमितिरजसःउपस्थमिंद्रियंजज्ञे गंधःतामसः तमोगुणउच्यते

त्वगासीत्सत्वतस्तस्य हस्तोभूद्रजसोन्यतः स्पर्शस्ततोभवद्वायोस्त्रिगुणात्मकमीक्षणम् ३० सत्वादस्याभवः पादोरजसोरूपमन्यतः अपस्वेतेजसश्चाभूत्तस्यसत्वाद्जायत ३१ रसनंरजसःपायूरसश्चतमसोभवत् त्रि गुणापृथिवीतस्मा द्घ्राणमस्यास्तुसत्वतः ३२ उपस्थंरजसोजज्ञेगंधस्तामसउच्यते पंचानांसत्वसंघातमं तःकरणमुच्यते ३३ प्राणःसमष्टिरजसामासंगोविषयेषुयः तमसांसमुदायोसौस्यादेवंशास्त्रनिर्णयः ३४ म दीक्षयाचतंस्राचद्विधाभूतानिभूसुराः दशह्यभूवन्पंचापिचतुर्थैकैकशःपुनः ३५ ॥ ७ ॥ ७ ॥

अन्तःकरणस्वरूपमाह पंचानामिति पंचानामाकाशादीनां सत्वसंघातःसत्वगुणसमष्टिः अन्तःकरणमुच्यतइत्यर्थः ३३ प्राणस्वरूपमाह प्राणइति पंचानामित्यनुषज्यते रजसांसमष्टिःप्राणउच्यते यःविषयेषुआसंगःममत्वाभिमानःअहंकारइत्यर्थः असौ तमसांसमुदायः समष्टिरूपः एवंप्रकारेणशास्त्रनिर्णयःस्यात् ३४ एवंभूतसृष्टिमुपदिश्य भौतिकसृष्टिमुपदिशन् तदुपोद्घाततयापंचीकरणप्रकारंप्रथ मंवर्णयति मदिति ममचैतन्यरूपस्य ईक्षया अवलोकेनतन्मात्रामायया चद्विधाभूतानि पंचापिभूतानिदशसंख्याका अभूवन् भूसुराइतिसं

बो धनं पुनः एकैकशः प्रत्येकं चतुर्द्धा जातानीत्यन्वयः ३५ अविभक्ता इति अविभक्ताः परे अन्ये भागाः पंचैवासन् पुनः ते सर्वे भागाः विभक्तादित्यर्थः अविभक्तमात्मानं त्यक्त्वा अन्यं भागं अन्वियुः यथा आकाशस्य द्वौ भागौ तयोरर्द्धं चतुर्द्धा जातं वाय्वादिषु चतुर्षु समन्वितं एवं वाय्वादीनामपि तथा च स्वस्यार्द्धं अन्येषां पादार्द्धक्रमेण अर्द्धं मिलिला पञ्चीकृतं प्रत्येकं भूतपंचकं भौतिकसृष्टि समर्थमभूदिति भावः ३६ तदेव दर्शयति मिलितानीति ३७ तस्येति तैः पंचीकृतैः आण्डं ब्रह्माण्डमभूत् चतुर्विधो जरायुजस्वेदजाण्डजोद्भिज्जरूपः भूत

अविभक्ताः परे भागाः पंचैवासन्यथा पुनः त्यक्त्वा विभक्तमात्मानं स्वं सर्वैश्चान्यमन्वियुः ३६ मिलितानि यथा सम्यकृतानि पंचीकृतानि हि समन्वितानि पादांशैः स्वाधिक्यानामपूर्ववत् ३७ तस्यांशस्तैरभूदंडं भूतग्रामश्चतुर्विधः यथा कर्मानुसरणं पाकात्कालवृताद्भूत् ३८ भोगायतनमेतस्य जीवस्य सुखदुःखयोः पंचीकृतमहाभूतसंभवं कर्मसंचितम् ३९ शरीरं स्थूलमित्याहुः कोशोऽन्नमयसंज्ञतः पंचप्राणमनोबुद्धिदशेंद्रियसमन्वितम् ४० अपंचीकृतभूतोत्थं शरीरं सूक्ष्ममुच्यते अनाद्यविद्यानिर्वाच्या शरीरं कारणं भवेत् ४१ ॥ ७ ॥

ग्रामः यथाक्रमानुसरणं स्वीयपुण्यपापकर्माण्यनतिक्रम्य कालवृत्तात् पाकात् स्वीयकर्मबीजपरिपाकात् अभूत् ३८ सम्प्रति स्थूलादिशरीराणि वर्णयति भोगेति एतस्य जीवस्य सुखदुःखयोः भोगस्य साक्षात्कारस्य स्थानं पंचीकृतेभ्यो भूतेभ्यः संभवो यस्य तादृशं कर्मसंचितं शरीरं स्थूलमित्याहुरित्यग्रिमेणान्वयः ३९ तस्यैव स्थूलशरीरस्य अन्नमयकोशसंज्ञेत्याह कोशेति अथ लिंगशरीरं दर्शयति पंचेति एवं सप्तदशविकारात्मकं अपंचीकृतभूतोत्थं शरीरं सूक्ष्ममुच्यत इति सार्द्धेनान्वयः ४० कारणशरीरमाह अनादीति अनिर्वाच्या सदसद्विलक्षणत्वेन निर्वक्तुमशक्या अनाद्यविद्या कारणं शरीरं भवेत् ४१ ७ ७ ७ ७

अवस्थात्रयंवर्णयति जाग्रदिति अवस्थात्रयसाक्षिणोविश्वादीन्दर्शयति यस्येति ४२ तस्येति योगतः अवयवशक्तिवशात् चिदाभा सोविश्वः व्यावहारिकइत्यपि त्रीणिनामानिस्थूलशरीराभिमानिनोजीवस्यसंतीत्यर्थः ४३ तैजसमाह कोशेति प्राणमय मनोमय बुद्धि मयकोशत्रयात्मकंनित्यंतत्त्वसाक्षात्कारपर्यंत स्थायिलिंगशरीरंप्रविष्टः मानसंभोज्यंवस्तुभुंजानः योभिमन्यते तस्यनामान्यपि त्रिधेत्यन्वयः ४४ तान्येववैकारिकइति वैकारिकस्तैजसः स्वप्नकल्पितश्चेतित्रिधेत्यर्थः प्राज्ञंवर्णयति स्यादिति पारमार्थिकः

जाग्रत्स्वप्नसुषुप्त्याख्यास्तिस्रोवस्थाःशरीरिणः यस्यान्नमयचेष्टासुममाहमितिधीर्भ्रमः ४२ तस्याभिमानिनःसंति त्रीणिनामानियोगतः चिदाभासश्चविश्वस्यव्यवहारिकइत्यपि ४३ कोशत्रयात्मकंनित्यंप्रविष्टोयोभिमन्यते भुंजा नंमानसंभोज्यंतस्यनामान्यपित्रिधा ४४ वैकारिकस्तैजसश्चतथाचस्वप्नकल्पितः स्यात्पारमार्थिकःप्रा= ज्ञोह्यनच्छिन्नःसुषुप्तिगः ४५ नित्यंलिंगशरीरंतुनश्वरंस्थूलमुच्यते अंकुरंतियथावृक्षात्पत्राणिप्र तिवत्सरम् ४६ उत्पद्यंतेतथाभोक्तुःस्थूलदेहाःस्वकर्मभिः संसारेयावदज्ञानंभ्रममाणस्यदेहिनः ॥ ४७ ध्वंसायलिंगदेहस्यलोकोयंसंप्रकाश्यते ४८ इतिश्रीस्कांदेपपुराणेसप्तसप्ततितमोऽध्यायः ७७॥छ॥

प्राज्ञःसुषुप्तिकः इतिकारणशरीरावच्छिन्नःत्रिधास्यादित्यर्थः ४५ उक्तस्यशरीरत्रयस्यमध्येजननमरणादितत्संबंधतद्भावौ क स्येत्याशंक्य विशिनष्टि नित्यमिति लिंगशरीरंतु नित्यंप्रागुक्तरीत्या स्थूलंतु नश्वरमुच्यते एतेनमरणसंबंधोदर्शितः जननसंबंधमा ह अंकुरंतीति प्रतिवत्सरंवसंतादावित्यर्थः ४६ तच्च कियत्पर्यंतं तदाह संसारेइति भ्रममाणस्य कुलालचक्रवत् जननमरणप्र वाहेभ्रमतःजीवस्यसंसारे यावदज्ञानं तावत्स्थूलदेहाउत्पद्यंते इतिपूर्वेणान्वयः ४७ मुक्त्युपायंदर्शयति ध्वंसायेति लिंगदेहस्य

ध्वंसाय-अयंलोकःसंप्रकाश्यते मयेतिशेषः यावल्लोकेशरीरेंद्रियादिपाटवंपुरुषस्यतावदेवयतितव्यंनततइतिभावः महताषुण्यपुं
जेनक्रीतेयंकायनौस्त्वयातस्यावन्नभिद्येतभिन्नायांकिंततोभवेदित्युक्तेः तथाचलोकएवमुक्तिसाधनमपि तदभावे ज्ञानसाधनीभू
तगुरुशास्त्राद्यभावेनमुक्तिरपिनस्यादितिहृदयं ४८ इतिश्रीमानवल्युपनामकनृसिंहविरचितायांस्कंदपुराणव्याख्यायांभक्त
विलासप्रकाशिकायांसप्तसप्ततितमोऽध्यायः ७७॥ ॥ संप्रतिपरमकारुणिकः परमशिवःसाक्षान्निजपदंप्रत्युपायमुपदिशति बहूनि

श्रीअगस्त्यउ० शिववाक्यं बहूनिप्राप्यजन्मानिजंतुरंतेचजन्मनां यथामांमत्प्रसादेनप्राप्नोत्येवंनिबोधत १ नाना
विधेषुभूतेषुभ्रमतःकर्मभिर्जनैः ब्राह्मणत्वंभवेदिष्याजंतोर्ब्रह्मत्वसाधनम् २ यथाकार्कटिकीरेखापंकेताराय
तेक्वचित् तत्रदुस्संगसंत्यागात्संगतःसुलभासताम् ३ पुण्यतीर्थस्थलावासात्स्वधर्मपरिपालनात् नित्यमसू
ययास्तुत्यामत्कथाश्रवणेनच ४ सेवयाममभक्तानांभूतेषुसमदर्शनात् दृष्टादृष्टेषुवैराग्यात्सतिषिड्विवर्ज.
नात् ५ गुरोर्निर्व्याजयाभक्त्यामौनेनगुणदोषयोः अन्यैश्चनियमैर्युक्तःसत्काहंधीर्विनश्वरे ६ चिराच्चित्तपरीपाकात्सर्वं
ब्रह्मेतिधीमतःकार्यप्रपंचविलयोभवेन्मय्येवकारणे ७ पंचीकृतानांभूतानामपंचीकरणेकृते स्वस्वांशेस्वांशयोगेनयथाप्रो

तिबहूनांजन्मनामन्तेज्ञानवान्मांप्रपद्यतइतिस्मृतेः १ नानेति ब्रह्मत्वसाधनंमुक्तिसाधनंब्राह्मणत्वंदिष्यादैवयोगेनभवेदित्यन्वयः
२ उपमिनोति यथेति तथासतांसंगतिः सुलभेत्यर्थः संगःसत्सु विधीयतामिति भगवत्पादैः प्रथमोपदेशविषयतया सत्संगस्य नि
र्दिष्टत्वादितिभावः ३ उपायांतराण्याह पुण्येति ४ ५ ६ ७ एवंपरमेश्वरानुग्रहेण संजातचित्तपरिपाकस्य सर्वंखल्विदंब्रह्मे
तिजानतः दृश्यलयप्रकारंदर्शयति पंचीकृतानामिति प्राक्सृष्टिक्रमेपंचीकृतानांविभागपूर्वकंमिलितानांभूतानां अपंचीकृ

तेकरणेसतिस्वस्वांशे निजनिजभागेस्वांशयोगेन निजभागसंबंधेनयथाप्रोक्तानिअविभागावस्थायांकथितानिपंचपंचैवभूतानिप्रभु
द्भानिभवन्तीत्यर्थः ८ क्रमेणलयप्रकारमाह लीयतइति यतोयदुत्पन्नंतस्मिन् तल्लीयतइतिभावः ९ गुणेइति एवमाकाश
पर्यंतं लयेअयमप्याकाशः तमसिगुणे लीयतइतिभावः स्वाविद्यायाः स्व कीयाविद्याया विलयेसति सर्वसंसारमूलंमायाख्य
तंगुणंतत्रविस्मरेत् १० ननुचिरकालमनुभूतस्य विश्वस्यमिथ्याबुद्धिः कथंजायते तत्राह मदिति ममभक्त्यैव एवकारेणइत
रव्यवच्छेदः दृश्यंमिथ्याभवेदित्यर्थः ततः दृग्रूपोयोवशिष्टः सचाहमस्मिउपसंहरति इतीति ११ एतादृशज्ञानमपि नसर्वसुलभ

लीयतेपृथिवीवारिकारणेतत्रतेजसि वायोस्वकारणेचैतत्सोप्याकाशेस्वकारणे ९ गुणेतमस्ययमपिस्वावि
द्याविलयेसति सर्वसंसारमूलंतंमायाख्यंतत्रविस्मरेत् १० मद्भक्त्यैवभवेन्मिथ्यायोवशिष्टःसचास्म्य
हं इतिबंधस्यमोक्षस्यप्रकारःकथितोमया ११ एवंध्यात्वापुनर्जन्मशोकंतरतिकश्चन यदाचर्मवदा
काशंवेष्टयेयुरिमंनराः १२ तदायंमाममविज्ञायदुःखस्यांतंगमिष्यति ऋग्वेदादौविनिर्दिष्टंतथाथर्व
शिखासये १३ यत्तदेकमहंज्योतिरितिवेदांतनिर्णयः एवंभावयतेनित्यंयस्तिष्ठेत्संगवर्जितः १४ ॥ ७ ॥

मित्याह एवमितिकश्चनविरलः कश्चिन्मांवेत्तितत्वतइतिस्मृतेः पुनर्जन्मशोकं जन्मपदं मरणस्याप्युपलक्षणंजन्ममरणादिसंसार
दुःखमित्यर्थः तरति नसर्वोपीत्यर्थः ननुयतत्वांसर्वेषामपि कुतोनमुक्तिरित्याह यदेति इमंमहत्परिमाणमाकाशंचर्मवत् कृष्णा
जिनादिवत् वेष्टयेयुःसंकोचयेयुः १२ तदेति तस्मिन्काले मांअविज्ञाय अज्ञात्वा दुःखस्यसंसारस्य अन्तंगमिष्यति तथाच यथाच
र्मणइव आकाशवेष्टनंदुष्करंतथाममज्ञानंविनामुक्तिरपिदुर्लभेत्यर्थः तमेवविदित्वाऽतिमृत्युमेति मामेवयेप्रपद्यन्तेमायामेतांत

न्तिते इति श्रुतिस्मृतिबलादिति भावः॥ निजस्वरूपमेवकुत्रप्रदर्शितं तदाह ऋग्वेदादाविति १३ १४ १५ १६ एवंप्रतिपादितपुराण स्यश्रवणपठनादिमाहात्म्यंदर्शयति शिवेति शिवभक्तेन्द्राणांशिवाग्रणीनां माहात्म्यं यस्मिन् तदिदं आम्नायसंमितं वेदतुल्यं अतएव पावनं पुराणंश्रवणात् शंभोःप्रीतिकारकमित्यर्थः १७ पुराणपाठस्यस्थाननिर्दिशति आलये इति १८ नियममाह धृतेति १९ विधानमाह शिवेति २० अस्येति त्रिषष्टिभक्तकथानिबद्धस्य भक्तविलासाख्यस्यउपपुराणस्यशिवप्रीतिं विदधाति करो

तस्येदंशिनमस्कृत्यमुनयःपरमेश्वरं तदंघ्रिसेवयापश्यन्पारंमिथ्यामहोदधेः १५ सूतउवाच इत्युक्त्वा शिवभक्तानामग्रणीःकुंभसंभवः तापसैःपूजितःसर्वैस्स्वाश्रमंप्रत्यपद्यत १६ शिवभक्तेन्द्रमाहात्म्यमिदमाम्नायसंमितं पुराणंपावनंशंभोःश्रवणात्प्रीतिकारकम् १७ आलयेवामहेशस्य पुण्येवाथनदीतटे समाजेचद्विजेन्द्राणांपठितव्यंसमाहितैः १८ धृतत्रिपुंड्रुद्राक्षोगुरुंध्यात्वाशिवंहृदि वात्स्प्रसादमीशस्यनियमात्स्वयतीपठेत् १९ शिवभक्तगुरुंविप्रउपविश्योन्नतासने वाग्यतःप्रयतोभूत्वातनत्वाश्रृणुयादिमम् २० अस्यभक्तविलासस्यशिवप्रीतिविधायिनः पुस्तकानांशतंभक्त्याब्राह्मणेभ्योददातियः २१ शतरुद्रीयमन्त्रोक्तरुद्ररूपेणसर्वतः सर्वलोकाधिपोभूत्वाविहरेत्सजगत्त्रये २२

तीतितच्छीलस्य २१ शतेति शतरुद्रीय मन्त्रे रुद्राध्याये उक्तायेरुद्राःसहस्राणिसहस्रशोयइति मन्त्रप्रतिपादिताः तद्रूपेण सर्वतःसर्वप्रकारेण २२ विशेषानुष्ठानमाह एकादशेति एकादशभिरधिकंशतं ब्राह्मणान्निंशत्याद्याः संदेकत्वेइतिकोशात् शतशब्दस्य एकवचनान्तता पाठकत्वेनपाठकर्तृत्वेनवृणुयात् यथाशक्ति दक्षिणादिभिः वरणंकुर्यात् शिवसायुज्यसिद्धये इति

परमपुरुषार्थरूपमुक्तिफलप्रदर्शनं २२ एकादशेति व्रतीउपवासव्रतवान् दशांशतः होमादि इत्यादिपदेन तर्पणमार्जन ब्राह्मणभोजनान्त पञ्चाङ्गपुरश्चरणमुक्तं पुस्तकमिति जात्येकवचनं पुस्तकानीत्यर्थः २४ वस्त्रेति आद्यपदेन भूष्यान्न पानपात्रादि गृह्यते यथाविधि विधिमनतिक्रम्य सर्वकामानिति तत्रहेतुः शिव एवस्वयंभवेदिति शिवस्यआप्तसर्वकामत्वात्

एकादशाधिकशतंब्राह्मणान्भक्तिपूर्वकं वृणुयात्पाठकत्वेनशिवसायुज्यसिद्धये २३ एकादशदिनैरेतत्पुराणंवाचयेद्व्रती दशांशतश्चहोमादिकृत्वादत्वाचपुस्तकम् २४ वस्त्रालंकाररत्नाद्यैर्दक्षिणाभिर्यथाविधि सर्वकामान्लभेत्सत्यंशिवएवस्वयंभवेत् २५ चरित्रमेकमध्यायमेकंवाकर्णयेद्भक्तिमान् सर्वपापैःप्रमुच्येतः प्रीतस्तस्यशिवोभवेत् २६ ब्राह्मणोब्राह्मणाच्छ्रुत्वाशिवभक्तिपरायणः यंयंकामयतेकाममाप्नुयाद्चिरेणतम् २७ नियमादिदमाकर्ण्यवंध्यापिलभतेसुतं ब्रह्मचारीशुभांकन्यांभर्त्तारंकन्यकाप्नुयात् २८ क्षत्रियोब्राह्मणाच्छ्रुत्वाध्रुवंराज्यमवाप्नुयात् वैश्योजनःप्राप्यफलंशूद्रःसंपूज्यतामियात् २९ श्रुत्वासकृज्जातश्चमुच्यतेपापसंचयैः निर्धनोधनमाप्नोतिरोगीरोगाद्विमुच्यते ३० यशस्वीस्याद्यशस्कामोनिष्कामोमोक्षमाप्नुयात् नाध्वरैर्नतपोभिर्वानव्रतैरपिदुष्करैः ३१ तथाप्रीतिर्भवेच्छंभोर्यथास्यश्रवणाद्भवेत् श्रुत्वात्रिषष्टिभक्तानांचरितानिसदाशिवम् ३२ ध्यायतोहृदयांभोजेनास्तिकालभयंमहत् कलौयुगेविशेषेणपुराणभक्ति

तंयथायथोपास्ते तथैव भवतीतिभक्तस्यापि तत्फलमवश्यंभवतीति सूचयितुं सत्यमित्युक्तं २५ एकदेशश्रवणेपि सकलपापक्षयरूपंफलमाह चरित्रमिति २६ ब्राह्मणाच्छ्रवणे ब्राह्मणस्यविशेषफलमाह ब्राह्मणइति २७ अन्येषामपि तत्तत्कामनावतां

तत्र फलमाह नियमादित्यादिना २८ २९ ३० ३१ ३२ ३३ संप्रति सूतः स्वाहंकारपरिहारपूर्वकं मुनीन्प्रत्याह श्रोतव्यमिति य
थामति यथाज्ञानम् ३४ ३५ उपसंहरति सूत इति ३६ एवं पुराणश्रवणानन्तरं मुनीनां कृत्यमाह श्रीसूतेति ३७ संप्रति हरश्श
र्मा मुनिर्विनयपूर्वकं विद्वज्जनादरणं निजकृतेः प्रार्थयते वाणीति तत्रोपमा यथेति ३८ मधुरेण समापयेदिति न्यायेन ग्रंथांते आशी

श्रोतव्यमिदमेवात्र नान्यस्ति हि यतः क्वचित् यथामति मयोक्तं तद्युष्माभिश्च श्रुतं यतः ३४ तस्माद्यूयं वः
यं चापि नूनं धन्यतमास्स्मृताः जन्ममृत्युहरः श्रीमान्प्रसीदतु महेश्वरः ३५ सूत एवं मुनीननुज्ञाप्य हृष्ट एव ग
तेनसः कैलासशिखरस्याय शिवाय विदधे नमः ३६ श्रीसूतवक्त्राब्जमधुप्रवाहं पुराणसारं प्रमुरूपार्थहेतुम्
निशम्य हृष्टा मुनयश्च सर्वे तं सत्रयागं विधिवद्वितेनुः ३७ वाणी मदीयापि गुणेन हीना महेश्वरस्तोत्रपरेति
सद्भिः श्लाघ्या भवत्येव यथार्कपुष्पस्रग्गंधशून्या गिरिशप्रियेव ३८ वाणीवरप्रसादेन स्तुतिः शंभोर्विजृंभ
तां प्रसीदतु महादेवः शिवाय गुरवे नमः ३९ इति श्रीस्कांदोपपुराणे भक्तविलासे अष्टसप्ततितमोऽध्यायः
७८॥ ॥ सुंदरो नीलकंठश्च वैश्यो यः सुमतिर्मतः जयो मारश्च सत्पार्थो वीरमिंदःपदोद्भवः १ द्विजश्चामर
नीत्याख्यो दारको भक्तशेखरः अनपायनयो राजा भूपएनादिनामकः २ निषादश्च कलानाथो मानविक्र
मभूपतिः गोनाथो मूर्तिनाथश्च स्कंदनाथो द्विजोत्तमः ३ द्विजः पशुपति नंदी नीचश्च सविचारवान् ॥ ४ ॥

नैमित्तिक्रियादिरूपं मंगलमुपनिबध्नाति वाणीति ३९ इति श्रीमानवल्युपनामक नृसिंहविरचितायां स्कंदोपपुराणव्याख्यायां भक्त
विलासप्रकाशिकायां अष्टसप्ततितमोऽध्यायः ७८॥ ॥ संप्रति आदितः पुराणप्रतिपादितत्रिषष्टिशिवभक्तनामानि यथाक्र

संनिर्दिशति सुंदरइत्यादि १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ एतेष्वपिभक्तेषु प्राथमिकस्य शिवप्रतिबिंबरूपस्यसुंदरस्यप्राशस्त्यं द



चंडेशोरसनाराजस्तत्त्वसातिलकावती ४ कुलपक्षःपांड्यमंत्रीविद्याभूरोद्विजोत्तमः सापूतवत्यभूति
श्चनीलनग्नःकवीश्वरः ५ नवनंदीक्षपणकश्चसीचकलिकामजित् श्रीमूलनाथःसिद्धश्चदंडस्त्यागे
श्वरांघ्रिभाक् ६ शिवभक्तोर्चकःभूद्रोसोमयाजीशिवप्रियः शाक्यनाथोमुक्तसखोरुद्र शार्दूलनामकः
कः ७ दश्रभक्तश्चेरभूपगणनाथोद्विजोत्तमः परांतकनृपःसस्यदासनामाद्विजोत्तमः ८ धर्मकेतुः
प्रतापाख्योऽतिभक्तोधीवरोत्तमः चक्रीमानधनोराजाशक्तिर्गोपगणोलवः ९ अविकार्यभिरामश्च
निरुक्तिस्तापसोत्तमः सिद्धद्विजःकीर्त्तिसहःभूरव्याघ्रश्चभूपतिः १० पद्मावतीशंभुचित्तःगजलूतेचवि
श्रुते गौताकरोवेणकश्चभक्ताःषष्ठित्रयःस्मृताः ११ येप्रोक्तास्तेषुविज्ञेयःसुंदरःसहिसत्तमः ग्राहग्रस्तौ
द्विजसुतौयेनानीयतलीलया १२ श्रीऋषयऊवाच कथंद्विजसुतःकुत्रग्राहग्रस्तोमहामुने संमोचितः
कथंतेनसुंदरेणमहात्मना १३ श्रीअगस्त्यउ॰ अविनाशीतिजगतीप्रथितंपदमैश्वरं तत्राग्रहारस्सुमहा
न्शिवभक्तैरलंकृतः १४ सुहृदौतत्रचास्तांद्वौद्विजौसन्निहितालयौ तयोस्सुतावजायेतांमास्येकस्मिन्महा
त्मनोः १५ बाल्येतयोरभूत्सख्यंरामलक्ष्मणयोरिव कृतचौलौचतौकालेसंचरंतावितस्ततः १६ कदाचित्का
लगस्यैतौनिकटेसरसीगतौ गृहीत्वुमुसलंकश्चित्बाल्याद्वारिण्यवातरत् १७ कश्चित्स्थितस्तटेभीतोजले
ग्राहस्तमग्रहीत् सरुदन्मातुरागत्यतटस्थोमित्रमंभसि १८ मग्नंजगादसापित्रोरथसर्वैचसंगताः॥ ० ॥

र्शयति येइति १२ एवंप्राशस्त्यवर्णनेनपुनरपि ऋषीणांअत्यासक्ततया अगस्त्यंप्रति तन्माहात्म्यजिज्ञासांतावदाह कथमिति १३ तदाक

र्ये कुम्भसम्भवः तेषां बुद्ध्यारोहाय पुनरेकामाख्यायिकामाह अविनाशीति १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५
२६ २७ सुंदरेशेनेरेधिकमिति तृतीयाध्याये सुंदरायददौ सर्वास्वशक्तिं सुन्दरेश्वरइति परमशिवप्रतिबिंबतयाचिदाभासरूपस्य
तदेवानुप्राविशदिति श्रुत्याप्रवेशितसर्वशक्तिकस्य सुन्दरस्य आधिक्यमुपक्रान्तं तदेवपुनरुपसंहारे प्रदर्श्य उपक्रमापेक्षया
उपसंहारस्य प्राबल्यं दर्शयितुं दृयमुक्तिः उपक्रमोपसंहारयोः कस्यप्राबल्यमितिविचारे श्रीकंठविद्याचार्ये श्रीमदप्पय्य

अवतीर्यजलेबालमन्विष्यासायमाकुलाः १९ अदृष्ट्वाशोकसंतप्ताःप्रागुर्वेश्मानिनागराः तन्मातापितरौखिन्नौ
वेकपुत्रौश्रुचातुरौ २० गमयामासतुःकालंसार्द्धसंवत्सरद्वयं एतस्मिन्समयेश्रीमान्सुंदरःसूक्तिसुंदरः २१ गीतांतांश्रु
तिसाराख्यांपठन्त्यागेश्वराज्ञया तत्रतत्रपदेशैवेक्रमात्तक्षेत्रमाविशत् २२ तदायथौमृतसुहृदुपनीतोद्विजार्भकः
ननामनक्रग्रस्तस्यमातरंमातरंयथा २३ तन्मित्रमनुसंचिंत्यस्वपुत्रंतुल्यवार्षिकं रुरोदोपनयोऽस्यस्याद्यदिमेनमृ
तःसुतः २४ इतितस्यांरुदत्यांतुसुंदरःपरमेश्वरं नत्वास्तुत्वाद्विजैःसार्द्धप्रदक्षिणकृदाययौ २५ शुश्रावरुदितं
तस्यामृतमातुस्थितःक्षणं किमेतदितिपप्रच्छजनास्तद्वृत्तमूचिरे २६ निवार्यरुदितंतस्यास्तुष्टावपरमेश्वरं अ
थाज्ञयामहेशस्यग्राहस्तंद्विजनंदनम् २७

दीक्षितैः उपक्रमपराक्रमेप्रतिपादितं तथाहि आकाशस्तल्लिंगादित्यधिकरणे भूताकाशपरत्वेनपूर्वपक्षमुत्थाप्य सर्वकारणत्वादि
लिंगेनब्रह्मपरतया उपसंहारःकृतः तल्लिंगादित्येकवचनस्वारस्येनभूयस्त्वानपेक्षेण केनचिदेवलिंगेनश्रुतेरन्यथानयनंविवक्षि
तमिति प्रतीतेश्चनचोपसंहारगतस्यापि सर्वकारणत्वादेरन्यथा सिद्धत्वंप्राबल्येहेतुः आकाशाद्वायुरित्यादिश्रुत्यन्तरसिद्धभूताका

गगतवाय्वादिसर्वभूतकारणत्वाभिप्रायेण सर्वकारणत्वव्यपदेशः अग्निमसंदर्भोपि वायोरितरभूतलयस्थानत्वं तदपेक्ष्यज्यायस्त्वादिविषयइतिसर्वेषामन्यथानेतुंशक्यत्वात् नचाकाशादेवसमुत्पद्यन्तइतिसावधारणंकारणत्वंभूताकाशेनसंभवतितस्यतेजःप्रभृतिकारणत्वे वाय्वादिकारणान्तरसापेक्षत्वादितिशंकनीयं ब्रह्मणोवैषम्यनैर्घृण्येनसापेक्षत्वादितिन्यायेन जगत्स्रष्टौकालादृष्टादिसापेक्षत्वेनसाम्यात् कथंचिदवधारणसमर्थनस्य भूताकाशेपिसंभवात् तस्मात्प्रकारांतरासंभवादुपसंहारगतमेवलिङ्गस्यप्राबल्ये हेतुरितिसिद्धमुपसंहारप्राबल्यापेक्षणमित्युपस्थाप्य समाप्तावपिसिद्धान्तितं तद्यथा एवंच सक

सम्पूर्णगणंसांगमुद्वामसुखात्स्वकात् ॥ सर्वैस्तुवि
स्मयाविष्टाः सुंदरंमेनिरेऽधिकम् २९ ॥ ७ ॥

लमीमांसाव्यवहारविरुद्धोनयसरणिग्रंथानभिज्ञैरर्वाचीनैः स्वमतस्यपरमतवैलक्षण्यप्रकटनायकल्पितोयमुपक्रमोपसंहारबलाबलव्यवस्थयोयवनगुरूपदिष्टशौचमुखक्षालनयोर्वापर्यव्यवस्थवदुपेक्षणीयःप्रामाणिकैरितिसिद्धमित्यंतेन तथाच उपक्रमेपरमशिवप्रसादेन सुंदरस्याधिक्यमुपक्रम्य समाप्तावपि तस्यैवाधिक्यवर्णनेनपरब्रह्मणस्तेजोघनस्य विस्फुलिंगाकारजीवस्य निजस्वरूपप्राप्तिमुक्तस्वरूपमाधिक्यमिव निजप्रतिबिम्बरूपस्य सुंदरस्य पुनर्निजतदात्म्यसम्पादनरूपकैवल्यमुक्तिरेवस

कलाधिकमितिदर्शितं इयंचकथास्कंदपुराणेनवमांशे संक्षेपेणदर्शिता तामवलंब्य परमकारुणिकेन हरशर्म्म नाम्नामुनिना लोकानुजिघृक्षया उत्तमभक्तान्तरकथाअपि संगृह्य कुम्भसम्भव शौनकादिसंवादमुखेन दर्शितेतिसंक्षेपः २८ तारण जेष्ठ पूर्व

इतिश्रीस्कंदोपपुराणेभक्तविलासेसुंदराधिक्यवर्णनंनामएकोनाशीतितमोऽध्यायः ७९

आदित्यान्वयशेखरस्त्रिभुवन प्रख्यातकीर्त्ति
र्व्रजो दोर्दण्डाञ्चितखड्गखण्डितरिपु र्विश्रा
णानस्वस्तरुः॥ श्रीमन्माधवसिंहनामनृपति
र्योविश्रुतोदोमुदा मन्नालालबुधेनकाशिन
गरे तस्याज्ञयामुद्रितम्॥ ॥ ॥ ॥ ॥



र्थे द्वितीयास्थिरवासरे॥ मानवल्लीनरसिंहेन कृतिरेषासमापिता॥ इतिश्रीमानवल्युपनामकनरसिंहविरचितायांस्कंदोपपुराणव्याख्यायांभक्तविलासप्रकाशिकायामेकोनाशीतितमोऽध्यायः ७९॥ ॥ ॥ ॥ ॥ ॥ ॥

